# काशिकायां द्वितीयाध्यायं वार्तिकानां विशिष्टमध्ययनम्

विद्यावारिधि (पी-एच० डी०) इत्युपाधये प्रस्तुतः शोध-प्रबन्धः




निर्देशक :
डॉ० पं० श्रीरामयत्नशुक्लः
आचार्य एवमध्यक्षः
वेदवेदाङ्गसङ्कायाध्यक्षः
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसेयस्य

अनुसन्धाता
अमरचन्द्रः ब्रह्मचारी
(ब्रह्मप्रकाशः ब्रह्मचारी)
प्रबन्धकः
ब्रह्मानन्द-संस्कृत-महाविद्यालयस्य
राठ, हमीरपुर, उ०प्र०

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः, वाराणसी

रामनवमी, २०४३ अप्रैल, १९८६

# काशिकाया आद्वितीयाध्यायं वार्तिकानां विशिष्टमध्ययनम्

विद्यावारिधि (पी-एच० डी०) इत्युपाधये प्रस्तुतः शोध-प्रबन्धः





निर्देशक :

डॉ० पं० श्रीरामयत्नशुक्लः
आचार्य एवमध्यक्षः
वेदवेदाङ्गसङ्कायाध्यक्षः
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसेयस्य

अनुसन्धाता

अमरचन्द्रः ब्रह्मचारी
(ब्रह्मप्रकाशः ब्रह्मचारी)
प्रबन्धकः
ब्रह्मानन्द-संस्कृत-महाविद्यालयस्य
राठे, हमीरपुरे, उ०प्र०



सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः, वाराणसी

रामनवमी, २०४३ अप्रैल, १९८६

## निर्देशक: प्रमाणपत्रम्

विद्यावारिध्युपाधये श्रीमदमरचन्द्रब्रह्मचारि नामकेनानुसन्धात्रा काशिकाया आद्वितीयाध्यायं वार्तिकानां विशिष्टमध्ययनमिति विषयमधिकृत्य मन्निर्देशने सम्यगनुसन्धाय शोधप्रबन्ध: पूर्णतां नीत: । तमेनम्परीक्षणार्थमग्रेसारयति -

रामयत्न शुक्ल:
२१/४/८८

(रामयत्नशुक्ल:)

## भूमिका

ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति श्रुत्या षडङ्गवेदाध्ययनज्ञानकर्त्तव्यता नित्यकर्मतया बोध्यते । स्वाध्यायोऽध्येतव्य इत्यादिना च स्वाध्यायरूपवेदाध्ययनं नित्यं कर्म । वेदशब्देन च तत्राङ्गानामपि ग्रहणम् । निरपेक्षरवो वेदः, अपौरुषेयः ऋग्यजुः सामाथर्वलक्षणः । सर्वज्ञकल्पः सर्वविद्याधिष्ठानभूत इति विदुषां नातिरोहितम् । अङ्गानि च व्याकरणनिरुक्तशिक्षाकल्पछन्दो ज्योतींषि षट् सन्ति । अङ्गत्वमुपकारकत्वम् । तेषु षट्सु व्याकरणस्यैव प्राधान्यम् । उक्तञ्च महाभाष्ये व्याकरणप्रयोजनप्रदर्शनावसरे भगवत् पतञ्जलिना "आगमः खल्वपि ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च" इति । प्रधानञ्च षट्स्वङ्गेषु व्याकरणम् । प्रधाने च कृतो यत्नः फलवान् भवति ।[1]

वाक्यपदीयेऽपि उक्तम् -

आसन्नं ब्रह्मणस्तस्य तपसामुत्तमं तपः ।
छन्दसां प्रथममङ्गं प्राहुर्व्याकरणं बुधाः ।।

{ब्रह्मकाण्डे}

प्राधान्यञ्चास्य शब्दमयवेदस्य साधुत्वसम्पादनद्वारा साक्षादुपकारक-

---

1- महा० - पृ० 15.

त्वेन । व्याकरणं नाम प्रकृतिप्रत्ययव्युत्पत्तिद्वारकसाधुत्वबोधकं शक्तिग्रहप्रधानोपायभूतं शब्दशास्त्रम् । तच्चातीवमहत्त्वं भजते ।

व्याकरणशास्त्रस्योद्भवः

सर्वेषां विद्यानां तद्विषयाणाञ्च आदिकर्ता ब्रह्मैव । ब्रह्मा च वृहस्पतये प्रोवाच । देवगुरुः वृहस्पतिः प्रवक्ता व्याकरणशास्त्रस्य इन्द्राय शिष्याय देवराजाय प्रथमं व्याकरणशास्त्रम् उपदिदेश । उक्तञ्च महाभाष्ये - "एवं हि श्रूयते वृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच नान्तं जगाम" [1] इति । इन्द्रश्च देवेभ्यो व्याकरणमुपदिदेश । श्रूयते च - "ते देवा इन्द्रमब्रुवन् इमां नो वाचं व्याकुरु" इति देवेभ्यः ऋषयो व्याकरणं प्राप्नुवन्तः । ऋषिभ्यश्च ब्राह्मणान् आजगाम । एवं परम्पराप्राप्तं शब्दशास्त्रम् अद्यावधि पठ्यते पाठ्यते च ।

भाषायाः विकाशानुपदमेव व्याकरणस्योद्भवोऽभूदित्यत्र नास्ति संदेहः । प्रथमं देवा अव्याकृतामेव वाचं वदन्ति स्म । पश्चाच्च व्याकृतिर्जाता । तथा च श्रुतिः - "वाग् वै पराच्यव्याकृता अवदत् । ते देवा इन्द्रमब्रुवन् इमां नो वाचं व्याकुरु इति" । एवञ्च इन्द्रो व्याकरणस्यादिकर्ता इति निश्चीयते । तत् पूर्वं तु प्रतिपदपाठ एव प्रचलितः । श्रूयते खलु - "तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत् तस्मादियं व्याकृता वागुद्यते (तैत्तिरीये षष्ठकाण्डे)

---

1- महा० - पृ० 34.

व्याकरणभेदा:

व्याकरणानि बहूनि श्रूयन्ते यथा -

इन्द्रश्चन्द्रः काशकृत्स्नापिशलिशाकटायनः ।
पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादि शाब्दिकाः ।।

इत्यभियुक्तोक्तिमनुसृत्य अष्टभिरादिशाब्दिकैः कृतानि अष्टव्याकरणानि प्रसिद्धानि । क्वचिच्चैवं श्रूयते -

ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम् ।
सारस्वतं चापिशलं शाकलं पाणिनीयकम् ।।

एवञ्च व्याकरणशास्त्रस्य नानात्वं नातिरोहितम् । पाणिनिव्याकरणेऽपि बहूनां व्याकरणकर्तॄणामाचार्याणां नामानि आचार्येणैव सूत्रितानि । यथा -

वा सुप्यापिशलेः {6/1/95}
सम्बुद्धौ शाकल्यस्येतावनार्षे {1/1/16}
इको ह्रस्वोऽङ्यो गालवस्य {6/3/61}
नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम् {8/4/67}
ओतो गार्ग्यस्य {8/3/20}
अवङ् स्फोटायनस्य {6/1/123}

एवं पाणिनीये शाकल्यगालवापिशलिगार्ग्यकाश्यपस्फोटायनसेनकचाक्रवर्मणभारद्वाजशाकटायनादीनामाचार्याणां मतोल्लेखपूर्वं नामानि पठितानि । अतो ज्ञायते

पाणिनेः पूर्वमेतेषामाचार्याणां व्याकरणं प्रसिद्धमासीदिति ।

पाणिनीय व्याकरणस्य महत्त्वम्

इदमपि नातिरोहितं यत् एतेषु अष्टसु प्रसिद्धेषु व्याकरणशास्त्रेषु पाणिनीयाष्टाध्यायी नामा ग्रन्थोऽतिमहत्त्वं भजते । अत एव लघुशब्देन्दुशेखरे संज्ञाप्रकरणे उक्तम् - "अस्यैव वेदाङ्गत्वमिति" सम्प्रति वेदाङ्गत्वेन व्याकरणं पाणिनीयमेव गृह्यते ।

लघुनोपायेन समस्तस्य लौकिकवैदिकशब्दौघस्य व्युत्पादनमनेन पाणिनीयशास्त्रेण अष्टाध्यायी परिमितेन क्रियते इति वैशिष्ट्यमस्य । अन्यानि व्याकरणशास्त्राणि लौकिकान् शब्दान् एव व्याकुर्वन्ति न वैदिकान् । पाणिनीयं तु शास्त्रमुभयविधं शब्दराशिं व्युत्पादयति । उक्तञ्च महाभाष्ये - "प्रथमाह्निके "केषां शब्दानां लौकिकानां वैदिकानामिति" । पाणिनीयाष्टाध्यायीग्रन्थस्य वैज्ञानिकत्वं प्रसिद्धम् । सर्वाणि सूत्राणि प्रकरणानि च सुसम्बद्धानि सन्ति । येन तेषां ज्ञानं सुतरां जायते । तद्यथा सर्वनामेत्संज्ञात्मनेपदसंज्ञा-परस्मैपद-संज्ञा, कारकविभक्ति-समासादिसंज्ञा सूत्राणि परस्परसम्बद्धानि सन्ति । तेषां ज्ञानं पदानुवृत्त्या सरलतया जायते । अन्यच्च णत्व-षत्व-दीर्घ-ह्रस्व-सुगनुडा-दिविधायकानि शास्त्राणि उत्सर्गापवादरूपेण एकत्रैव पठितानीति तेषां ज्ञानं सुलभं भवति ।

किञ्च वृत्तिं विनैव पूर्वसूत्रानुवृत्त्यादि द्वारा सूत्रार्थः सरलतयाव-

गम्यते । सूत्राक्षराणि अपि सुगमानि सुन्दराणि सुसज्जितानि सन्ति येन तेषां कण्ठस्थीकरणं सरलतया भवति । तद्यथा -

§1§ ग्रसितस्कभितस्तभितोत्तभितचत्तविकस्ताविशस्तृशंस्तृशास्तृतरुतृतरूतृ-
वरूतृवरूत्रीरुज्ज्वलिति क्षरिति वमित्यमितीति च §§7/2/34§

§2§ तुमर्थे से सेनसे असेन् कसे कसेन ध्यैन् कध्यैन शध्यै शध्यैन्तवै तवेङ्·तवेन:
§3/4/49§

अत एव सर्वै-र्विद्वभि: पाश्चात्यैरपि पाणिनीयव्याकरणस्य महत्त्वं प्रतिपाद्यते । तत्र महाभाष्यकारैरुक्तम् -

1- प्रमाणभूत आचार्योदर्भपवित्रपाणि: शुचावकाशे प्राङ्·मुख उपविश्य महता प्रयत्नेन सूत्राणि प्रणयति स्म । तत्राशक्यं वर्णेनापि अनर्थकेन भवितुं पुनरियता सूत्रेण[1] ।

2- पुनरप्युच्यते महाभाष्यकारैरेव - "सामर्थ्ययोगान्नहि किन्चिदस्मिन् पश्यामि शास्त्रे यदनर्थकं स्यात्[2]"।

3- जयादित्योऽपि उदक् च विपाश: §4/2/74§ इति सूत्रे वृत्तौ आह - "महती सूक्ष्मेक्षिका वर्तते सूत्रकारस्य" ।

4- पदमन्जरीकार: करदत्तमिश्र: अप्याहु: -

- - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- महा0 1/1/1 - पृ0 134·

2- महा0 6/1/77·

मनसा वचसा च कर्मणा कृत एवायमिहान्निवेशित ।
नहि दर्भपवित्रपाणिताद्यपरं मङ्गलमत्र कीर्त्यते ।।

5- चीनदेशीयो यात्री ह्यूनत्साङ्गश्चेत्थमाह - "महर्षि: पाणिनि: पूर्णमनोयोगेन शब्दभण्डागारत: शब्दराशिं सन्चेतुमारब्धवान् 4,000 सूत्रेषु सर्वा व्युत्पत्ति: समाप्ता: । शब्दाक्षरविषयकं किमपि ज्ञानं नावशिष्टमभूत् ।

6- मोनियरविलियम्सश्चाह - संस्कृतव्याकरणं (पाणिनीयाष्टाध्यायीग्रन्थ:) मानवमस्तिष्कस्य प्रतिभाया आश्चर्यतमो भागोऽस्ति । यो मानवमस्तिष्कस्य समक्ष आगत:" ।

7- हण्टरश्चाह "मानवमस्तिष्कस्यातीवमहत्त्वपूर्ण आविष्कारोऽष्टाध्यायीग्रन्थ: ।

8- प्रो० टी० शेखात्स्की प्राह - मानवमस्तिष्कस्य सर्वश्रेष्ठ: रचनेयमिति ।

एवमष्टाध्याया महत्त्वं सुप्रसिद्धमिति तत्र किं वक्तव्यम् ।

पाणिनि:
--------

वैयाकरणानां महान् तत्र भवान् पाणिनि महानादरोऽस्य संस्कृतवाङ्मये । शब्दसाधुत्वप्रमाणभूताश्चाचार्योऽयं क्व-देशे काले आविर्भूत इति न निर्विवादम् । इतिहाससम्मतं किन्चित् अत्रोच्यते । महाकविगुणाढ्य रचितां वृहत्कथामाधारीकृत्य विरचिते कथा सरित् सागरे पाणिनि कात्यायनयोर्वृत्तं वर्णितमस्ति । तदनुसारं पाणिनि: पाटलिपुत्रेऽध्ययनं चकार । मन्दबुद्धितया-

ध्ययनेऽशक्तस्तपश्चचार । तपसा तोषितमहेश्वरात् व्याकरणशास्त्रमवाप्तवान् । कात्यायनेन सह शास्त्रार्थमकरोत् । महेश्वरहुंकारेण कात्यायनाधिगतैन्द्रव्याकरणस्य नाशः । ऐन्द्रव्याकरणनाशात् क्षुब्धः कात्यायनो महेश्वरं सम्पूज्य तपसा संतोष्य पाणिनीय व्याकरणपूर्त्तिशक्तिं लब्धवान् । तत्कालिको राजा नन्दः पाणिनीं सादरं पूजयामासेत्यादिवृत्तं तत्र विमर्श वर्णितम् । अनेन पाणिनेः नन्द समकालिकत्वं गम्यते । पाणिनि-कात्यायनयोश्च समकालिकत्वं सिध्यति । नन्दराज्यकालमाधुनिका ऐतिहासिका यीशुतः पूर्वं चतुर्थीशताब्दीं मन्यन्ते ।

पुराणे तु - आरभ्य भवतो जन्म यावन्नन्दाभिषेचनम् ।
एतद्वर्षसहस्रं तु शतं पञ्चदशोत्तरम् ॥1

इति परीक्षितो जन्मतः ।।।5 वर्षेभ्यो पश्चात् नन्दराजाभिषेचनमिति । कलेश्चाद्यत्वे 5055 वर्षाणि व्यतीतानि ततः ।।25 वर्षाणि निःसारितानि चेत् 3940 वर्षेभ्यः पूर्वं (ईशातः पूर्वं विंशतितम्यां शताब्द्याम्) नन्दराज्यारम्भकालः भवति । एवं प्रमाणेन यदि नन्दराजसमकालीनः पाणिनिस्तदा ईशातः विंशतितमशताब्दी तस्य कालः ।

केचित्तु राजतरङ्गिणीरीत्या ईशातः पूर्वं सप्तमी अष्टमी वा शताब्दी नन्दराज्यकाल इति साधयन्ति । एवञ्चाद्यावधि न निर्णीताः कालः ।

त्रिकाण्डशेषे कोषे पाणिनिनामसु शालातुरीय इति पठनात् । गणरत्नमहोदधौ च जैनलेखकेन वर्धमानेन, "शालातुरो ग्रामः, सोऽभिजनोऽस्या-

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- श्रीभागवते - 12/2/26.

स्तीति शालातुरीयस्तत्र भवान् पाणिनिरिति विवरणात् । भगवतः पाणिनेः शालातुरो ग्राम इति निश्चीयते ।

काशिकाव्याख्यानभूते न्यासग्रन्थेऽपि {5/1/1} सूत्र व्याख्यायां पाणिनेः शालातुरीयत्वं सिध्यति । एवमन्यैः शिलालेखादि प्रमाणैरस्य शालातुर-ग्राम इति सिध्यति ।

स च शालातुरग्राम क्वेति निर्णयोऽपि चीनदेशीयेन यात्रिणा ह्वेनत्साङ्गेन कृतः । अयं शालातुरग्रामो गान्धारदेशे उद्भाण्ड इति प्रसिद्धात् स्थानात् निकटे लहुरग्रामसमीपेऽस्ति । गान्धारदेश इदानीं कान्धार नाम्ना प्रसिद्धः । उद्भाण्डपुरन्चेदानीम् ओहिन्दनाम्ना प्रसिद्धम् । कुभायाः {काबुल-नद्याः} सिन्धोश्च सङ्गमस्थाने अस्ति । तत्रैव पश्चिमोत्तरस्यां दिशि लहुर-नामको ग्रामः । तावत्येव दूरे इदानीमपि प्रसिद्ध इति । तद् समीप एव शाला-तुर-ग्राम आसीदिति । पन्चददेशे प्रसिद्धानां शब्दानां सूक्ष्मान्तरेण व्युत्पादनमपि पाणिनेस्तद्देशीयत्वं गमयति । यथा उदक् च विपाशः {4/2/77} इति सूत्रेण विपाशो नद्या उत्तरकूले स्थितानां कूपानां वाचकेषु शब्देषु अन्प्रत्ययो विधीयते, विपाशो दक्षिणभागे स्थितानां तु वाचकेषु अणुप्रत्ययः । अणनोश्च केवलं स्वरे भेदः। सोऽयं सूक्ष्मोऽपि भेदस्तेनान्वाख्यातः । पन्चनदेषु भ्रमणं पाणिनेरवश्यं सिध्यति । पाटलिपुत्रे वर्षाचार्यसमीपेऽध्ययनं तु आधुनिका काल्पनिकं मन्यन्ते कथासरित्-सागरस्यापि प्रामाण्यं नाङ्गीकुर्वन्ति तस्मात् तत्रैव तक्षशिलायां पाणिनेरध्ययनं जातमिति तेङ्गीकुर्वन्ति ।

पाटलिपुत्रे च पाणिनेः सम्मानं जातमिति सम्भवति । तत्काले पाटलि-

पुत्रे शास्त्रकाराणां परीक्षा भवति स्मेति ज्ञायते राजशेखरेणोक्तम् -

अत्रोपवर्षवर्षाविह पाणिनि पिङ्गलाविह व्याडिः ।
वररुचिपतन्जली इहपरीक्षिताः ख्यातिमुपजग्मुः ।।

प्राच्यदेशप्रसिद्धानां शब्दानां क्रीडावाचकादीनान्च व्युत्पादनं पाणिनेः प्राच्यदेशभ्रमण साधयति । एवन्चास्य देशविषये नास्ति विप्रतिपत्तिः ।

कालविषये च महती विप्रतिपत्तिः । ईशातः प्राक् चतुर्थ्यां पन्चम्यां वा शताब्द्यां पाणिनिराविर्भूत इति केषान्चिदाधुनिकानां मतं तेहि एवं प्रतिपादयन्ति ।

1- पाणिनिर्भवतो बुद्धात् अर्वाचीनः । कुमारश्रमणादिभिः श्रमणशब्दो बौद्धपरिव्राजकेषु प्रसिद्धः । श्रमणादिगणे स्त्रीलिङ्गश्रमणाशब्दपाठादपि । तद् गम्यते स्त्रीणां सन्यासग्रहणं बौद्धेषु प्रसिद्धम् । बुद्धश्च ईशातः प्राक् सप्तम्यां शतब्द्यां जात इति तस्मात् बुद्धात् अर्वाचीनः पाणिनिः चतुर्थ्यां पन्चम्यां वा शताब्द्यां जात इति ।

2- पन्चद्दशतौ वर्गे वा §5/1/60§ इति सूत्रेण पाणिनीयेन पन्चानां वर्गः पन्चद्, दशानां वर्गो दशत्, विकल्पे च पन्चकः दशक अतिप्रयोगाः सिध्यन्ति । अयं पन्चत् दशशब्दो बौद्धैरेव प्रचारितः । बौद्धग्रन्थे इमौ शब्दौ प्रचलितौ । एवन्च पाणिनेर्बुद्धात् अर्वाचीनत्वं गम्यते ।

3- पाटलिपुत्रनगरनिर्माणं बुद्धदेवस्य जीवितावस्थायामेवारब्धमिति बौद्धग्रन्थेभ्यः प्रतीयते । तस्य नगरत्वप्राप्तिः, तत्र राजधानीप्रतिष्ठापनम्, तदुत्तरं -

पाणिनिर्जातः । तत एव तद्रचितस्य ग्रन्थस्य नन्दराजधान्यां पाटलिपुत्रे परीक्षणं सम्भवति, इति बुद्धादेवाद् द्वित्रशताब्दीपरत्वमेवास्य सम्भाव्यते । तस्मात् पन्चमी चतुर्थी वा शताब्दी सुयुक्तोऽस्य कालः ।

4- नन्दराज्ये पाणिनीयव्याकरणस्य या परीक्षा उक्ता, बौद्धग्रन्थे च यत् पाणिनेर्नन्दराजेन सख्यमुपवर्णितम्, तदप्येवमुपपद्यते । नन्दराजस्य चतुर्थ्यां पन्चम्यां वा ईशातः प्राक् शताब्द्यामेवैतिहासिकैरवधारणात् ।

5- कीथप्रभृतय आङ्गलास्तु वदन्ति, यद् "इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक्" इति सूत्रे यवनशब्दपाठो दृश्यते । इह यवनशब्देन न माहम्मदाः परिचेतुं शक्यन्ते, यतो ह्येतन्मतप्रवर्तकस्य श्रीमहम्मदमहाभागस्य जातस्य चतुर्दश्येवेयं शताब्दी । पाणिनिस्तु ततो बहुपूर्वज इति । तस्माद् यूनानदेशवास्तव्या एवेह यवनशब्देनोपात्ता इति स्फुटमेव । यूनानदेशीयानां परिचयश्च "ग्रेट अलैग्जण्डर" सिकन्दरस्य भारताक्रमणकालादेव भारतीयैः प्राप्त इति सिकन्दराक्रमणादर्वागेव ईशातः पूर्वं चतुर्थी शताब्द्येव पाणिनेः कालो भवितुमर्हति, न ततः प्रागिति ।

ता एता अर्वाचीनत्ववादिनां युक्तयः । प्राचीनत्ववादिनस्तु नैता दृढा मन्यन्ते । एवमुत्तरयन्ति च -

(1) श्रमणशब्दोऽयं न बौद्धोपज्ञम् - शतपथब्राह्मणे 14 काण्डे 7 अध्याये 1 ब्राह्मणे 22 कण्डिकायामपि स्पष्टं श्रूयमाणत्वात्, तत्र हि सुषुप्त्यवस्थानिरूपणप्रसङ्गे सर्वोपाधिविनिवृत्तिप्रतिपादने (अत्र पिता अपिता

भवति, माता अमाता, लोका अलोकाः, देवा अदेवाः - - - - - श्रमणो अश्रमणः, तपसो अतापसः॥ इत्यादि श्रूयते । इह परिव्राजकाभिप्रायेणैव श्रमण-शब्दः प्रयुक्त इति स्फुटं शाङ्करभाष्यादिषु । संन्यासश्च याज्ञवल्क्यस्य तदुप-देशान्मैत्रेय्याश्चापीहैव काण्डे ॥बृहदारण्कोपनिषत्सु॥ श्रुत इति श्रमणपदेन श्रमणा-पदेन वा न बुद्धदेवादर्वाचीनत्वं शक्यं कल्पयितुम् । किं च बौद्धमतमपीदं न शाक्य-सिंहादेव प्रवृत्तम् अपि तु बहुप्राचीनम् । "कथमसतः सज्जायते" इत्यादिना उप-निषत्स्वेव बौद्धमतानुवादनिराकरणयोर्दर्शनात् । वाल्मीकीयरामायणादावपि स्वयं रामेण बौद्धमतस्योल्लेखकरणात् । बौद्धग्रन्थेष्वपि शाक्यसिंहोऽयमन्तिमो बुद्धः स्मर्यते, ततः पूर्वं प्रादुरभूवन् बहवो बुद्धाः इति स्फुटमेव । ततश्च बौद्धमतप्रचारा-दर्वाचीनत्वे पाणिनेः सिद्धेऽपि न शाक्यसिंहादर्वाचीनत्वं कथमपि सिद्ध्यति । वस्तुतस्तु ब्राह्मणशब्दः श्रमणशब्दश्चेति द्वावपि शब्दौ विज्ञानमूलकावतिप्राचीनौ । ब्रह्मशब्दो हि "ज्ञान" पर्यायः, श्रमशब्दश्च क्रियापर्यायः । तत्र ब्रह्मैवेदं सर्वमिति य आतिष्ठन्ते, ते ब्रह्मैकाद्वयवादिनो ब्राह्मणाः, क्रियैव ॥श्रम एव॥ सर्वमिदम्, नातोऽन्यद् ब्रह्मास्तीति येऽभ्युपगच्छन्ति, ते श्रमैकाद्वयवादिनः, श्रमणाः । ज्ञानैकाद्वयवादः श्रमैकाद्वयवादश्चानादेः कालात् प्रवृत्त इति श्रमणशब्दाधारेण काल-निर्णयोऽयं वैदिकपरिभाषानभिज्ञानामेव शोभते, न तु विवेकानाम् ।

॥2॥ पन्चदृदशादाविशब्दाः पन्चानां दशानां च वर्गे शाक्यसिंहात्पूर्वमपि प्रवृत्ताः स्युः, पूर्वभवां प्रक्रियामेवानुसृत्याधुनिकैर्बौद्धैस्तथा वर्गा विरचिताः स्युरि-त्यपि बहुलं सम्भाव्यते । बहुत्र बौद्धैः प्राक्तनी प्रक्रियानुसृता स्फुटं प्रतीयते। तस्मान्नेदमपि दृढं प्रमाणम् । यथा च नन्दराज्यादीनां काले विप्रतिपत्तिः,

तथा भगवतः शाक्यसिंहापरपर्यायस्य बुद्धदेवस्य कालेऽपि पौराणिकानां विप्रतिपत्तिरस्त्येवेति शाक्यसिंहात्परभवत्वेऽपि पाणिनेरविप्रतिपन्नः कालो न सिद्ध्यत्येव । श्रीदेवसहायत्रिवेदिप्रभृतय इतिहासविचक्षणाः सर्वामिपि आधुनिकानां कालकल्पनां युक्तिभिः खण्डयन्ति, सहस्राधिकवर्षप्राचीनतां च तदभ्युपगतकालापेक्षया तत्तेषां साधयन्तीति कोऽयं यूरोपानुगामिष्वेव दृढतरो विश्वासः ?

(3) यदा कथासरित्सागर इतिहासविषये न प्रमाणं मन्यते, बौद्धग्रन्थोक्तश्च पाणिनिर्माणवः पाणिनेराचार्याद् भिन्न एवाभ्युपगम्यते, तदा पाटलिपुत्रपरिचयोऽपि पाणिनेर्न सिद्ध्यत्येवेति पाटलिपुत्रनिर्माणकालेन तत्कालावधारणमपि न दृढम् । नन्दराज्य इव पाटलिपुत्रनिर्माणेऽपि पौराणिकदृशा महती कालविप्रतिपत्तिरस्त्येवेति ततोऽपि न कालनिर्णयः सुकरः ।

(4) नन्दराज्ये पाणिनिग्रन्थपरीक्षेति राजशेखरादीनां किंवदन्तीमात्रोल्लेखः । नन्दराज्यकालोऽपि च महासन्देहास्पदमितीयमपि युक्तिः शिथिलप्राया ।

(5) यवनपरिचय आर्याणां सिकन्दराक्रमणानन्तरमेवेति तु महदुपहासास्पदम् । श्रीकृष्णकालेऽपि कालयवनकृतमथुराक्रमणस्मरणात्, महाभारतेयुद्धेऽपि च यवनादिसैनिकवर्णनात्, तस्मादतिचिरन्तनोऽयं यवनपरिचयो भारतीयानाम् ।

एवमर्वाचीनत्वप्रतिपादिका युक्तयः शिथिला एव प्रतीयन्ते ।

इदानीन्तनेषु विवेचकेषु श्रीसत्यव्रतसामश्रमिहाभागः श्रीयुधिष्ठिरमीमांसकश्चातिप्राचीनतावादी । एतौ हि "ऋष्यन्धकवृष्णिकुरुभ्यश्च" "वासुदेवार्जुनाभ्यां वुन्" "गवियुधिभ्यां स्थिरः" "राजेः खश्" (जनमेजयः) इत्यादिसूत्रेषु महाभारतनिर्दिष्टानां व्यक्तीनां कुलानां च नामोल्लेखात् तत्रोद्भूतव्यक्ति-

नामसाधनप्रयत्नाश्च महाभारतयुद्धपरभवत्वन्तु पाणिनेर्मन्यते, परं किन्चित्परभव-त्वमेव साधयतः । तत्रापि सामश्रमिमहाशयः -

शतेषु षट्सु सार्द्धेषु त्र्यधिकेषु च भूतले ।
कलेर्गतेषु वर्षाणामभवन् कुरुपाण्डवाः ।

{1/50}

इति राजतरङ्गिणीवचनमप्रतिहतं प्रमाणं मन्वानः कलेरष्टम्यां शताब्द्याम् यीशुख्रिष्टात् प्राक् चतुर्दिशयां च शताब्द्यां पाणिनेः प्रादुर्भावमभि-मन्यते । श्रीयुधिष्ठिरमीमांसकस्तु राजतरङ्गिणीवचनस्य पुराणादौ क्वाप्यननुमो-दितत्वान्निर्मूलत्वमेव तस्य मन्वानः कलेः प्रारम्भ एव महाभारतयुद्धमभिमन्यमानः कलेस्तृतीयस्यां शताब्द्याम्, यीशुख्रिष्टाच्च पूर्वमूनत्रिंशयां शताब्द्यां पाणिनिप्रादुर्भावं मन्यते । सोऽयमवान्तरोऽनयोर्भेदः । प्राचीनत्वसाधने युक्तयोऽपि चानयोर्विभिन्न-प्रायाः । तत्र सामश्रमिमहाशयस्यैता युक्तयः, यत्पाणिनिरेव प्रथमो व्याकरण-प्रणेता, तेन यत्र यत्रापि व्याकरणनाम स्मर्यते, तेभ्यः सर्वेभ्यो ग्रन्थेभ्योऽयं प्राचीनः, निरुक्तकृतो यास्माद्, अन्येभ्यश्च वेदाङ्गग्रन्थनिर्मातृभ्यः प्राचीनोऽयम् - तस्मादत्यवरजत्वमस्य नैव सम्भवति । प्रधानभूता चेयं तस्य युक्तिः - यद् व्यास-पुत्रस्य शुकस्य वैयासकिरिति नाम श्रीभागवतादौ पठ्यते, न च वैयासकिशब्दः पाणिनीयैः सूत्रैः सिद्ध्यति, वार्तिककृता तु "सुधातुरकङ् च" {4/1/97} इति पाणिनीये सूत्रे "व्यासवरुडनिषादचण्डालबिम्बानां चेति वक्तव्यम्" इत्युपसंख्याय, वैयासकिशब्दः साधितः । तेन स्फुटमिदं प्रतीयते - यद्व्यासपुत्रस्य शुकस्य यावन्न प्रसिद्धिरभवत् वैयासकिपदं च न प्राचरल्लोके, तावदेव समुत्पन्नः पाणिनिः, तत

एव तेन वैयासकिशब्दसाधनाय न कृतः प्रयत्नः । वार्त्तिककृत्काले तु प्रचलितः व ई शब्द इति तेन प्रयत्नः कृतः । तदित्थं व्यासात् किञ्चित्परभवत्वमेव पाणिनेः सुप्रसिद्ध्यतीति ।

ता एताः सामश्रमिमहाशयस्य युक्तयोऽपि शिथिलप्राया एव । यतो हि पाणिनेः पूर्वमपि बहूनि व्याकरणान्यासन्निति दृढाभिर्युक्तिभिः प्रतिपादितं पुरस्तादस्माभिः । यास्कात्पूर्वभवत्वमपि खण्डितं प्राक् । किं च पाणिनिकाले अप्रचलिता एव शब्दा वार्त्तिककृता अन्वाख्याता इत्यपि पूर्वमेव दृढतरं निराकृतम् । एवमभ्युपगमे तु महती विशृङ्खला स्यात्, अश्वत्थामन्नश्वत्थामशब्दयोः साधनार्थमपि न दृश्यते पाणिनेः प्रयत्नः, वार्त्तिककृतैव तु "स्थाम्नोऽकारः" "भवार्थे तु लुग् वाच्यः" इति शब्दौ तावन्वाख्यातौ । ततश्च महाभारतयुद्धे सुप्रतिष्ठिताद्वीरादश्वत्थामतोऽपि पूर्वभवत्वं पाणिनेरभ्युपगन्तव्यं स्यादिति भवदभ्युपगतं महाभारतयुद्धादर्वाचीनत्वमपि न सिद्ध्येत् । "गवियुधिभ्यां स्थिरः" इत्यादिसूत्रनिर्माणं च निरालम्बनं भवेत् । पृषोदरादित्वकल्पना तूभयत्रापि समाना । किं च "बाह्य" "दैव" दैव्यादिशब्दा अपि "देवाद्यञञौ" "बहिषष्टिलोपो यञ्च" इत्यादिभिर्वार्त्तिकैरेव सिद्ध्यन्ति, अतिप्राचीनाः, श्रुतिषु श्रूयमाणा अपि । तस्मात्प्राक् प्रसिद्धा अपि बहवः शब्दा अनवधानेन अल्पप्रसिद्ध्या पृषोदरादित्वाभिमानेन वा पाणिनिना त्यक्ताः, वार्त्तिककृता त्वन्वाख्याता इत्येवानुमानं सम्यग् भवेत् । ततश्च वैयासकिपदाधारेण क्रियमाणा कल्पना अतिशिथिला ।

अथ युधिष्ठिरमीमांसकमहाशयस्तु यास्कशौनकपिङ्गलव्याडिप्रभृतीनां

पाणिनिसमकालिकत्वं महत्यारभट्या प्रतिपादयन्, अस्य प्रातिशाख्यकृत: शौनकस्य नैमिषादौ सूतात् पुराणानां श्रोतुश्च शौनकस्यैक्यमभ्युपगच्छन्, तस्य जनमेजयकालिकत्वं च प्रसाधयन् वर्षशतत्रयपरिमितमायुश्च तस्याभिमन्वान:, शौनकसमकालिकत्वादेव पाणिनिमप्येतावत्प्राचीनं साधयति । ता एता अस्यापि महाशयस्य युक्तय: श्रद्धामात्रसारा नैतिहासिकानां प्रमाणपरतंत्राणां पुर:स्थातुमुत्सहेरन् । यतो ह्यनेके शौनका: शौनकप्रणीतेभ्य एव ग्रन्थेभ्य: सिद्ध्यन्तीति प्रातिशाख्यप्रकरणे प्रागस्माभि: सुप्रतिपादितम् । किमन्यत् - शौनकप्रणीतायामेव बृहद्देवतायाम् -

"काक्षीवतं सर्वमिति भगवानाह शौनक:"[1] इति शौनकस्य भगवानिति विशेषणं सामश्रमिमहाशयेन निरुक्तालोचने प्रदर्शितम् । न हि स्वस्यैव विशेषणं भगवानिति कश्चिदनुन्मत्तो वदेत् । मन्त्रद्रष्टाऽप्यस्ति शौनक:, मण्डलद्रष्टापि, वेदाङ्गप्रातिशाख्यकृदपि, यास्कादर्वाचीनो बृहद्देवताप्रणेतापि। नैषां सर्वेषामैक्यं कश्चिदपि प्रतिष्ठितशेमुषीक: संभावयेत् । तस्माद्यदा बहव: शौनका अभ्युपगन्तव्या एव, शौनक इति गोत्रनाम अनेकासु अतिविभिन्नकालासु व्यक्तिषु प्रतिष्ठितम्, तदा पुराणानां श्रोतु: प्रातिशाख्यकर्तुश्च शौनकस्यैक्यप्रकल्पनमपि कल्पनामात्रमेव भवेत् । टीकाकृतो विष्णुमित्रस्य -

शौनको गृहपतिर्वै नैमिषीयैस्तु दीक्षित: ।
दीक्षासु चोदित: प्राह सत्रे तु द्वादशाह्निके ।

---

1- बृ० दे० - 3/152.

इति शास्त्रावतारोक्तिरपि चैतिहासिकान्धकारकालप्रसूता किंवदन्तीमूलिकैव न प्रमाणकोटिं प्रवेष्टुमीष्टे । वर्षशतत्रयायुः प्रकल्पनमपि च कलियुगप्रारम्भे सर्वप्रामाणिकग्रन्थविरुद्धमिति कल्पनाचातुरीमेव ख्यापयेन्नैतिहासिकं तथ्यम् । यास्कादीनां समानकालिकत्वमपि न प्रमाणैः सिद्ध्यतीति प्रागेव प्रत्यपीपदाम । "पाणिनिर्दाक्षीपुत्र इति भगवता भाष्यकारेणाख्यातः, व्याडिरपि दाक्षायण इत्युक्तः, तस्माद् व्याडिरयं पाणिनेर्मातुलः" इत्यादिकल्पना अपि बादरायणसंबन्धं स्मारयन्त्यो विनोदायैव प्रभवन्ति न तत्त्वान्वेषणनिष्कर्षाय । गोत्रनाम्नामतिविभिन्नकालेष्वप्यैक्यदर्शनात्, तदाधारेण कालकल्पनायाः कथमपि दृढत्वा सम्भवात् । तथैव वायुपुराणादौ पाणिनिगोत्रस्मरणमपि नास्य व्याकरणाचार्यस्य पाणिनेः कालनिर्णयाय समुपयुक्तं भवेत्, गोत्राणामतिविभिन्नकालेष्वनुवृत्तिदर्शनात् । व्याकरणप्रणेता पाणिनिरिति यदि पुराणेषु क्वाप्युक्तः स्यात्, तर्हि निश्चेतुं शक्यः स्यात्तदीयः कालः । तादृशं तु किमपि मीमांसकमहाशयेन - ब नोद्धृतमिति सन्देहास्पदमेवाद्यापि पाणिनिसमयः ।

इत्येवं भाष्यभूमिकायां श्रीगिरिधरशर्मभिरुल्लिखितम् ।

इदमपि विचारमर्हति यत् कथासरित्सागरानुसारं पाणिनिकात्यायनयोः समकालिकत्वं प्रतिभाति । बहवो विद्वांसः पाणिनेर्बहुकालादनन्तरं कात्यायन आविर्भूत इति ।

एतेषां विदुषां मतम् - पाणिनिसूत्रेषु कात्यायनेन वार्त्तिकरचना कृता । वार्त्तिकेषु च पाणिन्यनुक्तानां शब्दानां व्युत्पादनं दृश्यते । तेन

सम्भाव्यते यद् पाणिनेरनन्तरं ये शब्दाः लोके प्रसिद्धा प्रचलिताः पाणिनिना अज्ञातास्ते कात्यायनेन व्युत्पादिता इति । एतत्तच्च सामकालिकत्वेनसम्भवति । अतः पाणिनिकात्यायनयोः काले द्वि-त्रिशताब्दीव्यवधानमिति ।

किन्तु नेदं साधकं । समकालिकत्वेऽपि तथा सम्भवात् । ते शब्दा पाणिनिना न ज्ञाता इति वक्तुमशक्यत्वाच्च एवञ्चाचार्याणां कालनिर्णयविषयेऽतीवविवादः ।

<u>व्याकरणे वार्त्तिककार कात्यायनः</u>

वार्त्तिककारविषये शोधप्रबन्धोपसंहारावसरे उक्तम् । अस्यापि देशकालविषये महती विप्रतिपत्तिः । पश्चात्यैः ईशातः पूर्वं चतुर्थशिताब्दी अस्य काल इति निर्णीतम् । परं तत्र दृढं प्रमाणं नास्ति । पाण्डोर्ड्यण् इति वार्त्तिकमनुसृत्य केचन पाण्ड्यराजसमकालिकत्वं तत्परभवत्वं वा साधयन्ति, किन्तु पाण्ड्यसमय एव निर्विवादो नास्ति । कथासरित्सागरानुसारं पाणिनिसमकालत्वस्य ज्ञायते । पाणिनेः परभवानां शब्दानामन्वाख्यानात् पाणिनिपरभवत्वं वा स्येति अद्यावधि नास्य समयो निर्णीतः । वार्त्तिकाध्ययनेनास्य बुद्धिवैभवं परिज्ञायते । पाणिनीय सूत्राणां समुचितं व्याख्यानमनेनकृतम् ।

महाभाष्यकारेण तु अस्य दक्षिणदेशभवत्वं स्वीकृतमिति उपसंहारे उक्तम् । यथा च मुनित्रये पाणिनेः महत्त्वं तथैव वार्त्तिककारकात्यायनस्यापीति न तिरोहितम् । वार्त्तिकसहायेन च पाणिनीयतन्त्रं पूर्णताभगमत् इति विदुषां मतम् ।

पतन्जलि:

मुनित्रये महाभाष्यकारस्य महामुने: पतन्जलेर्विशिष्टं स्थानमस्ति । यथोत्तरं मुनीनां प्रामाण्यमितिरीत्या अस्यैव परमप्रामाण्यमङ्गीकुर्वन्ति वैयाकरणा: ।

अस्य देशविषये नास्तिविवाद:, गोनर्ददेशेऽयं जनिं लेभे । स्वयमेव महाभाष्ये उक्तवान् "गोनर्दीयस्त्वाह इति गोनर्दीयशब्देन चात्मानमाह । गोनर्ददेशस्तु अद्यत्वे गोण्डशब्देन विख्यात: ।

महाभाष्यस्य प्रयोगावलोकनेनास्य कालविषयेऽपि किन्चित् कल्प्यते इतिहासकारै: । तथाहि अनद्यतनेलङ्ग इति सूत्रे, परोक्षे च लोकविज्ञाते प्रयोक्तुर्दर्शनविषये इति वार्त्तिके उदाहरणप्रत्युदाहरणे आह भाष्यकार: - अरुणद्यवन: साकेतम्, अरुणद्यवनो माध्यमिकामिति । प्रयोक्तुर्दर्शनं विषय इति किम् - जघान्कंसं किल वासुदेव:, इति अनेन अरुणद्यवन इत्यादौ तुल्यकाल: प्रवक्ता इति गम्यते । साकेतस्य यवनावरोधकाल: पतन्जलिकाल इति । साकेतमाध्यमिकावरोध: कदा भूत् इति । अलक्षेन्द्रा-(सिकन्दर)-क्रमणात् पश्चात् चन्द्रगुप्तराज्यकाले सिल्युकसनामा यवनो भारतमाचक्राम । चन्द्रगुप्तेन पराजित: स्वकन्या तस्मै अदात् इति प्रसिद्धम् । तस्य सिल्युकसनामयवनस्योत्तराधिकारी मिनाण्डरनामा तदुत्तराधिकारी पुष्यमित्रराजसमये भारतमाचक्राम । तेनैव तत्प्रेषितेन केनचित् यवनेन वा साकेतावरोधो जात इति । एवन्च पुष्यमित्र समय एव पतन्जलिसमय इति । महाभाष्ये पुष्यमित्रं याजयामहे इति प्रयोगोऽपि उपलभ्यते । पुष्यमित्र-

समयश्च ईशातः द्वितीया शताब्दीति ऐतिहासिकैः स्वीक्रियते । स एवास्य कालः । अस्यापि विषये विप्रतिपत्तय इति महाभाष्यभूमिकायां श्रीगिरिधर-शर्मभिरुल्लिखितं तदिह न्यस्यते । तथाहि -

इत्थं दृढैः प्रमाणैर्निश्चितयोः पतञ्जलिदेशकालयोः पुनरपि केचि-द्विप्रतिपद्यन्त एव । तत्र सामश्रमिमहाशयो नेदमनुमन्यते, स तु शकेन्द्राक्रमणात् प्रागेव, बुद्धकालाच्च किञ्चिदर्वाक् प्रायेण पञ्चमीं शताब्दीं (ई० पू०) पतञ्जलि-कालं मन्यते । तत्र चेमे हेतवस्तेनोपन्यस्ताः-

(1) अभिमन्युराज्यकाले चन्द्राचार्यादिभिर्विलुप्तप्रायस्य महा-भाष्यस्य पुस्तकमेकं सुदुर्लभं काश्मीरेष्वानीतं तैरेव च तस्य प्रचारस्तत्र कृत इति राजतरङ्गिण्यामुक्तम् -

चन्द्राचार्यादिभिर्लब्ध्वादेशं तस्मात्तदागमम् ।
प्रवर्तितं महाभाष्यं स्वं च व्याकरणं कृतम्[1] ।।

हरिणा च वाक्यपदीये कश्चिद् विशेष उक्तः -

पर्वतादागमं लब्ध्वा भाष्यबीजानुसारिभिः ।
स नीतो बहुशाखत्वं चन्द्राचार्यादिभिः पुनः[2] ।।

अभिमन्युराजकाले च अस्ति पाश्चात्त्यानां विप्रतिपत्तिः ।

---

1- राजतरङ्गिणी - त० । श्लो० 176.
2- वा० प० - 2/489.

विल्फर्डमहाशयः यीशुख्रिष्टतः 423 वर्षेभ्यः पूर्वमभिमन्युराज्यकालं मन्यते । बोथलिङ्महाशयश्च यीशुतः शताद् वर्षेभ्यः पूर्वम् । प्रिंसिप्महोदयः यीशुतः 73वर्षेभ्यः पूर्वं तद् राज्यावसानं मन्यते । लासेन्महाशयश्च यीशुतः 40वर्षेभ्यः पश्चान्मन्यते । तदत्र बोथलिङ्-प्रिंसिपमहाशययोर्मतं प्रायेण न संवदतीति तत्रैव विश्वसिति साम्श्रमिमहाशयः । तथा च यीशुख्रिष्टतः शताद् वर्षेभ्यः पूर्वं दूरात् दाक्षिणात्यपर्वतप्रान्तान्महाभाष्यपुस्तकं कश्मीरेषु गतम् । ईदृशस्य च महतो ग्रन्थस्य प्राच्यदेशे विरचितस्य दाक्षिणात्येषु पर्वतप्रदेशेषु तस्मिन् काले प्रचारो यदा बाष्पशकट्यादिकं नासीत्किमपि यानसाधनम्, तदनु च तस्य विलोपः, इत्येतदर्थमन्ततः त्रिचतुश्शताब्दीसमयोऽवश्यमपेक्ष्यते । तस्मात् यीशुख्रिष्टात् पूर्वं पञ्चम्याः शताब्द्या अर्वाक् महाभाष्यकारसमयः न कदापि न भवितुमर्हतीति ।

(2) "सङ्कलादिभ्यश्च" (4/2/75) इति सूत्रे पाणिनिना साकलनगरस्य सत्ता प्रकटीकृता । तच्चेदं नगरं अलक्षेन्द्राक्रमणकाले तेन विनाशितमित्यैतिहासिकी प्रसिद्धिः । महाभाष्यकृता च तत्र सूत्रे तद्विनाशविषये किमपि नोक्तम् । यदि हि महाभाष्यात् पूर्वमेव साङ्कलनगरविनाशोऽभविष्यत्, तर्हि ईदृशी प्रत्यग्रा घटना तेनावश्यं तत्र निरदेक्ष्यत - साङ्कलनगरमिदानीं ध्वस्तमिति ।

(3) अलक्षेन्द्रेण पञ्चनदप्रदेशे क्षुद्रकेति प्रसिद्धा युद्धप्रवणा जातिर्विनाशितेत्यपि ख्यापितं यवनदेशीयैरैतिहासिकैः । महाभाष्ये तु "एकाकिभिः क्षुद्रकैर्जितमि"त्युदाहरणं दृश्यते । यदि हि अलक्षेन्द्राक्रमणादनन्तरं महाभाष्यं विरचितमिति मन्येत, तदानुपदमेव पराजिताया विनष्टायाश्च जातेर्विजयशीलत्वं

न कदापि तत्र वर्णितं स्यात् । तस्मादलक्षेन्द्राक्रमणात् प्रागेव महाभाष्यस्य निर्माणमिति । ता एताः प्रधानास्तस्य युक्तयः । "पुष्यमित्रं याजयामहे" "चन्द्रगुप्तसभा" "पुष्यमित्रसभा" "असणद्यवनः साकेतम्" इत्यादीन्युदाहरणानि तु स्वकल्पितान्येवेति सामश्च सामश्रमिमहाशयो वदति । यथा व्याकरणग्रन्थेषु देवदत्तयज्ञदत्तादीनि कल्पितान्येव नामानि तत्र तत्रोदाह्रियन्ते, तथैव पुष्यमित्रचन्द्रगुप्तादिनामान्यपि तदात्वे कल्पितान्येव महाभाष्यकृतोदाहृतानि । पश्चात्तु तन्नामका राजानोऽपि बभूवुरित्येव कल्पयितुमुचितम् । पुष्यमित्रो हि यीशुतः प्राग् द्वितीयस्यां शताब्द्यां जात इत्यैतिहासिकानां मतम् । ततश्च एकशताब्दीमात्रे समये महाभाष्यसदृशस्य दूरदेशे प्रचारस्तद्विलोपश्चापि नैव सम्भवतीति न युज्यते पुष्यमित्रकाले भाष्यनिर्माणम् । किञ्च महाभाष्ये "अनुशोणं पाटलिपुत्रम्" इत्यप्युदाहरणं दृश्यते । कुसुमपुरापरपर्यायं पाटलिपुत्रञ्चेदं बुद्धदेवकाले एव वासयितुमुपक्रान्तम्, बुद्धदेवेन "महदिदं नगरं भविष्यतीत्याशीरपि दत्ता। तच्चेदं प्राक् शोणतीरे निवासितम् तदनु च ततः परिवर्त्य गङ्गातीरे स्थापितमित्येतत्सर्वं बौद्धग्रन्थेभ्यः प्रतीयते । इत्थं च यावच्छोणतीरे आसीत्पाटलिपुत्रं तावदेव महाभाष्यं निर्मितमिति ततोऽपि महाभाष्यस्य अर्वाचीनता न सम्भवतीति ।

ता एता सामश्रमिमहाशयस्य युक्तयः उपदर्शितदृढतरयुक्त्यग्रे नैव स्थातुमुत्सहन्ते । पुष्यमित्रचन्द्रगुप्तयोर्नामनी स्पष्टं महाभाष्ये दृश्येते । पुष्यमित्रस्य यागकरणमपि ततः प्रसिद्ध्यति । यवनकृतः साकेतावरोधो माध्यमिकावरोधश्चापि यदेतिहासेभ्यः प्रमाणीभवति, तदा सर्वमिदं कल्पितमित्युक्तिरुपहासायैव प्रेक्षाव-

ताम् । एवमपलापे तु कस्यापि ग्रन्थस्य कालनिर्णयः कदापि न सम्भवति । सर्वत्रैवमुच्छृङ्खलानां कल्पनानां जागरूकत्वसंभवात् । तस्मात् ताः प्रबलतरा युक्तयः । "संकलादिभ्यश्च" इति सूत्रे भाष्यमेव न दृश्यते, तदा केवलं नगरध्वंसवर्णनायैव भाष्यकारस्तत्सूत्रं व्याचक्षीतेत्येतदप्युपहासास्पदम् । न हि भाष्यमैतिहासिको ग्रन्थः, यत्रैवंविधा घटना अवश्यमुल्लिख्येरन् । क्षुद्रकजातिविषयेऽपि ऐतिहासिकैरन्यथैव प्रमाणितम् । मालवाः क्षुद्रकाश्चेति जातिद्वयं पञ्चनदप्रान्तान्ते सुप्रसिद्धमासीत् । तयोश्च सर्वत्र युद्धादिषु साहचर्यमेव बभूव । परमलक्षेन्द्रस्याक्रमणकाले तेन सह युद्धावसरे तयोः साहचर्यं केनचिद्धेतुना न जातम् । ततश्च मालवैः पृथग् युद्धं कृतम्, क्षुद्रकैश्च पृथक् । ते एते जाती तदा विनष्टे इत्यपि भारतीयैरैतिहासिकैः खण्डितम् । अग्रे तयोर्जात्योर्देशान्तरेषु निवासः स्फुटं सिद्ध्यतीति । क्षुद्रका एकान्ततस्तदा पराजिता इत्यपि जायसवालमहोदयो नानुमनुते । यद्यपि यूनानदेशीयाः स्वलिखित इतिहासे क्षुद्रकाणां पराजयं वदन्ति, परमिदमप्यैतिहासिकैरुच्यते यद्युद्धान्ते क्षुद्रकेभ्यः ससम्मानं सभासु भोज्यादिकं यूनानदेशीयैरुपह्रियते स्म । न हि पराजितानामेवंविधः सत्कारः सम्भाव्यते । तस्माद् युद्धे सन्धिरेवासीत्, तत्रच यवनैतिहासिकैर्यवनानां जयो भारतीयैश्च क्षुद्रकाणां जय उद्घोष्यते स्म इत्यनुमीयते । तत्र भारतीयमतमेवानुसृत्य महाभाष्यकृता "एकाकिभिः क्षुद्रकैर्जितम्" इत्युदाहृतम् । तादृशेन विश्वविजयिना महावीरेण सन्धिरपि नूनं जय एवेति जितमित्युक्तिर्न विरुद्धा । अत्र "ऐकाकिभिः" इति पदं मालवसाहचर्यविरहं व्यञ्जयत् स्फुटमेव अलक्षेन्द्रयुद्धघटनां स्मारयति, तेन अलक्षेन्द्राक्रमणादनन्तरमेव महाभाष्यनिर्माणं सुस्फुटी भवतितराम् । पाटलिपुत्रं चापि विस्तृततमं नगरम्, गङ्गाशोणसङ्गमसन्निधाने निवासितम् अनुशोणमित्यनु-

गङ्गमिति च उभयथापि व्यापयितुमद्यापि शक्यते । गङ्गाशोणसङ्गमश्च पूर्वं यत्रासीत् ततोऽद्य पश्चिमस्यां दिश्यागत इति प्राचीनाभिर्घटनाभिः सिद्ध्यति । तस्मात्तदात्वे अनुशोणमित्युक्तिर्न कथमपि विरुद्धा । अभिमन्युराज्यकाले कश्मीरेषु भाष्यपुस्तकागमनमवशिष्यते । परमभिमन्युराज्यकाल एव यदा न निश्चित-स्तदा तदाधारेण कथं पतन्जलेः कालनिर्णयो दृढः स्यात् । यदि लासेन महोदय-स्यैव मतं सम्यक् स्यात्, यीशुख्रिष्टादनन्तरं चाभिमन्युराज्यकालः सिद्धः स्यात् तदा पुष्यमित्रादनन्तरमपि द्वित्रिशताब्दीव्यवधानं सम्भाव्यत एव । किन्च नैव राजतरङ्गिण्यां न वा हरिणा प्रचारानन्तरं महाभाष्यविलोप उक्तः । पूर्वं देशान्तरेषु प्रचारः तदनु विलोप इति कल्पनामात्रमिदम् । इदमपि सम्भाव्यते यत् पूर्वं महाभाष्यप्रचारो नैव जातः, कैश्चित्पतन्जलिशिष्यैः गुरोरधीत्य तत् पुस्तकं देशान्तरेषु नीतं तदेव च कथंचिच्चन्द्राचार्यादिभिः प्राप्तम् । प्रचारस्तु तैरेव पश्चात् कृत इति । अस्यां च कल्पनायां शताब्दीव्यवधानमात्रमपि पर्याप्तं भवति । तस्माद् दृढतरप्रमाणाभावेऽनुमानसाधकानि प्रमाणानीमानि दुर्बलान्ये-वेति पुष्यमित्रराज्यकाल एव पतन्जलिकाल इति मन्यामहे । स तु कालः कीदृश इति विप्रतिपत्तिर्न शक्यतेऽत्र समाधातुमिति निवेदितपूर्वम् ।

महाभाष्यवैशिष्ट्यम्

व्याकरणे पाणिनीयसूत्रेषु कात्यायनवार्त्तिकमधिकृत्य महामुनि-विरचितस्य महाभाष्यस्यातिमहत्त्वमस्ति । अधुना वैयाकरणाः सिद्धान्ताः महाभाष्यानुसारमेव निर्णीताः । सूत्रेषु कृतानां कात्यायनेनाक्षेपाणां समाधान-

मत्र दृश्यते । बहूनां वार्त्तिकानाञ्च गतार्थता सूत्रैरेव कृता । क्वचिच्च सूत्राणामपि प्रत्याख्यानं कृतम् । यद्यपि वार्त्तिकावलोकनेन ज्ञायते यत् वार्त्तिककारः सूत्रन्यूनताप्रदर्शनाय प्रवृत्तः । भाष्यकारश्च सूत्रगौरवरक्षणायेति । तथापि नैषा दृष्टिः । तत्त्व दृष्ट्यैव उभयोराचार्ययोः प्रवृत्तिः । यत्र च भाष्यकारः वार्त्तिकं दोषं पश्यति तस्य प्रत्याख्यानं करोति सूत्राक्षरैर्गतार्थताञ्च करोति । यत्र च सूत्रवैयर्थ्यं प्रतिभाति तत्र सूत्रस्यापि प्रत्याख्यानं करोतीति नामवशात् शास्त्रकाराणां प्रवृत्तिः । आहो पुरुषिकामात्रं तु भवानाहेत्यादि भाष्यकारवचनमाचार्याणां परस्परविनोदवचनमिति न तेन विरोधो गम्यते । महाभाष्यमतीव गूढतरं प्रसन्नशब्दं समुद्रमिवगम्भीरमस्ति । अद्भुतं ग्रन्थरत्नमिदं दुर्लभमन्यत्र। बहवो हि महाप्रतिभाशालिनो विद्वांसोऽस्य व्याख्यातारः भर्तृहरिकैयटनागेशादयः।

महाभाष्ये स्वपदानामपि व्याख्यानं कृतमस्ति । यथा - अथ शब्दानुशासनमित्युक्त्वा "अथ शब्दोऽधिकारार्थः प्रयुज्यते शब्दानुशासनं नामाधिकृतं शास्त्रं वेदितव्यमिति" ।

महाभाष्याब्धेरेव वाक्यपदीय-शब्दकौस्तुभादयो ग्रन्थरत्नानि प्रसिद्धानि ।

किं बहुना व्याकरणशास्त्रे यथा पतञ्जलिमुनेर्महत्त्वं तथा न कस्यापीति वक्तुं शक्यते ।

अयं शेषः फणी, नागः गोणिकापुत्र, गोनर्दीय इत्यादि नाम्ना प्रसिद्धः । गोणिकास्य मातुर्नाम । शेषस्यावतारोऽयमिति वैयाकरणेषु प्रसिद्धिः ।

योगेन चित्तस्य पदेन वाचाम्,
मलं शरीरस्य च वैद्यकेन ।
योऽपाकरोत् तं प्रवरं मुनीनां
पतञ्जलिं प्राञ्जलिरानतोऽस्मि ।।

अनेन ज्ञायते यदयं योगशास्त्रस्य वैद्यकशास्त्रस्यापि प्रवर्तक इति । पातञ्जलं योगदर्शनं प्रसिद्धमस्ति । बहूनां विदुषां मतं यत् योगवैद्यकशास्त्रकर्ता अन्य एव पतञ्जलिरिति । एवं संक्षेपेण मुनित्रय विषये उक्तम् ।

शोधप्रबन्धे चास्मिन् मया आद्द्वितीयाध्यायं वार्त्तिकानां समीक्षा प्रस्तुता । तत्र विषयप्रवेशार्थं सिद्धे शब्दार्थसम्बन्धे इति वार्त्तिके शब्दार्थ तत् सम्बन्धानामपि विस्तरेण समीक्षाकृतास्ति । पाणिनिमते शब्द: क: ~~कस्सनर्थ:~~ कस्यार्थ: कीदृशश्च तयो: सम्बन्ध इति परिज्ञानायोपात्तोऽयं विषय: । क्रमेण काशिकायां पठितानां वार्त्तिकानाम् महाभाष्यानुसारं कैयटनागेश-जिनेन्द्रहरदत्तादिमतमवेक्ष्य सम्यग् समीक्षणं कृतम् । तच्च विदुषां मनोविनोदाय छात्राणामुपकाराय भवेदिति भवानीविश्वनाथयोश्चरणाब्जेषु समर्पयति ।

विदुषां वशंवद:

अमरचन्द्र ब्रह्मचारी
२९-४-८६

(अमरचन्दो ब्रह्मचारी (ब्रह्मप्रकाशो ब्रह्मचारी)
प्रबन्धक: - ब्रह्मानन्द-संस्कृत-महाविद्यालये
राठस्थे, हमीरपुरे ।

## कृतज्ञता-ज्ञापनम्

इह काशिकाया आद्वितीयाध्यायं वार्त्तिकानां विशिष्टमध्ययनमित्याख्ये शोधप्रबन्धे कृतोपकाराणां गुरूणां विदुषामन्येषाञ्च विद्यार्जनादिकार्ये विहिताश्रयाणां महापुरुषाणां कृतज्ञताज्ञापनविधौ तेषां चरणारविन्देषु वाक्यपुष्पाञ्जलयो मया प्रणतेन समर्प्यन्ते ।

तत्र प्रथमं शोधप्रबन्धस्यास्य निर्देशकानां सम्पूर्णानन्दसंस्कृतविश्वविद्यालये वेदवेदाङ्गसंकायाध्यक्षाणाम्, व्याकरणविभागाध्यक्षपदमलङ्कुर्वतां डा० पण्डितश्रीरामयत्नशुक्लमहाभागानां पादारविन्देषु निवद्यते वाक्यकुसुमम् । स्मरणाभमिदम् -

श्रीमैनापतिदेवतातिसरलामाताऽस्य धन्या, पिता ।
शुक्लो रामनिरञ्जनः सुचरितः संन्यासशोकातिगः ।
गङ्गाम्भः पवितं पुरं महरचं वाराणसीमण्डलम् ।
विद्याकीर्तिकरो यतोऽयमुदितः श्रीरामयत्नो रविः ।। । ।।

लब्ध्वा पाणिनिशास्त्रसारमखिलं रामप्रसादाद् गुरोः ।
वेदान्तादिषु चागमेषु नितरां वैदुष्यमासादयन् ।
ग्रन्थग्रन्थिविभेद कौशलमतिः शास्त्रार्थजित् केशरी ।
काशीपिण्डितमण्डले विजयते श्रीरामयत्नः सुधीः ।। 2 ।।

नव्यव्याकरणाम्बरे ग्रहगणान् स्वज्योतिषा लोपयन् ।
निर्बाधं विचरन् सदोदितरविस्तत्त्वप्रकाशोऽश्रमः ।

ध्यानस्थो गणयत्ययं न कमपि श्रीशारदावैभवे ।
निष्णातो मृदुवाक् समासु निपुणो गूढासु नीतिष्वपि।। 3 ।।

धर्माचारशुचि: सदा शिवरूचिर्वाङ्‍माधुरीधूर्वह: ।
मित्राणामुपकारकोऽरिकरिणां दृप्तो मृगेन्द्रो बली ।।
वक्तृत्व प्रतिभाविधौ गुरूसम: दिव्यैर्गुणैर्मण्डित: ।
छात्राणां प्रतिपालको विजयतां श्रीरामयत्नो गुरु: ।। 4 ।।

तदनन्तरं पूज्यपादानां स्वगुरूणां कर्मयोगिनां लोकोपकारार्पित सर्वस्वानां श्रीब्रह्मानन्दसंस्कृतमहाविद्यालयोत्तरमाध्यमिकस्नातकोत्तरमहाविद्यालय-संस्थापकानां ब्रह्मानन्दाश्रमसेवासमित्यध्यक्षाणां ब्रह्मलीनानां कीर्त्तिधवलित दिगन्तराणां श्रीस्वामिब्रह्मानन्दाभिधानां चरणारविन्देषु प्रणति पुष्पान्जलयोलसन्तु -

बुन्देलखण्डभूभागे वर्हराग्रामवासिनि ।
लोधीवंशे यशोदायां मातादीनात् महौजस: ।
शिवभक्ताज्जनिं लब्ध्वा विरक्तो व्यचरदधराम् ।
पुण्यक्षेत्रे हरिद्वारे संन्यासं धृतवान् महान् ।
योगाभ्यासेन संसिद्ध: स्वातन्त्र्यान्दोलनाग्रणी: ।
गांधिनाहितशक्तिश्च जनसेवापरायण: ।
जनै निर्वाचित: प्रीत्या मतदानेन भूरिश: ।
सांसदोऽभूत् कृपासिन्धु: पीडितानां सहायक: ।
समदृष्टिर्महातेजा: ब्रह्मवादी यशोधन: ।
बहुविद्यालयान् एष संस्थाप्य सुदृढान् मतान् ।
ररक्ष सर्वविधावे जनानां प्रियमाचरन् ।
संतोष्य लोकहितकर्मभिरशिमेष ।
सम्पाद्य सर्वजनलोपकृतिं महात्मा ।

लीन: परात्मनि निजेन यशश्चयेन ।
पुण्येन भावयति कर्मपथं जनानाम् ।।

तदनन्तरं श्रीसच्चिदानन्दाश्रमेश्वराणां पूज्यपाद सरसीरुहाणां समाराधितशिवेश्वराणां सर्वविद्यापारं गतानां जटामण्डलावेदित तपसां वीतरागाणां श्रीस्वामिसर्वदानन्दमहाराजानां पूजाविधौ वाक्यपुष्पोहार: समर्प्यते - समर्प्यते -

रामाङ्घ्रिकञ्जाचलचञ्चरीकम् ।
स्वात्मावबोधास्त समस्तभेदम् ।
सिद्धं प्रसिद्धं यशसा जगत्यम् ।
श्रीसर्वदानन्दपदं नमामि ।। 1 ।।

पीयूषकण्ठ: समलोचनोय: ।
त्रिशूलहीनोऽकृत भूतसङ्ग: ।
वन्देऽद्भुतं गोष्वचरन्तमीशम् ।
जटाधरं स्वामिवरं महान्तम् ।। 2 ।।

तदनन्तरं सकलविद्याविद्योतितान्त:करणानां पदवाक्यप्रमाणपारावारपारीणानां काशीविद्वत्सभा समागतपरवादिदिक् कुञ्जरकपाटपाटनोद्दृप्तकेहरीणां सम्यक् प्रशासनकुशलानां पण्डितराजानां सम्पूर्णानन्दसंस्कृतविश्वविद्यालये कुलपतिपदमलङ्कुर्वतां पं० डा० श्रीदेवस्वरूपमिश्राणां चरणेषु सादरं वाक्यकुसुमाञ्जलि: समर्प्यते -

येषां कुलपतित्वे शोधप्रबन्धः प्रस्तुतः ।
सौभाग्यं सुरभारती प्रणयिनां पुण्यप्ररोहः पितुः ।
मातुः क्रोडसुधाकरः सुजनता माङ्गल्यमोदोदयः ।
वाणी मौलिमहामणिः कुलपतिस्तद्विश्वविद्यालये ।
काशीकाननचारिकेहरिरयं देवस्वरूपो गुरुः ।। । ।।

आरूढेऽत्र कुले पदे कुलपतेरस्मिन् महापण्डिते ।
विद्यावित्तनयोदयः प्रविलयः दुर्वृत्तदुष्टात्मनाम् ।।
मित्राणां विदुषां शिवं कुमतिकृद्दुर्जालसंधूननम् ।
नीत्योत्साहबलैः प्रशासनमहो राजप्रियं राजते ।। 2 ।।

तदनन्तरम् -

स्वरूपादात्मनो योगात् गुरोर्यातिमसङ्गताम् ।
वन्दे पारसनाथाख्यं रामपादाब्जसङ्गतम् ।।

अनन्तरं पण्डितवराणां गुरूणां श्रीमतां वन्दन वन्दनीय चरितानां श्रीकमलाकान्तानां त्रिपाठिनां चरणारविन्देषु इदमर्प्यते -

पण्डितप्रवरं शान्तं कमलाकान्तनामकम् ।
गुरुं विद्यानिधिं वन्दे सर्वाज्ञानतमोनुदम् ।।

अन्येषाञ्चोपकारकाणां विदुषां सहयोगिनां महं हृदयेन कृतज्ञतां स्वीकरोमि, धन्यवादान् प्रणतिश्च करोमि ।

अन्ते एतत् प्रबन्धटङ्कणस्य कर्त्रेऽपि धन्यवादान् वितरामि ।

पुनस्तेषां समेषां पादारविन्देषु प्रणमन् -

विदुषां वंशवदः

अमरचन्द्र ब्रह्मचारी 21-8-88

अमरचन्दो ब्रह्मचारी (ब्रह्मप्रकाशो ब्रह्मचारी)
प्रबन्धक: - ब्रह्मानन्दसंस्कृतमहाविद्यालय:
राठ, हमीरपुर (उ0प्र0)

## विषय-सूची

पृ० सं०

पृ० सं०

पृ० सं०



अथ चतुर्थः पादः

पृ० सं०

पृ० सं०

पृ० सं०

अथ तृतीय: पाद:

पृ० सं०



अथ चतुर्थः पादः

पृ० सं०



॥6॥ उपसंहार:



xxxxx

# मङ्गलाचरणम्

वन्दे वाणीं यया सर्वं वर्ण्यते भुवनत्रयम् ।
अशक्या यापरैः ध्यातुं वीणापाणिं वरप्रदाम् ।। 1 ।।

वन्दे गिरीन्द्रतनयोल्लसितार्धदेहम्,
गेहं समस्तकरुणादिमहागुणानाम् ।
काशीश्वरं सुरपतिं गणेशमीशम्,
गङ्गाधरं त्रिनयनं सकलेष्टदोहम् ।। 2 ।।

वन्देऽद्भुतच्छविपराजितपञ्चबाणम्,
सीताद्वितीय सहबन्धुगणप्रसन्नम् ।
रामं वरासनगतं भजतामभीष्टम्,
श्रीमारुतात्मज निषेवितपादयुग्मम् ।। 3 ।।

वंशीधरं रविसुता पुलिने चरन्तम्,
राधावपुश्छविविलासविसक्तचित्तम् ।
गोप्यैः कदम्बतरुराजिषु राजमानम्,
वन्दे कृपायत्तलोचनवासुदेवम् ।। 4 ।।

गुरुं मन्त्रविदां श्रेष्ठं सर्वविद्याविशारदम् ।
ब्रह्मानन्दं नतो भक्त्या लोकसेवापरायणम् ।। 5 ।।

वार्त्तिकान् काशिकास्थाना द्वितीयाध्यायमीश्वरम् ।
नत्वा शिवं समीक्षेऽहं गुरुनिर्देशमागतः ।। 6 ।।

xxx

## विषय-प्रवेश:

"वागेव विश्वा भुवनानि जज्ञे ।।"

"स भूरिति व्यावहत् अथ भूमिमसृजत्[1] ।।"

इत्यादिश्रुतिभ्य: ।

"नामरूपं च भूतानां कर्मणां च प्रवर्तनम् ।
वेदशब्देभ्य एवादौ निर्ममे स महेश्वर:[2] ।।"

"सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक् ।
वेदशब्देभ्य: एवादौ पृथक् संस्थाश्च निर्ममे[3] ।।"

"अनादिनिधनं ब्रह्मशब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यत:[4] ।।"

इत्यादिस्मृतिभ्यश्च शब्द: जगत् कारणमिति निर्णीयते । कारणन्चात्र निमित्तं नोपादानाम् । अथवा अभिन्ननिमित्तोपादानम् । शब्दस्यैव स्फोटरूपस्य सर्वं जगत् विवर्त इति वैयाकरणानां मतम् । देवताधिकरणे च ब्रह्मसूत्रे शाङ्करभाष्ये {1/3/28} स्फोटस्य वर्णस्य वा जगत् कारणत्वमुपपादितम् । निमित्तमुपादानं

- - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- तै० ब्रा० - 2/2/4/2.
2- मनुस्मृति: - 1/21.
3- ,, - 1/21.
4- वाक्यपदीय - 1/1.

वा स्यात् शब्दस्य जगत्कारणता तावत् श्रुतिस्मृतिसिद्धेति नात्र विप्रतिपत्तिः । उक्तञ्च वाक्यपदीये "अर्थप्रवृत्ति तत्त्वानां शब्दा एव निबन्धनम्" इति शब्द-ब्रह्मणि निष्णातः परंब्रह्माधिगच्छतीति ।

किञ्च पस्पशाह्निके शब्दस्यैव परब्रह्माधिगति साधनता उक्ता । "स एष दुर्गो मार्गः । एकगम्यो वाग् विषयः ।।

न केवलं परमपुरुषार्थावाप्तिरेव शब्दात् अपितु धर्मादीनामपि ततः सिद्धिरिति विदित-मेतत् । शब्दश्च श्रोत्रग्राह्यशब्दगुणः इति नैयायिका आकाशदेशस्थ बुद्धिर्निर्ग्राह्य श्रोत्रग्राह्यध्वनिगुणव्यङ्ग्यः स्फोट इति पातञ्जला । ध्वनिरूपस्य स्फोटरूपस्य च शब्दस्य लक्षणम् पस्पशाह्निकभाष्ये आदावेव येनो-च्चारितेन सास्नाखुरविषाणिनां सम्प्रययो भवति स शब्द इति[1] ।

अथवा प्रतीतपदार्थको लोके ध्वनिः शब्द इत्युच्यते शब्दं कुरु शब्दं मा कार्षीरिति । स च शब्दः स्फोटः द्रव्यम् ब्रह्मैव वेति । शब्दस्य स्वसाधुभेदेन द्वैविध्यं दृश्यते । समानायान्चार्थावगतौ शब्दैश्चापशब्दैश्च शास्त्रेण धर्मनियमः क्रियते इति महाभाष्यरीत्या वैयाकरणानां मते शब्देषु अपशब्देषु च अर्थनिरूपिता शक्तिः स्वीक्रियते । किन्तु[2] धर्मजनकतावच्छेदकतया साधुत्वधर्मेण, अपशब्देभ्यः पृथक् शब्दानां शास्त्रद्वारा प्रतिपत्त्यर्थमन्वाख्यानं क्रियते । लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमः क्रियते इति महा-भाष्यम् ।

---

1- महाभाष्य - पृ० 12·

2- अनपभ्रष्टतानादि यं वाऽभ्युदययोग्यता व्याक्रिया व्यञ्जनीया वा, जातिः कापीहसाधुता ।

तत्र शब्दानां लौकिकानां वैदिकानान्च साधुत्वान्वाख्यानार्थं महर्षिणा परावरज्ञेन विदितवेदितव्येन पाणिनिना व्याकरणसूत्राणामष्टाध्यायी अभूतपूर्वा विरचिता एतेष्वेवाध्यायेषु समस्तलौकिकवैदिकशब्दराशेर्व्युत्पादनं कृतम् । तत्र सूत्रलक्षणम् -

अल्पाक्षरमसंदिग्धं सारवद् विश्वतो मुखम् ।
अस्तोभमनवद्यन्च सूत्रं सूत्रविदो विदुः ।।

पाणिनीयसूत्राणां महत्त्वं न तिरोहितम् ।

पाणिनीयाष्टाध्यायीसूत्राण्यधिकृत्य महर्षिणा कात्यायनेन वार्त्तिकानि प्रणीतानि सन्ति । वार्त्तिकलक्षणन्च -

उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्तते ।
तं शास्त्रं वार्त्तिकं प्राहुः वार्त्तिकज्ञा मनीषिणः ।।

यद्यपि कात्यायन कृतः स्वतन्त्रो वार्त्तिकग्रन्थो नोपलभ्यते तथापि महाभाष्ये भाष्यत्वेन गृहीतानि वार्त्तिकानि उपलभ्यन्ते । तत्रापि कानिचित् कात्यायनकृतानि कानिचित् महाभाष्यकारवचनानि, कानिचित् अन्याचार्यकृतानीति विषये सम्प्रदाय एव शरणम् । कात्यायनवार्त्तिकेषु एतल्लक्षणं सम्यग् घटते। उक्तेषु सूत्रार्थेषु आक्षेपसमाधानाभ्यां व्याख्या प्रवृत्ता । यथा इग्यणः सम्प्रसारणम् ﴾1/1/44﴿ इति सूत्रे "सम्प्रसारणसंज्ञायां वाक्यस्य संज्ञा चेद् वर्णविधिः, वर्णसंज्ञा चेन्निर्वृत्तिः, इति वार्त्तिकाभ्यामाक्षेपमुक्त्वा विभक्तिविशेषनिर्देशस्तु ज्ञापक उभयसंज्ञात्वस्येति समाधानवार्त्तिकेनोभयसंज्ञात्वं निर्णीतम् ।

यथा वा अइउण् इति सूत्रे "अकारस्य विवृतोपदेश आकारग्रहणार्थः" तस्य विवृतोपदेशात् अन्यत्रापि विवृतोपदेशः सवर्णग्रहणार्थः, दीर्घप्लुतवचने च संवृतनिवृत्त्यर्थः, इति वार्त्तिकैः विवृतोपदेशः सूत्रानुक्तश्चोदितः ।

तत्रैव च तत्रानुवृत्तिनिर्देशे सवर्णाग्रहणमनन्त्वात् इत्यादिना आक्षिप्य "आकृतिग्रहणात् सिद्धमिति समाहितम् ।

सवर्णसंज्ञासूत्रे च ऋलृवर्णयोर्मिथः सावर्ण्यं वाच्यमिति वार्त्तिकं सूत्रानुक्त प्रतिपत्त्यर्थम् ।

उपदेशेऽजनुनासिक इत् इति सूत्रे करणे धनो दुर्लभत्वात् सर्वस्य च संग्रहार्थम् उपदेशनेऽजननुनासि इत् इति व्यासान्तरकरणं दुरुक्तचिन्तनम् ।

एवं रूपेण प्रवृत्तं सर्वं वार्त्तिकं सूत्रव्याख्यान भूतमेव । तत्र वार्त्तिकेषु शेषावतारभूतमहामुनिपतन्जलिप्रणीतं महाभाष्यमाक्षेपसमाधानपरं विवरणं वर्तते । एतच्चातीवमहत्त्वपूर्णं प्रामाणिकम् । भाष्ये महत्वन्च इष्ट्यादिना सूत्र-वार्त्तिकप्रत्याख्यानपुरःसिद्धान्तस्थिरीकरणत्वम् ।

सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुसारिभिः ।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ।।

एतदपि महाभाष्ये संघटते । सूत्रानुसारिभिः वाक्यैः स्वकृतैः परकृतैः वार्त्तिकरूपे ऽर्थः । एतच्च महाभाष्ये दृश्यते एव । "अथ शब्दानुशासनम्" इति स्वयमुक्त्वा तस्यैव स्वपदस्य व्याख्यानमग्रे "अथ इत्ययं शब्दोऽधिकारार्थः प्रयुज्यते, शब्दानुशासनं नामाधिकृतं शास्त्रं वेदितव्यम्" ‌(महा० पृ० ।)

इत्यादिना कृतम् ।

अथ शब्दानुशासनमिति वाक्यं भाष्यकारस्यैव न सूत्रकारस्य इति निर्णीतप्रायम् । केचन आधुनिकाः सूत्रकारवाक्यमेतत् इति वदन्ति । एतच्चानुपपन्नम् । सूत्रकारवाक्यं यदि स्यात् तदा सूत्रकारेण उत्तरसूत्रे शब्दलक्षणमपि कृतं स्यात् । न च तथास्ति । भाष्यकारेण चाग्रे शब्दलक्षणं कृतम् । अन्यत्रापि एवं शैलीसूत्रकाराणां लक्ष्यते अथ योगानुशासनम् (योगसूत्र - 1/1/1) चोदनालक्षणोऽर्थो धर्मः (1/1/2) इत्यादि ।

एवञ्च पाणिनि-कात्यायन-पतञ्जलिमुनि गिरां समवायः एकीभूतो व्याकरणशास्त्रम् परमतीर्थभूतं पवित्रं पुनाति लोकम् । अत एव त्रिमुनि व्याकरणमुच्यते । अत एव सिद्धान्तकौमुद्यां मुनित्रयं नमस्कृत्येति उक्तम् ।

तत्र वार्त्तिकेषु कानि कात्यायनप्रणीतानि कानिचित् भाष्यकारप्रणीतानि । सौनागवार्त्तिकान्यपि दृश्यन्ते । तत्र कानि कात्यायनस्य कानि च भाष्यकारस्येति विवेकः कठिनः । तथापि सम्प्रदायत एव निर्णयो जायते । कात्यायनवार्त्तिकेषु वाच्यम्, वक्तव्यम्, उपसंख्यानामित्यादिशब्दः अन्ते दृश्यते । तस्य चानुव्याख्यानं भाष्यकारैः कृतमस्ति । भाष्यकारवचने च तथा न प्रायो न दृश्यते यथा "सर्वनाम्नो वृत्तिमात्रे पुम्वद्भावः" इति । एवञ्चान्याचार्यवार्त्तिकवाक्येऽपि तथा विवेकः सम्प्रदायादेव कर्त्तव्य तत्र वार्त्तिकेषु क्वचिदुपसंख्यानशब्दः प्रयुक्तः इति तद् वाक्यमुपसंख्यान शब्देन गृह्यते परिगणितेषु न्यूनतापूर्त्त्यर्थं यद् वाक्यं तत्रैवोपसंख्यानशब्दप्रयोगः । यथा उपसर्गाः क्रियायोगे (1/4/59) इति सूत्रे "मरुच्छब्दस्योपसंख्यानम्" "श्रच्छब्दस्योप-

संख्यानम्" गतिश्चेति सूत्रे कारिका शब्दस्योपसंख्यानम् ।

यथा वा ध्रुवमपायेऽपादानम् ॥1/4/24॥ इति सूत्रे जुगुप्सा विराम प्रमादार्थानामुपसंख्यनमिति । यत्र च विशेषेण विधिर्वा निषेधो वा कर्त्तव्या भवति तत्र वाच्या वक्तव्यमिति शब्दघटितं वार्त्तिकवाक्यं दृश्यते यथा सम्प्रदानसंज्ञासूत्रे कर्मण: करणसंज्ञासम्प्रदानस्य च कर्मसंज्ञा वक्तव्या गत्यर्थेषु नीवह्योः प्रतिषेधो वक्तव्यः । इति

वस्तुतस्तु वक्तव्योपसंख्यानादिशब्दभेदेऽपि न वार्त्तिकत्वं भिद्यते । भवतु सूक्ष्मो हेतुः प्रयोगे तथापि उपसंख्यानेऽपि अनुक्तचिन्तायाः सत्त्वात् वार्त्तिकत्वमक्षतमेव । पाणिनीयव्याकरणातिरिक्तशास्त्रेषु अपि वार्त्तिकानि सन्ति तत्तदाचार्यप्रणीतानि । यथा शारीरकसूत्रोपरि शाङ्करभाष्यमधिकृत्य सुरेश्वराचार्य प्रणीतानि वार्त्तिकानि श्लोकबद्धानि सन्ति ।

यथा वा मीमांसादर्शने भाट्ट श्लोकवार्त्तिकम् । एवमेव न्यायादिशास्त्रेष्वपि वार्त्तिकशास्त्र दृश्यते । इदं तु वैलक्षण्यं यत् दर्शनान्तरेषु वार्त्तिकानि तत् दर्शनसूत्रभाष्यव्याख्यानभूतानि व्याकरणवार्त्तिकानि च सूत्रोपरि सन्ति तद् व्याख्यानमूलन्च महाभाष्यम् इति । कात्यायनवार्त्तिकं सूत्रेषु उक्तानुक्तदुरुक्तचिन्ताकृतं प्रवृत्तम् । वार्त्तिकत्वं तु समानं सर्वत्र । तत्र महाभाष्ये बहूनि वार्त्तिकानि सूत्राक्षरैरेव सिद्धानीतिकृत्वा खण्डितानि स्थत्यान्येवोपसंख्यानानि रक्षितानि । एवन्च कात्यायनवार्त्तिकानां व्याकरणशास्त्रे महत्त्वं नातिरोहितमस्ति । भूयसी संख्या कात्यायनवार्त्तिकानाम् । कात्यायनतः पूर्वमपि पाणिनीये वार्त्तिकानि आसन् इति परे विद्वांसः

मन्यन्ते । सौनागवार्त्तिकानि अत्यादयः क्रान्ताद्यर्थे द्वितीयेत्यादीनि । यथा वा तत्र तत्र भाष्ये क्रोष्ट्रीयाः पठन्ति भारद्वाजीयाः पठन्तीत्यादिवचनैः तत् वार्त्तिकानि महाभाष्ये पठितानि सन्ति । क्वचिच्चापर आह इत्यादि-शब्दैः स्मृतम् ।

सूत्रार्थ तत् प्रयोगप्रदर्शनपरा वृत्तिः ।1 वृत्तिषु च सर्वप्राचीना वृत्तिः काशिकावृत्तिरिति यदमज्जर्यामुक्तम् । तत्र काशिकाग्रन्थे वामनजया-दित्यविरचिते मङ्गल एव तस्या महत्त्व वर्णितम् । इष्ट्युपाख्यानवतीत्या-दिना । तत्र समागतानां वार्त्तिकानामिह शोधप्रबन्धे मया स्वबुद्ध्या यथा-शास्त्रं समीक्षणं क्रियते ।

कात्यायनप्रणीतानि वार्त्तिकानि महाभाष्ये व्याख्ये यत्वेन गृही-तानि दृश्यते । तत्राद्यौ प्रथमवार्त्तिके स्मर्यते -

### 1. सिद्धे शब्दार्थसम्बन्धे

शब्दश्चार्थश्च सम्बन्धश्चेति समाहारद्वन्द्वात् सप्तमी । सम्बन्ध-श्चात्र प्रत्यासत्त्या शब्दार्थयोरेव गृह्यते । त्रयाणामात्यन्तिकाश्लेषप्रदर्शनाय समाहार निर्देशः । अभिव्यापकत्वं सप्तम्यर्थः । सिद्धशब्दस्य च प्रत्येकमन्वयः । सिद्धशब्दार्थसम्बन्धमभिव्याप्य पाणिनेराचार्यस्य लक्षणं प्रवृत्तमिति भावः ।

---

1- इष्ट्युपाख्यानवती शुद्धगुणा विवृतगूढसूत्रार्था । व्युत्पन्नरूपसिद्धिर्वृत्तिरियं काशिका नाम {काशिका - पृ० 5}

विषयत्वं वा सप्तम्यर्थः उक्त विषयकं पाणिनिलक्षणज्ञान प्रवृत्तमित्यर्थ ।

इतः पूर्वं "कथं पुनरिदं भगवतः पाणिनेराचार्यस्य लक्षणं प्रवृत्त-मिति भाष्यकारवाक्ये पाणिनिनामग्रहणात् सिद्धे शब्दार्थसम्बन्धे इति वाक्यात् पूर्वं । अथ शब्दानुशासनमित्यारभ्य सर्वो ग्रन्थो भाष्यकारस्येति निर्णीयते । मङ्गलार्थं सिद्धशब्दोपादानात् इदं वार्त्तिककारस्य वाक्यमित्यपि निर्णीतप्रायम् । उक्तञ्च उद्योते प्रकृतवार्त्तिके । अथ पाणिनिसूत्रव्याख्यानभूतं वार्त्तिकमवतारयति - अथं पुनरिति अत एवात्र पाणिनिनामग्रहणम् । इतः पूर्वं तु स वार्त्तिकशास्त्रान्वाख्यानप्रयोजनविषयप्रदर्शनपरो भाष्यकारस्यैव ग्रन्थ इति बोध्यम्[1] ।

अथ यद्यपि काशिकावृत्तौ अस्य वार्त्तिकानुपादानात् प्रकृत शोधप्रबन्धस्य नेदं वार्त्तिकं समीक्ष्यं तथापि अस्य प्रथमवार्त्तिकस्य उपेक्षानर्ह-त्वात् मङ्गलार्थत्वात् शब्दार्थसम्बन्धानां नित्यत्वबोधकत्वाच्च प्रथमं समीक्ष्य-त्वेन इह प्रबन्धे उपादानं कृतम् । काशिकावृत्तौ मङ्गलश्लोके यद्यपि सार-संग्रहोपजीव्यभूतेषु वार्त्तिकस्य ग्रहणं न कृतम् । तथाहि -

वृत्तौ भाष्ये तथा धातु नाम पारायणादिषु
विप्रकीर्णस्य तन्त्रस्य क्रियते न सारसंग्रहः ।

तथापि भाष्यपदेन वार्त्तिकस्यापि संग्रहात् कात्यायनप्रणीतवार्त्तिकोपरि आक्षेप-समाधानपरं भाष्यं पतञ्जलिनाप्रणीतमिति तेन वार्त्तिकस्यापि सुतरां ग्रहणम् ।

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- महाभाष्य - पृ0 38·

शब्दशब्दार्थविचार:

तत्र सिद्धशब्दो नित्यपर्याय: । सिद्धशब्दस्य नित्यपदार्थवाचकत्वं महाभाष्येऽनेकधा व्युत्पादितम् । तथाहि नित्यपर्यायवाचीसिद्धशब्द: । कथं ज्ञायते यत् कूटस्थेषु अविचालिषु भावेषु वर्तते । तद् यथा सिद्धा द्यौ: सिद्धा पृथिवी सिद्धमाकाशमिति । ननु चभो कार्येष्वपि वर्तते तद्यथा सिद्ध ओदन: सिद्ध: सूप: सिद्धा यवागूरिति । यावता कार्येष्वपि वर्तते तत्र कुत एतत् नित्यपर्यायवाचिनो ग्रहणं न पुन: कार्ये य: सिद्धशब्द इति । संग्रहे तावत् कार्यप्रतिद्वन्द्विभावान्मन्यामहे नित्यपर्यायवाचिनो ग्रहणम् । अथवा सन्त्येकपदान्यप्यवधारणानि तद्यथा अब्भक्ष वायुभक्ष इति अप एव भक्षयति वायुमेव भक्षयतीति मन्यते एव मिहापि सिद्ध एव न साध्य: । अथवा पूर्वपद-लोपोऽत्र द्रष्टव्य:, अत्यन्तसिद्ध: सिद्ध इति तद्यथा देवदत्त:, दत्त: सत्य-भामा भामेति अथवा व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणमिति नित्यपर्यायवाचिनो ग्रहणमिति व्याख्यास्याम:"¹ ।

शब्दनित्यत्वविचार:

तत्र शब्दार्थसम्बन्धानां सिद्धत्वं नित्यत्वम् । तल्लक्षणञ्च कूटस्था-विचाल्यपायोपजनरहितत्वं कूटस्थत्वम् अविनाशित्वम् । कूटमयोधन: तद्वत् तिष्ठतीति कूटस्थ: शब्द: अविचालीत्यनेन क्रियाराहित्यं द्योतितं अनपायोप-

---

1- महा० - पृ० 48.

जन्मशब्देन च परिणामाभावो द्योतितः । एवञ्च ध्वंसाप्रतियोगित्वम् प्राग-भावाप्रतियोगित्वं वा नित्यत्वमिति फलितम् । न च शब्दस्य लक्षणत्रितय-प्रध्वंसिनः कथं नित्यत्वं नित्यत्वे च सर्वदोपलब्धिप्रसङ्ग इति वाच्यम् । शब्द-शब्देन स्फोटरूपस्य शब्दस्य ग्रहणात् । स्फोट एव शब्दः । स्फुटति अर्थो यस्मात् इति व्युत्पत्ते । तस्यैव शब्दार्थसम्बन्धरूपवृत्त्याश्रयता अर्थवाचकता च । उत्पत्तिप्रागभावप्रतियोगिनां क्रमशः उत्पत्तिमतां ध्वनीनां चैकत्र संहत्य समुदायाभावात् न वाचकत्वं न च शक्त्याश्रयता । उक्तञ्च महाभाष्ये यावद् गकारे वाक् न तावत् औकारे यावदौकारे न तावत् गकारे इति । न पूर्वपूर्व-वर्णध्वन्यनुभवजन्यसंस्कारविशिष्टे चरमवर्णे प्रत्यक्षे जातेऽर्थबोधानुभवात् तादृश विशिष्टे एव वाचकत्वमिति वाच्यम् । यादृश क्रमेणानुभवः तत् क्रमेणैव संस्कारोद्बोधात् स्मृतिरिति नियमाभावात् कदाचिद् व्युत्क्रमेणापि संस्कारो-बोधात् नदीपदेन दीनस्थसारपदेन रसस्यापि बोधप्रसङ्गात् । न च राम इत्यत्र रकारसंस्कारविशिष्टाकारः तादृश संस्कार ...विशिष्टो मकारस्तादृश संस्कार-श्रय विशिष्टाकार इति तस्मात् दाशरथेरर्थस्य बोध इति ।

स्फोटोपपत्तिः

प्रक्रियायां प्रमाणमस्ति । न च समवायसम्बन्धेन संस्कारस्यात्मनि उत्पद्यमानत्वात् वर्णेषु सम्भवः । विषयता सम्बन्धेन वर्णेषु सतोऽपि संस्कारस्य न सर्वस्य सर्वत्र सम्भवः । रकारसंस्कारः विषयतया रकारे न तु आकारे मकारे वा । मकारसंस्कारश्च मकारे न तु अकारे इति । न चाव्यवहितोत्तरत्व-

जन्मशब्देन च परिणामाभावो द्योतितः । एवञ्च ध्वंसाप्रतियोगित्वम् प्रागभावाप्रतियोगित्वं वा नित्यत्वमिति फलितम् । न च शब्दस्य लक्षणत्रितयप्रध्वंसिनः कथं नित्यत्वं नित्यत्वे च सर्वदोपलब्धिप्रसङ्ग इति वाच्यम् । शब्दशब्देन स्फोटरूपस्य शब्दस्य ग्रहणात् । स्फोट एव शब्दः । स्फुटति अर्थो यस्मात् इति व्युत्पत्ते । तस्यैव शब्दार्थसम्बन्धरूपवृत्त्याश्रयता अर्थवाचकता च । उत्पत्तिप्रागभावप्रतियोगिनां क्रमशः उत्पत्तिमतां ध्वनीनां चैकत्र संहत्य समुदाया भावात् न वाचकत्वं न च शक्त्याश्रयता । उक्तञ्च महाभाष्ये यावद् गकारे वाक् न तावत् औकारे यावदौकारे न तावत् गकारे इति । न पूर्वपूर्ववर्णध्वन्यनुभवजन्यसंस्कारविशिष्टे चरमवर्णे प्रत्यक्षे जातेऽर्थवो धानुऽभवात् तादृश विशिष्टे एव वाचकत्वमिति वाच्यम् । यादृशं क्रमेणानुभवः तत् क्रमेणैव संस्कारोद्बोधात् स्मृतिरिति नियमाभावात् कदाचिद् व्युत्क्रमेणापि संस्कारोबोधात् नदीपदेन दीनस्थसारपदेन रसस्यापि बोधप्रसङ्गात् । न च राम इत्यत्र रकारसंस्कारविशिष्टाकारः तादृशं संस्कार द्वयविशिष्टो मकारस्तादृशं संस्कारत्रय विशिष्टाकार इति तस्मात् दाशरथेरर्थस्य बोध इति ।

स्फोटोपपत्तिः

प्रक्रियायां प्रमाणमस्ति । न च समवायसम्बन्धेन संस्कारस्यात्मनि उत्पद्यमानत्वात् वर्णेषु सम्भवः । विषयता सम्बन्धेन वर्णेषु सतोऽपि संस्कारस्य न सर्वस्य सर्वत्र सम्भवः । रकारसंस्कारः विषयतया रकारे न तु आकारे मकारे वा । मकारसंस्कारश्च मकारे न तु अकारे इति । न चाव्यवहितोत्तरत्व-

सम्बन्धेन रकारसंस्कारः रकारविषयकोऽपि आकारे संक्रमिष्यति न वा संक्रमतु रकारसंस्कारविशिष्ट आकारस्तु भविष्यति उक्त सम्बन्धेनेति वाच्यं तथात्वे प्रमाणाभावात् । न च शाब्दान्यथानुपपत्तिः प्रमाणम् । शाब्दस्यान्यथोपपत्तेः । तथाविधसंस्कारकल्पनायामपि तथाविधस्मरणनैयत्याभावात् व्युत्क्रमेणापि बोधापत्तिर्दुर्निवार्या ।

स्फोटपक्षे च न क्वापि दोषः । न नु स्फोटपक्षेऽपि एकेन वर्णेन स्फोटो व्यज्यते सर्वै वेति । नाद्यः वर्णान्तरोच्चारणवैयर्थ्यात् । न द्वितीयः सर्वैः वर्णैश्चेत् स्फोटो व्यज्यते तदा प्रथमवर्णेन क्षणस्थायिनाभिव्यक्तः स्फोटः द्वितीयक्षणे द्वितीयवर्णेनाभिव्यक्तिकाले प्रथमवर्णस्याभिव्यञ्जकनाशात् अभिव्यक्तेरण्यभावात् द्वितीयवर्णेनाभिव्यक्तस्फोटस्य च अन्तिमवर्णाभिव्यक्तिकालेऽभिव्यञ्जकनाशात् असद्भावात् नार्थवाचकता स्फोटोऽपि व्यवतिष्ठते । नचानभिव्यक्तः स्फोटः वाचकः । ध्वनिरूपरूपितस्यैव स्फोटस्य वाचकत्वावधारणात्। न च स्फोटः सावयवे येन तत् वर्णैः तत्तदवयवा अभिव्यज्यन्ते । तथा सति स्फोटस्यानित्यत्वप्रसङ्गात् । एकस्य च स्फोटस्याभिव्यञ्जनार्थं सर्ववर्णोपयोगिता च व्यर्था स्यात् इति चेत् न स्फोटपक्षे कस्यापि दोषस्याभावात् । एकस्यापि स्फोटस्य सर्ववर्णाभिव्यङ्ग्यता स्वीकारात् । अन्त्यवर्णबुद्धिर्निर्ग्राह्यता तस्य । पूर्व-पूर्ववर्णैश्च स्फुट-स्फुटतरं स्फुटतात्वेन रूपेण स्फोटस्य एकस्यैवान्तिमवर्णेन पूर्णतयाभिव्यक्तत्वात् । एवञ्च सर्ववर्णानामपि उपयोगः । न च विपरीतक्रमेण स्फुटिते स्फोटे तदर्थवाचकत्वं सम्भवति ।

एवञ्च शब्दपदेन स्फोटस्य ग्रहणात् तस्य च नित्यत्वात् सिद्धपदार्था-

सम्बन्धेन रकारसंस्कारः रकारविषयकोऽपि आकारे संक्रमिष्यति न वा संक्रमतु रकारसंस्कारविशिष्ट आकारस्तु भविष्यति उक्त सम्बन्धेनेति वाच्यं तथात्वे प्रमाणाभावात् । न च शाब्दान्यथानुपपत्तिः प्रमाणम् । शाब्दस्यान्यथोपपत्तेः । तथाविधसंस्कारकल्पनायामपि तथाविधस्मरणनैयत्याभावात् व्युत्क्रमेणापि बोधापत्तिर्दुर्निवार्या ।

स्फोटपक्षे च न क्वापि दोषः । न नु स्फोटपक्षेऽपि एकेन वर्णेन स्फोटो व्यज्यते सर्वै वेति । नाद्यः वर्णान्तरोच्चारणवैयर्थ्यात् । न द्वितीयः सर्वैः वर्णैश्चेत् स्फोटो व्यज्यते तदा प्रथमवर्णेन क्षणस्थायिनाभिव्यक्तः स्फोटः द्वितीयक्षणे द्वितीयवर्णेनाभिव्यक्तिकाले प्रथमवर्णरूपाभिव्यञ्जकनाशात् अभिव्यक्तेरण्यभावात् द्वितीयवर्णेनाभिव्यक्तस्फोटस्य च अन्तिमवर्णाभिव्यक्तिकालेऽभिव्यञ्जकनाशात् असद्भावात् नार्थवाचकता स्फोटोऽपि व्यवतिष्ठते । नचानभिव्यक्तः स्फोटः वाचकः । ध्वनिरूपरूपितस्यैव स्फोटस्य वाचकत्वावधारणात्। न च स्फोटः सावयवे येन तत् वर्णैः तत्तदवयवा अभिव्यज्यन्ते । तथा सति स्फोटस्यानित्यत्वप्रसङ्गात् । एकस्य च स्फोटस्याभिव्यञ्जनार्थं सर्ववर्णोपयोगिता च व्यर्था स्यात् इति चेत् न स्फोटपक्षे कस्यापि दोषस्याभावात् । एकस्यापि स्फोटस्य सर्ववर्णाभिव्यङ्ग्यता स्वीकारात् । अन्त्यवर्णबुद्धिर्निर्ग्राह्यता तस्य । पूर्व-पूर्ववर्णैश्च स्फुट-स्फुटतरं स्फुटतात्वेन रूपेण स्फोटस्य एकस्यैवान्तिमवर्णेन पूर्णतयाभिव्यक्तत्वात् । एवञ्च सर्ववर्णानामपि उपयोगः । न च विपरीतक्रमेण स्फुटिते स्फोटे तदर्थवाचकत्वं सम्भवति ।

एवञ्च शब्दपदेन स्फोटस्य ग्रहणात् तस्य च नित्यत्वात् सिद्धपदार्था-

न्वये नायोग्यता । तत्र केचन वर्णस्फोटवादिनो मीमांसका:, केचित्तु वर्णव्यतिरिक्तं पदस्फोटमिच्छन्ति । वाक्यस्फोटमपरे संगिरन्ते । इति एवं वैविध्यात् अष्टौ स्फोटा: वर्णपदवाक्यभेदेन त्रिधा वर्णजातिपदजातिवाक्यजातियेदेन च त्रिधा एव षड्धा । अखण्डपदस्फोट, अखण्डवाक्यस्फोट इति द्वेधा एवमष्टधा-स्फोट तत्र वैयाकरणानां मते वाक्यस्फोटस्यैव मुख्यत्वम् अन्येषान्च सर्वेषां शास्त्रप्रक्रियानिर्वाहाय कल्पना । उपपादितन्चैतत् वैयाकरणलघुमन्जूषायां प्रामाणिकवैयाकरणेन नागोजीभट्टेन "तत्र वाक्यस्फोटो मुख्यो लोके तस्यैवार्थ-बोधकत्वात् तेनैवार्थपरिसमाप्तेश्च । शास्त्रप्रक्रियानिर्वाहको वर्णस्फोट: तत्र प्रतिवाक्यं संकेतग्रहासम्भवात् तदन्वाख्यानस्य लघुनोपायेनाशक्यत्वाच्च कल्पनया पदानि प्रविभज्य पदे प्रकृतिप्रत्ययभागकल्पनेन कल्पिताभ्यामन्वयव्यतिरेकाभ्यां तत्तदर्थविभागं शास्त्रमात्रविषयं परिकल्पयन्ति स्म आचार्या:"[1] । एवन्च स्फोटो मुख्यो वाचक: तद् ग्राहकश्च ध्वनि: । स: च श्रोत्रग्राह्य: स्फोटश्च बुद्धिग्राह्य: इति वैयाकरणमतम् । उक्तन्च प्रमाणभूतेनाचार्येण भर्तृहरिणा -

द्वावुपादानशब्देषु शब्दौ शब्दविदो विदु:
एको निमित्तं शब्दानामपरोऽर्थे प्रयुज्यते । (44)

(वाक्यपदीय - 61)

अस्यायं भाव: - उपादीयते स्वरूपेऽध्यारोप्यते अर्थरूपता विहाय स्वरूपमिवापद्यतेऽर्थो येन स उपादानो वाचक: शब्द: । तत्र वाचकशब्देषु

---

1- मन्जूषा - पृ० 4·

उच्चारणेन प्रकाशनीयेषु द्वौ शब्दौ व्यङ्ग्यव्यञ्जकरूपौ लक्ष्येते इति शब्दविदो विदुः । एकः ध्वनिरूपः शब्दानां स्फोटरूपाणां निमित्तम् अभिव्यञ्जकत्वेन निमित्तम् । अपरः स्फोटः अर्थे वाचकत्वेन प्रयुज्यते इति ।

तपरसूत्रे भाष्येऽप्युक्तम् -

ध्वनिः स्फोटश्च शब्दानां ध्वनिस्तु खलु लक्ष्यते ।
अल्पो महाँश्च केषाञ्चित् उभयं तत् स्वभावतः[1] ।।

अत्र कैयटः[2] - ध्वनिः स्फोटश्च व्यङ्ग्यो व्यञ्जकश्च स्तः इति शेषः । शब्दानां व्यङ्ग्यानां सम्बन्धी व्यञ्जको यो ध्वनिः स एव महानल्पश्च लक्ष्यते । व्यङ्ग्यस्तु अभिन्नकाल एव । उभयं व्यङ्ग्यो व्यञ्जकश्च प्रमाणेन स्वभावत स्वरूपेणसिद्धाविति" ।

इत्थं वैयाकरणमते स्फोटस्यैव शब्दत्वं मुख्यं तद्ग्राहकश्च ध्वनिरिति ।

<u>शब्दानित्यत्व पक्षाक्षेपः</u>

केषाञ्चित् ध्वन्स्नि ध्वनिरेव शब्दः श्रोत्रग्राह्यः तदतिरिक्ते तद्व्यङ्ग्ये स्फोटे प्रमाणाभावात् । स चानित्यः कार्यत्वात् । तथाहि शब्दस्तावत् आकाशगुणः समवायेन आकाशे उत्पद्यन्ते क्षण त्रितयप्रध्वंसिनश्च पूर्वपूर्ववर्णश्रवणजन्यसंस्कारविशिष्टान्त्यवर्णश्रवणात् अर्थबोध उपपद्यते तस्यैव तादृशस्या-

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- तपरस्तत्कालस्येति सूत्रे ।   2- तत्रत्या प्रदीपः ।

न्त्यवर्णस्य शक्तिसमाश्रयता । शब्दोऽनित्य: कृतकत्वात् घटादिवत् इति । इत्यनुमानम् "तस्मात् यज्ञात् सर्वहुत ऋच: सामानि जज्ञिरे इत्यादिश्रुतिरपि शब्दानित्यत्वे प्रमाणम् इति ।

तन्न युक्तं शब्दो नित्य:श्रावणत्वात् शब्दत्ववत् इत्यनुमानेन नित्यत्वसिद्धे: श्रावणत्वात् इत्यस्य श्रावणाभिव्यङ्ग्यत्वात् इत्यर्थ: तेन स्फोटे श्रावणत्वाभावेऽपि न क्षति: ।

शब्दनित्यत्वप्रमाणोपन्यास:

शक्त्याश्रयत्वान्यथानुपपत्तिरपि शब्दनित्यत्वे प्रमाणम् । न हि अनित्यो ध्वनि: पदार्थनिरूपितशक्तेराश्रय: सम्भवति उत्पत्तिविनाशशालित्वात् । न चानित्येऽपि ध्वनौ शक्ति: तिष्ठेत् सा चानित्येति वाच्यं शक्तेरपि वैयाकरणनिकाये सिद्धत्वस्वीकारात् । न हि अनित्येषु नित्यशक्तेराश्रयतासम्भवति । तस्मात् अर्थापत्त्या शब्दस्य नित्यत्वं सम्भवति । स च स्फोटो न ध्वनिर्दृष्टविरोधात् ।

श्रुतिप्रमाणादपि शब्दनित्यत्वम् "वाचा वि पयानित्ययेत्यादि अनादिनिधना वागुत्सृष्टा स्वयं भुवेति स्मृतिरपि मानम् । यत्तु सामानि जज्ञिरे इत्यादिश्रुतिर्नित्यत्वे उपन्यस्ता सा ध्वन्युत्पत्तिं प्रदर्श्य गतार्थेति न तया स्फोटस्यानित्यत्वं सिध्यति ।

अत एव वाक्यपदीये उक्तम् -

अनादिनिधनं ब्रह्मशब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः[1] ।।"

इति शब्दस्य ब्रह्मत्वम् आदिनिधनरहितत्वं व्यापकत्वञ्चोक्तम् । अपि च -

नित्याः शब्दार्थसम्बन्धास्तत्राम्नाता महर्षिभिः ।
सूत्राणामनुतन्त्राणां भाष्याणाञ्च प्रणेतृभिः[2] ।।"

महावैयाकरणेन श्रीमता भर्तृहरिणा सिद्धे शब्दार्थसम्बन्धे इति वार्त्तिकाशयं प्रमाणयता मुनित्रयसम्मतमेव शब्दार्थसम्बन्धनित्यत्वमिति स्पष्टमुक्तम् । तत्राचार्याणां पाणिनीनां मते सिद्धे शब्दार्थसम्बन्धे इति वार्त्तिकं व्याचक्षाणानां महाभाष्यकाणां स्फुटमेवाशयो यत् सूत्रकाराणामपि शब्दादिनित्यत्वमभिप्रेतम् । अपि च + "पृषोदरादीनि यथोपदिष्टम्" तदशिष्यं संज्ञा प्रमाणत्वात् इत्यादि सूत्रयतामाचार्याणां शब्दार्थसम्बन्धनित्यत्वपक्षः सम्मतः ।

तथाहि पृषोदरादीनि यथोपदिष्टमिति सूत्रेण पृषोदरादिशब्दानां यथोपदेशं साधुत्वमन्वाख्यातं तच्च शब्दनित्यत्वं विना न संगच्छते । "तदशिष्यं संज्ञाप्रमाणत्वात्" इति सूत्रञ्च शब्दनित्यत्वमनासाद्य न पर्यवस्यति । तथाहि संज्ञानं संज्ञाबोधस्तत् प्रमाणत्वात् लिङ्गवचननियमो भविष्यति आपो दारा इत्यादि शब्दवत् अतस्तत् लुपि युक्तवद् व्यक्तिवचने इति सूत्रमशिष्यम् । इत्येवं रूपेणानुशासनात् प्रागपि शब्दानां नित्यत्वं सूत्रकारेण सूचितं भवति ।

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- वाक्यपदीय प्रथमकारिका - पृ0 2.
2- ,, का0 23 - पृ0 34.

"लुब्योगाप्रख्यानात्" योगप्रमाणे च तदभावेऽदर्शनं स्यादिति सूत्राभ्यां पान्चाला इत्यत्र पन्चालानां निवासो जनपद इत्येवं भूतस्य योगस्यावयवार्थस्य प्रख्यानम् अवगमो नास्ति यदि स्यात् तर्हि सम्प्रति विनापि क्षत्रिययोगं देशविशेषे पन्चालशब्दव्यवहारदर्शनं यद भवति तन्न स्यात् अतो योगानवगमात् तद्धितो-नोत्पद्यते ततश्च जनपदे लुप् इति सूत्रमपि न शिष्यमित्येवं लुप्प्रत्याख्यानाच्च व्याकरणात् प्रागपि व्यवस्थित साधुभावा: शब्दा: सन्तीति सूचितम् । सा च व्यवस्था शब्दानां नित्यत्वे एवोपपद्यते नानित्यत्वे ।

वार्त्तिककाराणान्च सिद्धे शब्दार्थसम्बन्धे इति सिद्धं तु नित्यशब्द-त्वात् इत्यादिवार्त्तिकैन्चोपनिबन्धयतां शब्दार्थसम्बन्धनित्यत्वं कण्ठत उक्तं भवति । महाभाष्यकाराणामपि "संग्रहे एतत् प्राधान्येन परीक्षितं नित्य: शब्द: नित्येषु शब्देषु कूटस्थैरविचालिभिर्भवितव्यम् । सर्वे सर्वपदादेशा दाक्षी-पुत्रस्य पाणिने: । एकदेशविकारे हि नित्यत्वं नोपपद्यते" इत्यादि भाषमाणानां[1] शब्दनित्यत्वं सर्वथा सम्मतमस्ति । व्याख्यातन्च प्रकृतवार्त्तिकं तत्रैव महाभाष्ये ।

तत्र सिद्धे शब्दे इति विग्रहे शब्दो नित्य: स्फोटरूप इति निर्णीतम् । सिद्धे अर्थे इति विग्रह अर्थ: कीदृश: इति विवेचनीयमवशिष्यते ।

सिद्धे शब्दार्थसम्बन्धे इत्यत्रार्थविचार:

सिद्धे शब्दार्थसम्बन्धो इति वार्त्तिके सिद्धे नर्थे इति विग्रहे अर्थशब्देन

---

1- महाभाष्यम् - पृ० 49.

किं गृह्यते इति विचारणायां योऽर्थो नित्यः स एव सिद्धशब्दार्थान्वयानुप-पत्त्या ग्रहीतुं योग्यः । अर्थत्वञ्चात्राभिधेयत्वं शब्द प्रतिपाद्यत्वं वा । तत्र अर्थस्य वाच्यलक्ष्यव्यङ्ग्यादिभेदेन वैविध्यमस्ति केचिदर्था प्रवाहादयो गंगादि-पदशक्तिबोध्या वाच्याः भवन्ति । केचित् गंगादिपदशक्यतीरादिसम्बन्धिन-स्तटादयो लक्ष्याः भवन्ति । केचिच्च वाच्यलक्ष्यसम्बद्धास्तदसम्बद्धो वा शीत्व-पावनत्वाद्यर्था व्यङ्ग्या भवन्ति इति । अत्र च लक्ष्यव्यङ्ग्यानामपि केनचित् शब्दवाच्यत्वात् प्रधानतः लक्ष्यस्य व्यङ्ग्यस्य च वाच्यार्थपदसम्बद्धत्वाच्च पदाभिधेय एवार्थो गृह्यते ।

## शब्दार्थयोस्तादात्म्योपपत्तिः

स च संकेतितः । संकेतश्च शब्दार्थयोस्तादात्म्यं तच्च तद्भिन्नत्वे सति तदभेदेनप्रतीयमानत्वम् । न तु अभेदः । न च तदात्म्यस्य भेदाभेद घटित-त्वात् विरोधात् अनुपपत्तिरिति वाच्यं भेदस्य वास्तविकत्वात् अभेदस्य चारो-पितत्वात् । न च शब्दार्थयोरभेद एवास्तु इति वाच्यम् । अस्यादिपदप्रयोगे जिह्वाच्छेदप्रसङ्गात् । वह्न्यादिपदप्रयोगे च वह्निनतदर्थयोरभेदात् जिह्वादि-दाहप्रसङ्गात् । प्रत्यक्षादिप्रमाणा विरोधात् । न हि अर्थाः श्रोत्रे रागोपलभ्यते शब्दश्चोपलभ्यते । शब्दश्चाकाशाश्रयः न घटाद्यर्थ इति । शब्दार्थयोर्नास्त्यभेदो व्यतिरेकेणोपलभ्यमानत्वात् । शब्दः श्रुतः इदानीमर्थः श्रूयतामिति व्यवहारात् तयोर्भेदः । न चोभयोः श्रवणस्यैव विधानात् अभेदः सिध्यति, आरोपिता-

किं गृह्यते इति विचारणायां योऽर्थो नित्यः स एव सिद्धशब्दार्थान्वयानुप-पत्त्या ग्रहीतुं योग्यः । अर्थत्वञ्चात्राभिधेयत्वं शब्द प्रतिपाद्यत्वं वा । तत्र अर्थस्य वाच्यलक्ष्यव्यङ्ग्यादिभेदेन वैविध्यमस्ति केचिदर्था प्रवाहादयो गंगादि-पदशक्तिबोध्या वाच्याः भवन्ति । केचित् गंगादिपदशक्यवीरादिसम्बन्धिन-स्तटादयो लक्ष्याः भवन्ति । केचिच्च वाच्यलक्ष्यसम्बद्धास्तदसम्बद्धो वा शीत्व-पावनत्वाद्यर्था व्यङ्ग्या भवन्ति इति । अत्र च लक्ष्यव्यङ्ग्यानामपि केनचित् शब्दवाच्यत्वात् प्रधानतः लक्ष्यस्य व्यङ्ग्यस्य च वाच्यार्थपदसम्बद्धत्वाच्च पदाभिधेय एवार्थो गृह्यते ।

शब्दार्थयोस्तादात्म्योपपत्तिः

स च संकेतितः । संकेतश्च शब्दार्थयोस्तादात्म्यं तच्च तद्भिन्नत्वे सति तदभेदेनप्रतीयमानत्वम् । न तु अभेदः । न च तदात्म्यस्य भेदाभेद घटित-त्वात् विरोधात् अनुपपत्तिरिति वाच्यं भेदस्य वास्तविकत्वात् अभेदस्य चारो-पितत्वात् । न च शब्दार्थयोरभेद एवास्तु इति वाच्यम् । अस्यादिपदप्रयोगे जिह्वाच्छेदप्रसङ्गात् । वह्न्यादिपदप्रयोगे च व्रह्निनतदर्थयोरभेदात् जिह्वादि-दाहप्रसङ्गात् । प्रत्यक्षादिप्रमाणा विरोधात् । न हि अर्थाः श्रोत्रे रागोपलभ्यते शब्दश्चोपलभ्यते । शब्दश्चाकाशश्रयः न घटाद्यर्थ इति । शब्दार्थयोर्नास्त्यभेदो व्यतिरेकेणोपलभ्यमानत्वात् । शब्दः श्रुतः इदानीमर्थः श्रूयतामिति व्यवहारात् तयोर्भेदः । न चोभयोः श्रवणस्यैव विधानात् अभेदः सिध्यति, आरोपिता-

भेदेनाप्युपपत्तेः । एवञ्च शब्दार्थयो वास्तविको भेदः आरोपितश्चाभेदः सिद्धः । न च विभिन्नसत्ताकयोरेकत्रविरोधः सम्भवति । इदं रजतमित्यादिस्थले प्रातिभासिकत्वेन रजतस्य सद्भावेऽपि व्यावहारिकत्वेन निषेध दर्शनात् । न च अध्यारोपिते शब्दार्थयोरभेदे योऽयं शब्दः स अर्थः योऽर्थः स शब्दः इत्यादिव्यवहारो न स्यात् वृद्धिरादैजिति, अयं देवदत्त इत्यादि व्यवहाराः नोपपद्येरन्निति वाच्यम् । पारमार्थिकाभेदत्वस्य तादृश व्यवहारकारणतावच्छेदकत्वानभ्युपगमात् अभेदत्वस्यैव तदभ्युपगमात् लाघवात् । तस्य च प्रतीयमानत्वेनापि व्यवहारनिर्वाहकत्वमुपपद्यते । प्रतीयमानत्वेनाकिञ्च न सर्वत्र पारमार्थिकमेवेति नियमः भ्रमस्थले व्यवभिचारात् ।

केचित्तु शब्दार्थयोर्वस्तुतोऽभेद एव । न च मुखे अग्न्याद्युच्चारणे दाहादिः सम्भवति । कारणतावच्छेदकसम्बन्धाभावात् । दाहं प्रति वह्नेः संयोगसम्बन्धेनैव कारणत्वस्य दृष्टत्वात् । संयोगसम्बन्धातिरिक्तेन येन केन कालिकादिसमवायादिनासम्बन्धेन विद्यमानस्यापि वह्नेर्दाहकत्वादर्शनात् कथमन्यथा शब्दार्थयोर्भेदं मन्यमानाना नैयायिकानां मते मुखे कालिकेन सम्बन्धेन वह्नि सद्भावेऽपि न दाहापत्तिः । एवञ्च शब्दार्थयोरभेदेऽपि संयोगादिसम्बन्धेन मुखे वह्न्यादेरसद्भावे तत्रावच्छेदकता सम्बन्धेन सद्भावे च न दाहादिप्रसङ्ग इति तयोरभेदो वास्तविकेऽपि नानुपपत्तिः । अत एव कोऽयं शब्दः इति प्रश्ने गौरित्युत्तरं कोऽयमर्थ इति प्रश्नेऽपि तदेवोत्तरं संगच्छते ।

अत एव संज्ञासंज्ञिनोः सामानाधिकरण्यमुपपद्यते । न च घटस्य चाक्षुषत्वे घटशब्दस्यापि चाक्षुषत्वापत्तेः इति वाच्यम् इष्टापत्तेः । परन्तु

यथा गन्धवत्त्वस्य सद्भावेऽपि घटत्वादिनैव चाक्षुषत्वं न तु गन्धवत्त्वादिना तथैव घटे घटशब्दत्वस्य विद्यमानत्वेऽपि घटत्वेनैव चाक्षुषत्वं न घटशब्दत्वेन तयोर्भेदोपगमात् । न च तयोरभेदे घटं शृणोमि घटशब्दं पश्यामीति अनुव्यवसायापत्तिरिति वाच्यम् । घटशब्दत्वे चाक्षुषस्य घटत्वे श्रावणस्य च प्रत्यक्षस्याभावेन तेन तेन रूपेण तादृशं तादृशं प्रत्यक्षविरहेण तथाविधानुव्यवसाय विरहात् । न च शब्दानां नित्यत्वेऽनित्यत्वे वा तादात्म्यमभेदरूपं दुरुपपादम् । नित्यत्वे नित्यानित्ययोः शब्दार्थयोरभेदासम्भवात् । अनित्यत्वे शब्दानां क्षणिकत्वेनार्थानाञ्च चिरंतनत्वेन तदसम्भवाच्चेति वाच्यम् । यथा घटे नष्टे मृदः तद्व्यक्तित्वेन घटत्वेन वा ध्वंस प्रतियोगित्वं न तु मृत्त्वेनापि । एवमिहापि शब्दनित्यत्वे घटादीनां तद्व्यक्तित्वेनैव ध्वंसप्रतियोगित्वं न तु घटशब्दत्वेनापीत्यस्य कल्पनात् शब्दानित्यत्वकल्पे तु शब्दानां शब्दत्वेनैव क्षणिकत्वं न तु घटत्वादिनापीत्यस्य च कल्पनात् अदोषात् । न च व तयोरभेदे वह्निशब्दात् दाहो जात इति प्रतीतिः स्यादिति वाच्यम् । तादृश प्रतीतिवारणाय वह्नि शब्दत्वे दाहजनकतावच्छेदकत्वाकल्पनात् इति वदन्ति ।

तन्न युक्तं प्रतिभाति । प्रत्यक्षविरोधात् स्वभावविरोधात् ग्राहकप्रमाणविरोधात् मञ्जूषायां अभेदपक्षस्य निराकृतत्वाच्चेति । घटो न घटशब्द इति प्रत्यक्षविरोधात् अन्यथा घटपदयोरपि पूर्वोक्त कल्पनया भेदोपपत्तिः स्यात् अत एव वृद्धिरादैजिति सूत्रे शेखरे उक्तम् - "[1]पदपदार्थयोस्तादात्म्यस्याङ्गीकारात् । रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनः,

---

1- लघुशब्देन्दुशेखरः - पृ० 24.

शौर्यभङ्गो रावणस्य मदभङ्गश्च वालिन इत्यादौ तयोरभेदप्रतीतेरनुभव-सिद्धत्वात् इत्यन्यत्र विस्तरः ।।

अत्राभेदशब्देन लघुमञ्जूषाग्रन्थसिद्धान्तानुसारात् आरोपिताभेदो गृह्यते । एवञ्च शब्दार्थयोस्तादात्म्यं भेदघटितम् । तच्च संकेतः ।

व्यक्तिपक्षसमर्थनम्

संकेतितश्चार्थोऽभिधेय इति । स च कीदृश इति विचारणायाम् - यत्र संकेतः सः संकेतितः । स च व्यवहारात् गवादिव्यक्तावेव गृह्यते न तु जात्यादौ तथाहि उत्तममध्यमादिवृद्धव्यवहारात् तद्व्यवहारप्रयुक्तगवादिव्यक्तावेव प्रथमवृद्धोबालः गवादिसंकेतं गृह्णाति । किन्च शक्तिग्रहो व्याकरणोपमान, कोशाप्तवाक्यात् व्यवहारतश्च वाक्यस्य शेषात् विवृतेर्वदन्ति, सान्निध्यतः सिद्धपदस्य वृद्धा इति वृद्धोक्तानां शक्तिग्रहोपायानां मध्ये व्यवहारस्यैव मुख्यत्वात् तस्य च प्रवृत्तिनिवृत्तिरूपत्वात् । प्रवृत्तेर्निवृत्ते-र्वा अर्थक्रियाकारितया व्यक्तावेव सम्भवात् सैव वाच्या तत्रैव संकेतः न जात्यादौ । न च व्यक्तिं विना जात्यादीनां स्थिति सम्भवति । न च तां विना उपाधिर्दर्शयितुं शक्यः न नु व्यक्तेर्वाच्यत्वे व्यक्तीनामानन्त्यात् अनन्तव्यक्तिनिरूपित गवादिशब्देषु अनन्तशक्तिस्वीकारात् गौरवम् । तत्र एकस्यैव गोशब्दस्य अनन्तगोव्यक्ति-निरूपितशक्त्याश्रयता स्वीकार्या । न च तत् सम्भवति अनन्तगो व्यक्तिषु संकेतग्रहासम्भवात् । न च अनन्तगोव्यक्तिषु संकेतग्रहासम्भवादेव नानन्त्यदोष इति वाच्यम् । अनन्तगो व्यक्तिषु शक्तिग्रहासम्भवात् शक्तिं विना शाब्द-

बोधेऽतिप्रसङ्गात् व्यक्तिपक्षोऽसङ्गत इत्यभिप्रायात् । न च शक्तिग्रहस्य व्यवहारोपायिकत्वात् व्यवहारस्य च सर्वव्यक्तिनिष्पाद्यत्वाभावात् कस्याञ्चिदेव व्यक्तौ तस्य निर्वर्त्यत्वात् तत्रैव शक्तिग्रहो बोध इति को दोष इति वाच्यम् । प्रतिव्यक्तिशक्तिग्रहासम्भवात् गौरवाच्च । न च व्यवहारेणैव प्रतिव्यक्तिशक्तिग्रहः सम्भवतीति वाच्यम् । तथाविधव्यवहारस्यादृष्टत्वात् । सकृत्शक्तिग्रहे जाते पुनः शक्तिग्रहे सम्पाद्यमाने मया पूर्वमेवेयं व्यक्तिर्ज्ञातेति च प्रतिवचनस्य सम्भवात् । पुनः शक्तिग्रहानुपयोगात् ।

किञ्च या व्यक्तिः गृहीता गो-शब्देन न च सैव व्यवहारान्तरे नियतम् उपयुक्तेति व्यक्त्यन्तरस्य शक्तिं विना बोधो न स्यात् भवति च बोधः । एकत्र व्यक्तौ शक्तिग्रहे व्यक्त्यन्तरदर्शने स्वयमेव प्रथमेवृद्धौ वक्ति इयं गौरिति । न च पुनस्तत्र प्रयत्नोऽपेक्षितो भवति । अतः व्यक्तिशक्तिपक्षे व्यभिचार आपतेत् । शक्तिं विना अपि बोधात् इति चेत् ।

अत्रोच्यते व्यक्तावभिधेयायामपि नानन्त्यव्यभिचारदोषौ मूर्धाभिषिक्तौ सम्भवतः । तथाहि व्यक्तिः शक्या, जातिस्तु सर्वासु व्यक्तिषु प्रख्याविशेषात् सिद्धा अशक्या उपलक्षणम् । जात्युपलक्षितव्यक्तौ शक्तिस्वीकारे आनन्त्याव्यभिचारदोषौ निरस्तौ । तथा च अशक्यगोत्वावच्छिन्न गोव्यक्तौ शक्तौ बाधकाभावः । गोत्वेनोपलक्षितायां गवि एकैव शक्तिः । सर्वासु व्यक्तिषु निरूपकता सम्बन्धेन स्थिता गोत्वेनैकेन शक्यतावच्छेदकेनानुगता शक्तिः । न च गोत्वस्य प्रत्यक्षादिप्रमाणेपनीतस्य शक्यतावच्छेदकस्यानुगमकस्य शक्यत्वे शक्ति । अस्य स्वीकार गौरवम् । अशक्यत्वे च तस्या-

शक्यस्य शक्यतावच्छेदकत्वासम्भवात् । शक्यत्वे सति शक्यविशेषणस्यैव शक्यता-
वच्छेदकत्वनियमात् ।

स्वयमशक्यस्य शब्दादनभिधीयमानस्य शाब्दार्थापरिच्छेदात् । अशक्यस्यापि परिच्छेदकत्वे घटपटादेपि तथात्वापत्तौ अतिप्रसङ्गात् प्रवाहाधिकरणात्मघोषानुपपत्त्या तत्सम्बन्धितीरे लक्षणायां सत्यामपि तीरत्वे लक्ष्यतावच्छेदके न लक्षणा । एवन्च अलक्ष्येणापि मानान्तरमम्येन तीरत्वेन लक्ष्यताया तीरनिष्ठाया: परिच्छेददर्शनात् बाधकाभावात् । शक्यजनकगोव्यक्तिनिष्ठगोत्वेनाशक्येनापि शक्यताया अवच्छेदसम्भवात् न तत्र गोत्वे व्यक्तिवादिनो शक्तिः स्वीकार्या ।

ननु व्यक्तिपक्षे गौः व्यक्तिः वाच्या अवाच्या च जातिः गोत्वम् उपलक्षणम् । तच्चाविद्यमानत्वे सति इतरव्यावर्तकत्वरूपम् । तथा च उपलक्ष्यधर्मिबुद्धौ उपलक्षणधर्मविशिष्टबुद्धेर्हेतुत्वात् गोत्वविशिष्टायागोव्यक्तेर्बोधे अवश्यं वाच्यम् । गोत्वोपलक्षिता गौरिति बुद्धौ गोत्वविशिष्टा गौरिति बुद्धेर्हेतुत्वात् । अन्यथा उपलक्षणस्य कदाचिदपि अविशेषणत्वे अविशेषात् घटेन पटादेरपि उपलक्षितत्वं स्यात् । तथा चाव्यवस्थापत्तिः । एवन्च गोत्वविशिष्टा गौरिति बोधा शक्तिद्वारैव वाच्योऽन्यथातिप्रसङ्गात् । तत्र गोपदं गोत्वविशिष्टे शक्तमिति संकेते नागृहीतविशेषणाग बुद्धिर्विशेष्ये उपजायते इति न्यायात् विशेषणकोटि प्रविष्टगोत्वेऽपि तादृशः संकेतो वाच्यः एवन्च गोत्वविशिष्टा गौरिति बोधे गोत्वस्यापि शाब्दत्वमवश्य स्वीकार्यमन्यथा अशाब्दस्यापि शाब्दबोधेमाने अविशेषात् सर्वपदार्थमाने शक्त्या पदार्थोपस्थिते

-रनैपेक्षणापत्त्या शक्त्यादिविचारो विफल: स्यात् । तथा च गोत्वेऽपि शक्तिस्वीकारे ।

पुन: गोव्यक्तौ शक्तिरिति व्यक्तिवादिनां महद्गौरवम् । म जातिवादिनां तु लाघवात् गोत्वे शक्तिस्वीकारे एव सर्वव्यवहारोपपत्तौ व्यक्तौ न शक्ति: । व्यक्तिव्यवहारस्तु लक्षणयैव सम्भवति ।

न च गौ व्यक्तिर्वाच्या जातिस्तु नाभिधेया न मग्नान्तर-प्रतीत्या शाब्दबोधे उपयुज्यते अपि तु आनन्त्यव्यभिचारान्यथानुपपत्त्या लक्षणया बोध्यते । तथा च लक्षणयोपस्थापितगोत्वस्य प्रकारतया व्यक्ति-विशेष्यकशाब्दे भानं न विरूध्यते । इति वाच्यम् । एकस्यैव गोशब्दस्य शक्त्या व्यक्ते: लक्षणया च युगपत् गोत्वस्योपस्थापकत्वाभावात् । न च युगपत् वृत्तिद्वयं सम्भवति । यदि च गंगायां मीनघोषाविति प्रामाणिक-प्रयोगानुरोधात् युगपत् वृत्तिद्वयमेकस्मिन्नेव गंगापदे न विरूध्यते इति उच्यते तथापि इह गौरत्युक्ते व्यक्ते: सत्तापि क्रियान्वयेऽनुपपत्त्यभावात् व्यक्तिबोधे जाते विरोधा भावात् । शक्त्यनुगमविरोधानुसन्धाने गोपदेन गोत्वमपि लक्षितं भवतीति मते अजहल्लक्षणया गोत्वविशिष्टा गौरिति बोध:। तथापि शब्दानां समेषां लक्षकत्वापत्तौ वाचकविभागो न स्यात् । लक्षणां परित्यज्याक्षेपेण जात्युपस्थित्या जातिविशिष्टस्य माने चातिप्रसङ्गात् । एवमेव एकसम्बन्धिविधया जात्युपस्थानेऽतिप्रसङ्गसद्भावात् गोत्वे व्यक्ति-वादिना अवश्यमेव शक्ति: स्वीकार्या तथा च गौरवमिति चेत् न, गौरि-त्यादिपदप्रयोगे व्यक्तेरभिधीयमानत्वे आनन्त्यव्यभिचारदोषनिरासाय

शक्यतावच्छेदकस्य गोत्वादेरेकत्वात् तदुपलक्षित गोव्यक्तिशक्तौ न दोषः । न चोक्तन्यायेन गोत्वादौ शक्तिर्बाच्या । अशक्यस्यापि तस्य शक्यतावच्छेदकत्व सम्भवात् । न हि शक्यतावच्छेदकं शक्यमिति नियमः । मानान्तरगोचरस्यापि शक्यतावच्छेदकस्य शक्यसम्बन्धितावच्छेदकतया तदैक्यात् तदवच्छिन्न निरूपितशक्तेरप्यैक्यं सिद्धेः । शक्यतावच्छेदकभेदात् शक्तिभेदो न तु शक्यभेदात् शक्तिभेदः । अत एव तदादिस्थलेऽपि तद्घट इत्यादि शब्दानां घटत्व-पटत्वादिरूपेण नानार्थशक्ततया नानाधर्मावच्छिन्नशक्यता निरूपितैकधर्मावच्छिन्नशक्ततावत्त्वरूप नानार्थकत्वापत्तिवारणाय स्वीयविषयताऽवच्छेदकत्वसम्बन्धेन वक्तृ बुद्धिविशेषोपलक्षिता ये घटत्वपटत्वादयो धर्मा तदवच्छिन्ने तेषां शक्तिः स्वीक्रियते । अननुगत नानाधर्मावच्छिन्न शक्यता निरूपितशक्ततावत्त्वस्यैव नानार्थकत्वात् तदादिस्थले बुद्धिविशेषस्यानुगमकस्य सत्त्वात् नोक्त दोषः । तत्र तत्पदादेः बुद्धिस्थ बोधकत्वात् बुद्धिरेव घटपटादिविषया तस्य उपलक्षणम् । उपलक्षणत्वञ्च तत्पदीयशक्यतावच्छेदकतावच्छेदकत्वेन शक्तिज्ञानविषयत्वे सति तत् पदजन्यबोधविषयत्वेन शक्तिग्राहा विषयत्वम् इति न शाब्दबोधे बुद्धिविशेषस्य मानम् ।

अयं भावा तदादिपदस्य चैत्रत्वादि तत्तद्रूपेण बोधः सर्वानुभवसिद्धः । स च चैत्रत्वादानुगमकधर्मं विनानुपपन्न इति बुद्धिविशेषविषयतावच्छेदकत्वं तदनुगमकधर्मं स्वीकृत्य तदनुगमतीकृत तत्तदवच्छिन्नेषु चैत्रादिषु तदादीनां शक्तिबुद्धिविशेषविषयतावच्छेदकत्वस्योपलक्षणत्वोपगमाच्च न चैत्रत्वादीनां तेन रूपेण शाब्दबोधे भानापत्तिः ।

एवं व्यक्तिवाच्यत्वपक्षेऽपि व्यक्तिनानात्वेऽपि नानन्त्यदोषः । धर्मितावच्छेदकगोत्वादिजात्यनुगतीकृत नानागोव्यक्तिषु एकधर्मावच्छिन्नाया एकस्या एव शक्तेरुपगमात् । धर्मितावच्छेदकजातेर्न शक्यत्वमपि तु उपलक्षणविधयानुगमकत्वात्न शाब्दबोधे भानम् । उपलक्षणीभूतधर्मस्य गोत्वादेः शक्यतावच्छेदकत्वेन शक्तिज्ञानविषयत्वेऽपि गोपदादिजन्यबोधविषयत्वेन तदविषयत्वात् ।

यथा दण्डत्वादेरन्यथा सिद्धत्वेन घटादिकार्यं प्रतिकारणत्वाभावेऽपि कारणतावच्छेदकत्वमङ्गीक्रियते यथा वा तटत्वस्यालक्ष्यस्यापि गंगापदलक्ष्यतावच्छेदकत्वं स्वीक्रियते तथा त्रापि अशक्यस्यापि गोत्वादे गोपदशक्यता वच्छेदकत्वस्य सम्भवात् नोक्तन्यायेन शक्यतापत्तिरस्त य ।

उक्तञ्च वाक्यपदीये हरिणा -

आनन्त्येऽपि हि भावानामेकं कृत्वोपलक्षणम् ।
शब्दः सुकरसम्बन्धो न च व्यभिचरिष्यति ।।

अस्यायमर्थः = भावानां पदार्थानां गवादीनामानन्त्ये अपि नानात्वेनापरिच्छेद्यत्वेऽपि एकं जात्यादिरूपमनुगतम् उपलक्षणमशक्यत्वेऽपि शक्यव्यावर्त्तकं कृत्वा शक्यतावच्छेदकतयाभ्युपगम्य शब्दः गवादिः सुकरसम्बन्धः सुग्राह्य गवादिनिष्ठवाच्यता सम्बन्धः । न च व्यभिचरिष्यति शक्तिग्रहाविषयव्यक्तिं बोधयिष्यति ।

तद्धर्मप्रकारकोपस्थितिं प्रति तद्धर्मावच्छिन्ननिरूपितशक्तिमच्छब्द-

ज्ञानं कारणमिति कार्यकारणभावात् पदार्थोपस्थिति निष्ठकार्यता निरूपिता या तद्धर्मावच्छिन्ननिरूपितशक्तिमच्छब्दज्ञाननिष्ठा कारणता तन्निरूपिताया शक्त्यवच्छिन्ना शब्दनिष्ठा कारणतावच्छेदकता तस्या न व्यभिचरिष्यति इति भावः । अत एव कैयटोपाध्यायेनोक्तम् {महाभाष्य - पृ0 45} "व्यक्तिवादिनस्त्वाहुः शब्दस्य व्यक्तिरेवाभिधेया । जातेस्तूपलक्षणभावेनाश्रयणादानन्त्यादि दोषानवकाशः" ।

तत्रोद्योते नागेशभट्टाः प्राहुः - उपलक्षणभावेन शक्यतावच्छेदकत्वेनेत्यर्थः, तत्र तु न शक्तिः ।। सिद्धे शब्दार्थसम्बन्धे इति वार्त्तिकभाष्यव्याख्यावसरेऽपि कैयटेनोक्तम् - छ द्रव्यपक्षेऽर्थनित्यत्वमुपपादयता । अधिष्ठान चैतन्यमेव जात्याद्युपलक्षितं वाच्यमित्युक्तम् ।

तथा च व्यक्तिपदेन द्रव्यमभिधीयते तच्चाधिष्ठान चैतन्यमेव तस्य च नित्यत्वात् एकत्वाच्च व्यक्तिपक्षे नानित्यत्वानन्त्यादिदोषावकाशः ।

सरूपाणामेकशेष {1/2/64} इत्यत्र सूत्रे भाष्ये व्यक्तिपक्ष उपपादितोभाष्ये । तत्र द्रव्याभिधानं व्याडिरित्यादिवार्त्तिकानि द्रव्यपक्षाभिप्रायेण प्रवृत्तानि ।

## जातिखण्डनम्

व्यक्तिवादी व्याडिराचार्यः । तस्य मतं व्यक्तिरेव मत्यन्मपि व्यक्तौ शक्ति स्वीकार शब्देनाभिधीयते । न च लाघवात् जातावभिधेयायामपि

व्यक्तौ शक्तिस्वीकारानावश्यक इति वाच्यं व्यक्तिभिन्नाया जातेरभावात् न तत्र शक्तिः ।

सा हि किं द्रव्येषु व्यासज्यवृत्त्या तिष्ठति प्रत्येकं पर्याप्ता सती वा । आद्ये एकाश्रयद्रव्यनाशे द्वित्वस्यैवैकघटादिनाशेऽपेक्षा बुद्धिविषया भावात् अप्रतीत्यापत्तेः । गवालम्भने च सर्वद्रव्यालम्भनापत्तिः स्यात् । द्वितीये तु द्रव्यान्तरे आलम्भनानापत्तिः स्यात् । द्वितीये तु द्रव्यान्तरे आलम्भनानापत्तिः स्यात् । किन्च द्वितीयपक्षे गोत्वादेः प्रतिगोव्यक्ति-परिसमाप्तौ गवान्तरेऽनुपलम्भप्रसङ्गः स्यात् । तत्राप्युपलब्धौ जातेरनेक-त्वप्रसङ्गः । अनेकत्वन्च जातेरसम्मतम् । तथा च भाष्यम् -

किन्च पदेन जात्यभिधाने "विनाशे प्रादुर्भावे च सर्वं तथा स्यात्"[1] किं विनश्यते प्रादुष्स्याच्च । श्वा मृत इति श्वा नाम लोके न प्रचरेत् । गौर्जात इति सर्व गोभूतमनवकाशं स्यात् ।।

अस्यायं भावः - यदि जातिः व्यासज्यवृत्त्या सर्वव्यक्तिभिः सम्भूयाभिव्यज्यते इति मते अभिव्यन्जक गोविनाशे जाते सति जातेस्तिरो-भावात् पिण्डान्तरे श्वेति प्रत्ययो न स्यात् एकापाये शतप्रत्यय इव । अथवा आश्रयगोव्यक्त्यपाये आश्रितस्याप्यपायः अवयवापायेऽवयविन इव जातेर्विनाश-प्रसङ्गः । जातेन गो पिण्डेन गोत्वमभिव्यक्तं तच्च सर्वाश्रयवर्त्तीति एकगो-पिण्डप्रत्यक्षत्वे सर्वगोपिण्डप्रत्यक्षत्वप्रसङ्गः । तथा सति सर्वं गोभूतमनवकाशं

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

1- अष्टाध्यायी वार्त्तिकम्, 1/2/52 महाभाष्यम् ।

स्यात् अर्थान्तरप्रत्ययाकाशरहितं स्यात् इत्यर्थः गोव्यक्तीनामानन्त्यात् । गोव्यक्तिप्रत्यक्षत्वतोऽन्यवस्तुप्रत्यक्षावकाशो न स्यात् । अथवा गोत्वादि-जातेर्व्यापित्वमवश्यं वाच्यम् । अन्यथा -

नायाति न च तत्रासीत् अस्ति पश्चान्न चांशवत् ।

जहाति पूर्वं नाधारमहो व्यसन सन्ततिः । इति दोषापत्तिः ।

तथाहि गोव्यक्तिषु उत्पन्नेषु गोत्वजातिन तावत् अन्यगोव्यक्ततः आपातीति वक्तुं शक्यते तस्या निष्क्रियत्वात् । न च तत्रैवासीत् इति वक्तुं शक्यते प्रागुत्पत्तेराश्रयाभावात् । पश्चादेवास्ति इति प्रतीतेः पूर्वं नासीत् इति । न चांशैनायाति इति वक्तुं शक्यते अंशित्वाभावात् अंशित्वमवयवित्वं तथा सति अनित्यत्वादिदोषप्रसक्तिः । न च पूर्वमाधारं त्यक्त्वा अत्रैवायातीति वक्तुं युक्तं पूर्वाधारेऽपि प्रतीतेस्तस्मात् सर्वगता एका जातिरिति वाच्यम् । एवं सति व्यक्त्यैकत्र सा व्यक्ताऽभेदात् सर्वत्रगा यदि जातिर्दृश्येत सर्वत्रेति सर्वेषु पदार्थेषु गोप्रत्ययप्रसङ्गः जातिसंकटश्च स्यात् । तस्मात् न जातिर्वाच्या । व्यक्तिरेव पदार्थो मन्तव्यः ।

व्यक्तिपदार्थत्वे लिङ्गवचनसिद्धिः । न हि जातावभिधेयायां लिङ्गानि वचनानि च सेत्स्यन्ति एकत्वात् जातेः ।

"चोदना सु च तस्यारम्भात्" गोरनुबन्ध्योऽग्नीषोमीय इति विधिवाक्येन गौ-शब्देन गो-व्यक्तिरभिधीयते न गोत्वम् । तथा सति जातौ बोधितायां द्रव्ये आरम्भणालम्भनप्रोक्षणादीनि कर्माणि विगुणानि स्युः । अन्य चोदने अन्यस्य कार्ये क्रियमाणे न यथोक्तं कृतं भवति ।

न चानेकद्रव्यगतैका जातिरभ्युगन्तुं शक्या । न हि एको देवदत्तो युगपत् स्रुग्ने मथुरायां च भवति । न चादित्यादि दृष्टान्तेन सम्भवति । विपर्ययस्यापि सम्भवात् ।

किन्च द्रव्यमेवाभिधीयते न सामान्यं वैरूप्यात् गोव्यक्तिनाम् । न च वैरूप्यात् कथं प्रत्यभिज्ञेति वाच्यम् एकार्थक्रियाकारित्वादिनिमित्तेन सोऽयं गौरित्यादिप्रत्यभिज्ञा प्रत्ययः । अत एव गौश्च गौश्चेत्यादि भेदाधिष्ठान समुच्चयः विग्रहश्च सम्भवति । अन्यथा सामान्यस्यैकत्वात् एकार्थवाचित्वात् पर्यायवत् अप्रयोगः स्यात् । किन्च विजातीयानेकार्थ-सरूपशब्देषु शकटाक्षदेवनाक्षादिषु जातिपक्षेऽपि एकशेषो वक्तव्य एवेति व्यक्ति-पक्षे एकशेषारम्भाने ~~दनोवह~~ + दोषावहः । तस्मात् बाधकाभावात् न्यय-यात्वाच्च व्यक्तिरेव वाच्या न जातिरति सिद्धम् ।

इति व्यक्तिवादोपपत्तिः ।

अथ जातिशक्यत्वपक्षोपपत्तिः

जातिवादिनस्तु वदन्ति - जातिरेव शब्देनाभिधीयते व्यक्तीनामानन्त्यात् सम्बन्धग्रहासम्भवात् । सम्भवेऽपि शक्तेरानन्त्यात् । तदविनापि बोधस्य सद्भावात् व्यभिचाराच्च । न च जातिमुपलक्षणं कृत्वा नान्त्य-व्यभिचारदोषपरिहारः । जातावपि शक्तिस्वीकारावश्यकत्वात् गौरवात् । उपलक्ष्यधर्मिबुद्धौ उपलक्षणविशिष्टस्य हेतुत्वात् गोत्वाद्युपलक्षितबुद्धौ गोत्वादि-विशिष्टबुद्धेर्हेतुत्वं वाच्यं तथा सति ना गृहीतविशेषणा बुद्धिरिति न्यायेन

विशेषणे गोत्वेऽपि सम्बन्धग्रहे लाघवात् तत्रैव शक्तिर्वाच्या । व्यक्तावपि शक्तिस्वीकारे गौरवं स्यात् ।

किन्च शक्यतावच्छेदकस्यापि शक्यत्वमवश्यं वाच्यं घटोऽस्ति इत्यादौ घटत्वप्रकारकघटविशेष्यक शाब्दबोधे घटत्वस्यापि प्रकारतयाभानात्। अशक्यस्यापि सम्बन्धविषया भानेऽतिप्रसङ्गात् । अत एव प्रवृत्तिनिमित्तलक्षणे वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थिति प्रकारताश्रयत्वरूपे वाच्यत्वे सतीति निवेशः कृतः अन्यथा आकाशपदस्य शब्दाश्रयत्वमपि प्रवृत्तिनिमित्तं स्यात् लक्षणास्थले तु लक्ष्यतावच्छेदके तटत्वादौ न लक्षणा तस्य लक्ष्यस्य तटादेः गङ्गात्वेनैवोपस्थितेः । दण्डत्वादेस्तु अन्यथा सिद्धत्वादेव न कारणतेति अदृष्टान्तं तत् । तस्मात् घटत्वप्रकारकबोधस्याक्षयकत्वात् घटत्वेऽपि घटपदशक्तिः स्वीकार्यः । व्यक्तिपक्षे गोत्वादे रूपलक्षणविधया-भानं मानान्तरं गम्य न तु शक्त्योपस्थितम् । तथा च शाब्दबोधे गोत्वस्य प्रतीतिर्न स्यात् ।

प्राथमिकव्यवहारात् गवादिपदानां कस्यान्चित् व्यक्तावेव शक्तिरिति तन्न व्यक्तेर्व्यवहारोपयोगित्वेऽपि गवादिपदानां प्रथमवृद्धेनावापोद्वापाभ्यामाकृतावेव तत्त्वबोधः क्रियते न तु तद्व्यक्तिस्वे अत एव अन्यगो व्यक्तिबोधस्तात्याकृतिदर्शनादेव जायते । एकत्र गृहीतशक्तिर्बालो वदति स्वयमेव व्यक्त्यन्तरं विलोक्य गौरियमिति । अनेन स्पष्टं प्रतीयते यत् बालेनापि उत्तमादिवृद्धव्यवहारात् आकृतावेव संकेतो गृह्यते । यद्यपि आनयनादि व्यापाराः गोव्यक्तिष्वेव सम्भवति तथापि आनयनादिव्यापारा विष्टगो-

पिण्डाकृतिवलि न गोपादात् बोध्यते । अत एव गौरित्युक्ते शुक्ला नीला कपिलेत्यादि भेदाः न प्रतीयन्ते अपि तु सामान्यस्यैव शब्दतः प्रतीतिर्भवति । व्यक्तौ वाच्यायाञ्च विशेष गोव्यक्तिबोधेऽवश्यमेव शुक्लत्वादिगुणविशेषः प्रतीयेत न च प्रतीयते अतः जातिरेवाभिधीयते इति सिद्धं भवति । जातावभिधीयमानायां च द्रव्यद्वारका वाहदोहादय उपपद्यन्ते जाति तद्वतो अभेदोऽपचारात् । गौः शुक्ल इत्यादिसामानाधिकरण्यव्यवहारोण्युपपद्यते ।

अयं भावः - गुणादिभिन्नेषु अनुस्यूतैकाकारप्रतीत्या जातिसिद्धौ तत्र शक्तिग्रहः । शब्दात्तस्याबोधश्च । व्यक्तीनामानन्त्यात् तासु न शक्तिग्रहः । नापि शुद्धानां तासां बोधः । तासां विशेषरूपत्वेन विशेषावगतिप्रसङ्गात् । यथाकृतिरूपादिकं शाब्दबोधे भासते सामान्येन तथा विशेषोऽपि भासेत । जाते शक्यत्वे तु तदाश्रयत्वेनाक्षेपादिना सामान्याकृति रूपादेरेव ग्रहणमिति न दोषः । बालस्यापि प्रथमतः गोव्यक्तौ शक्तिग्रहेऽपि अवायोद्वाय न्यायेन आकृतावेव शक्तिग्रहव्यवस्थितिः ।

अत एव सकृत् उपदृदेशे गौस्त्वया पादा न स्प्रष्टव्य इति अथवा अयं गौरिति बालोऽपि अन्यस्मिन् देशे काले गो पिण्डे च जानाति अयं गौरिति न पादेन स्प्रष्टव्य इति । व्यक्तिपक्षे च न समन्जसम् । न च व्यक्तिपक्षेऽपि जात्युपलक्षित सर्वव्यक्तिबोधे पूर्वोक्तव्यवहारोपपत्तिः । जातेश्च प्रख्याविशेषात् सिद्धिरिति वाच्यम् उपलक्षण याशक्यत्वे शाब्दबोधे भानं न स्यात् । नागृहीत न्यायात् जातावपि शक्ति स्वीकारे गौरवात् ।

अपि च ब्राह्मणं न हन्यात् इत्यादि वाक्यमपि संगतम् । तथाहि

ब्राह्मणशब्देन व्यक्तिमात्रबोधे एकं ब्राह्मणं हत्वा कृती भवेत् । अन्यब्राह्मणहनने कामचारः स्यात् । जातावभिधेयायाञ्च तदाश्रयस्य सर्वस्य हनननिषेधः सम्पन्नो भवति । न च जातेरेकत्वात् एकस्य च युगपदनेकदेशस्थत्वाभावात् गोत्वादेः कथमेकस्यानेकव्यक्तिषूपलब्धिरिति वाच्यम् । एकस्यापि आदित्यादेरनेकदेश-स्थत्वेनोपलब्धिविषयत्वात् । यद्यपि आदित्यादेः अनेकदेशस्थत्वेनोपलब्धारोऽनेके भवन्ति तथापि इन्द्रवत् अनेकदेशस्थ त्वं युगपदबोध्यः । यथा एक इन्द्रो युगपत् च क्रतु शतेषु उपलभ्यते तथेति ।

अत एव एकस्यानेकसम्बन्ध स्वीकारादेव वृक्षा इत्यादौ एकशेषे एकेन शब्देन युगपदनेकवृक्षसम्बन्धात् अनेकवृक्ष प्रत्यय उपपद्यते ।

द्रव्याभिधाने चाकृतेरसंप्रत्ययात् सर्वद्रव्यानवगतेः गौरनुबन्ध्यो-ऽजोऽग्नीषोमीय इत्यादौ गो पदेनाकृतिज्ञानाभावे एकमेव गोरूपं द्रव्यं बोध्यतां तथा च केनचित् तस्या आलम्भने कृते पुनः केनचित् व्यक्त्यन्तरा नालम्भप्रसङ्गः । आलम्भने च कर्मवैगुण्यापत्तिः । विगुणे कर्मणि कृतेन फलाभि-सन्धिरिति । जातावभिधीयमानायां तु न दोषः । न च जातिपक्षेऽपि सर्व-व्यक्तिविषयत्वात् जातेः गौरनुबन्ध्य इत्यादौ सर्वव्यक्तिविषयमनुष्ठानं बोधितं स्यात् तथा च सर्वव्यक्तिविषयालम्भनादि विना कर्मवैगुण्यं स्यादेवेति यदि चानुष्ठानसिद्ध्यर्थमेकद्रव्यविषयमेव कर्म क्रियेत तथापि एकाकृतिरिति प्रतिज्ञा हीयेतेति वाच्यम् आकृतेः सर्वाभिर्व्यक्तिभिः सम्बन्धस्य तुल्यत्वात् सर्वत्रैवाभिन्न-बुद्ध्युत्पादनात् प्रत्येकं परिसमाप्तत्वादेकस्मिन्नपि द्रव्ये तत् कर्म क्रियमाणं जातौ कृतमेव च च भवतीत्यभ्युपगमात् ।

न च द्रव्यपक्षेऽपि अनभिधेयाया जातेरूपलक्षणात् द्रव्यमात्रं परित्यक्त शुक्लत्वादिभेदं शब्देनोच्यते । विधिश्च प्रत्येकं परिसमाप्यते इति वाच्यं द्रव्यपक्षे जात्युपलक्षितव्यक्त्यभिधाने व्यक्तीनामनेकत्वात् गौरनुबन्ध्येत्यादौ एकशेषस्य वक्तव्यत्वापातात् जातिपक्षे च एकत्वादेव तस्यानेकशेषावकाश इति ।

न च जातिपक्षेऽपि जातेरेकत्वात् गौः गावौ गावः इत्यादौ द्विवचन-बहुवचनानि लिङ्गानि चानुपपन्नानीति वाच्यं द्वित्वबहुत्वस्त्रीत्वादीनां गुणानामनित्यत्वात् तद्विवक्षाया वा नित्यत्वात् । जातेः स्वतः एकत्वेऽपि तदाश्रयद्वित्वबहुत्वगतविवक्षायां द्विवचन-बहुवचने भवतः । आश्रयधर्मैराश्रितानां व्यपदेशः । यथा सम्पन्नो यवः विनष्टो यव इति सम्पत्तिविनाशाभ्यां द्रव्यगताभ्यां जातिर्व्यपदिश्यते । तथा लिङ्गसंख्याभ्यामपीत्यर्थः । एकाश्रय-सम्बन्धविवक्षायामेकवचनं द्वयोर्बहूनां वा विवक्षणे द्वित्व-बहुत्वोपपत्तिः । यथा वा शुक्लादिगुणवचनानां शब्दानामाश्रयवतो लिङ्गवचनानि भवन्ति शुक्लं वस्त्रं शुक्ला शाटी । यद्द द्रव्यं श्रितो गुणस्तल्लिङ्गभाक् भवति एव यद्द द्रव्यं श्रिता जाति तल्लिङ्गवचना भविष्यति ।

गौरनुबन्ध्योऽजोऽग्नीषोमीय इत्यादौ जातिपक्षेऽपि नानुपपत्तिः। तथापि यथा अग्निरानीयतामित्युक्ते केवलस्याग्नेरानयनासम्भवात् नान्तरीयकत्वात् अचोदितमपि पात्रमानीयते म एवं जातौ आरम्भणालम्भनादीनि चोदितानि सामर्थ्यात् साहचर्यात् द्रव्यमभिनिविशन्ते । सर्व एवाकृतेः क्रिया योगोऽन्तर्भाक्ति द्रव्याया एवेति द्रव्यद्वारकः संपद्यते ।

न च द्रव्यविनाशे सति जातेर्विनाशः सम्भवति । अनाश्रितत्वात्

अनेकात्म्यात् । अनेक आत्मा आकृतेर्द्रव्यस्य । नित्यत्वे सति अनेकवृत्तित्वं समान्यं गुणानान्चाश्रयद्रव्याधीनस्थित्युत्पत्तिविनाशत्वात् तदाश्रयनाशेऽवश्य-मेव नाशो वक्तव्य इति ।

कृशश्च कृशश्च कृशश्च कृशा इत्यादि विग्रहोऽपि द्रव्यगतभेदमाकृता-वारोप्य उपपद्यते ।

न च विभिन्नार्थेषु समानाकारेषु शकटदेवनार्थेषु प्रयुज्यमानेषु अक्षादिशब्देषु एकशेषो न सिध्येदिति वाच्यं तत्र सामान्यात् सिद्धम् । अश्नोते रक्षः पद्यते पादः । निमीते माषः । इति तत्र विभिन्नासु क्रियासु अभिन्न-प्रत्ययाभिधाननिमित्तं यत् सामान्यं तदेव द्रव्येष्वपि तन्निमित्तं भवति । यथा पाचक इत्याश्रयान्तरगतमपि हि सामान्यं पाकत्वं समवेत समवायात् द्रव्ये उपकरोति । यथा गौरिकादिगतं लौहित्यं संयुक्तसमवायात् पटे लौहि-त्यप्रत्ययमादधाति ।

न च डित्थ-डवित्थादिशब्देन कथमाकृतिरभिधीयतामिति वाच्यम्-डित्थत्वादेरपि सामान्यत्व स्वीकारात् तथाहि बालवृद्धादिसमुच्चारित डित्थादिशब्देषु यथाभेदः तथा तदर्थेष्वपि बालाद्यवस्थानानापरिणाम रूप-नानाविरुद्धधर्माध्यासात् भिन्नेषु डित्थादिषु डित्वत्वादि जातिः । सैव डित्थादि पदशक्या ।

उक्तन्च काव्यप्रकाशकरे - महासाहित्यकवैयाकरणैः श्रीमम्मटाचार्यैः-

सङ्केतितश्चतुर्भेदो जात्यादिर्जातिरेव वा ।

तत्र व्यक्तिपक्षं खण्डयित्वा गौः शुक्लश्चलोडित्थ इत्यादौ चतुष्टयी-शब्दानां प्रवृत्तिरिति महाभाष्यरीत्या गुणक्रियादिषु उपाधिषु संकेतो गृह्यते इति व्युत्पाद्य जातिरेव वेति पक्षो व्युत्पादितः ।

तथाहि "यद्यपि अर्थक्रियाकारितया प्रवृत्तिनिवृत्तियोग्या व्यक्ति-रेव तथाप्यानन्त्यात् व्यभिचाराच्च तत्र संकेतः कर्तुं न युज्यते इति गौः शुक्ल-श्चलो डित्थ इत्यादीनां शब्दानां विषयविभागो न प्राप्नोति च तदुपाधावेव संकेतः । उपाधिश्च द्विविधः - वस्तुधर्मः वक्तृयदृच्छया सन्निवेशितश्च । वस्तु-धर्मोऽपि द्विविधः सिद्धः साध्यश्च । सिद्धोऽपि द्विविधः पदार्थस्य प्राणप्रदो विशेषाधानहेतुश्च । तत्राद्यो जातिः उक्तं हि वाक्यपदीये - नहि गौः स्व-रूपेण गौर्नाप्यगौः गोत्वाभिसम्बन्धात्तु गौरिति । द्वितीयो गुणः । शुक्लादिना हि लब्धसत्ताकं वस्तुविशिष्यते । साध्यः पूर्वापरी भूतावयवः क्रियारूपः । डित्थादिशब्दानामन्त्यबुद्धिनिर्ग्राह्यं संहृताक्रमं स्वरूपं वक्त्रा यदृ-च्छयाडित्थादिष्वर्थेषूपाधित्वेन संनिवेश्यते इति सोऽयं संज्ञा रूपो यदृच्छा-त्मक इति । गौः शुक्लश्च लोडित्थ इति चतुष्टयी शब्दानां प्रवृत्तिरिति महाभाष्यकारः । गुणक्रिया यदृच्छानां वस्तुत एकरूपाणामपि आश्रयभेदात् भेद इव लक्ष्यते । यथैकस्य मुखस्य खड्गमुकु खड्गमुकुर तैलाद्यालम्बनभेदात् ।

हिमपयः शङ्खाद्याश्रयेषु परमार्थतो भिन्नेषु शुक्लादिषु यद्वशेन शुक्लः शुक्ल इत्याद्यभिन्नाभिधान प्रत्ययोत्पत्तिस्तच्छुक्लत्वादि सामान्यम् । गुडतण्डुलादिपाकादिष्वेवमेव पाकत्वादि । बालवृद्धशुक्लाद्युदीरितेषु डित्थादि-शब्देषु च प्रतिक्षणं भिद्यमानेषु डित्थाद्यर्थेषु वा डित्थत्वाद्यस्तीति सर्वेषां

शब्दानां जातिरेव प्रवृत्तिनिमित्तमित्यन्ये । (काव्यप्रकाशे - पृ० 30)
प्रथमाह्निके जातिव्यक्तिपदार्थनिरूपणाधिकरणे कैयटेनापि उक्तम् - जाति-
वादिन आहुः - जातिरेव शब्देन प्रतिपाद्यते इत्यादि । सरूपाणामेकशेष इति
सूत्रे भाष्ये प्रदीपे च निरूपितो जातिपक्षो विस्तरेण ।

तत्र कैयटः यदृच्छाशब्दस्थले जातिपक्षमुपपादयन्नाह - "अथ डित्था
इति भिन्नेषु संज्ञिषु एकाकृत्ययोगात् कथमेकं शब्दवाच्यत्वम् । उच्यते भिन्न-
डित्थशब्दगतं डित्थशब्दत्वं नाम यथा शब्देऽविभिन्नप्रत्ययाभिधानहेतुः, तथा
सोऽयमिति शब्दार्थयोरभेदाध्यवसायात् अध्यस्तडित्थशब्देषु संज्ञिष्वपि सम्बन्धि
सम्बन्धात् अभिन्नप्रत्ययाभिधाननिमित्तमिति सिद्धमेकशब्द वाच्यत्वम् ।
(महाभा० कैयट - पृ० 101)

संज्ञाशब्दस्थले एवं सामान्यमादाय जातिशब्दोपपत्तिः क्रियते ।
अथवा डित्थादिसंज्ञास्थले डित्थादिशब्द एव तदर्थोपधिः । शब्दस्य च प्रत्यु-
च्चारणभिन्नत्वात् नानात्वात् तन्निष्ठा जातिरेव शक्या । ननु आकाशादि-
पदात् कथं जातिरभिधेया । आकाशस्य नित्यत्वात् एकत्वात् निरवयवाच्च
डित्थाद्यर्थ इव प्रतिक्षणं भिद्यमानत्वाभावात् । एकव्यक्तिमात्रवृत्तिजात्यनङ्गी-
काराच्च नाकाशत्वं जातिः । न चाकाशशब्द एवोपाधिस्तत्र आकाशशब्दस्य
बालवृद्धाद्युच्चारितस्य भिन्नत्वात् नानात्वात् आकाशशब्दनिष्ठा जातिः
स्वीकार्या तत्रैव च संकेत इति वाच्यम् । आकाशपदात् निर्विकल्पकबोधाङ्गी-
कर्तृमते धर्मिमात्र बोधस्यैव स्वीकारात् । तत्र चाकाशार्थे आनन्त्यव्यभिचारादि-
दोषानाकाशात् व्यक्तिरेव वाच्येति चेत् ।

अत्रोच्यते आकाशानित्यत्ववादिनां मते तस्यापि प्रतिकल्पमुत्पद्यमानत्वात् कल्पभेदेन भेदमादायाकाशत्व सामान्योपपत्तिः । अथवा एकस्यापि आकाशस्य व्यापकस्य घटमठाद्युपाधिभेदात् नानात्वमादाय आकाशत्वजात्युपपत्तिः । आकाशनित्यत्ववादिमतेऽपि तथैवोपपत्तिः कर्त्तव्या । अथवा तदाश्रितशब्दगत नानात्वाश्रयाकाशे आरोप्याकाशत्व जातिनिर्वाहः । द्यावाभूमिं जनयन् इत्यादिश्रुतिरूपपत्तिरपि आकाशाश्रयशब्दोत्पत्तिमादाय आकाशोत्पत्तौ समन्जसा यथा तथा प्रकृते बोध्यम् ।

न च तथाविधाकाशत्वजात्युपपादेन तत्र शक्तिस्वीकारे आकाशपदात् निर्विकल्पकस्मृतिर्न स्यात् । प्राचीननैयायिकमते आकाशपदात् स्वरूपत एवाकाशपदार्थोपस्थितिस्वीकारादिति वाच्यम् । आकाशपदात् धर्मिमात्रबोधे आकाशवासी नीलमाकासमित्यादिस्थले आकाशपदार्थ वासिकर्तृपदार्थस्य नीलगुणस्य चान्वयो न स्यात् ।

अन्वयितावच्छेदकावच्छिन्ने एव पदार्थान्तरस्यान्वय स्वीकारात् । आकाशस्य च स्वरूपत उपस्थानात् । आकाशवासीत्यत्र आकाशप्रकारकवासि विशेष्यकशाब्दबोधः, नीलं नभ इत्यादौ नीलप्रकारकाकाशविशेष्यक शाब्दो न स्यात् ।

किन्च जात्यखण्डोपाध्यतिरिक्तपदार्थानां न स्वरूपतः भानमिति व्युत्पत्तिः । आकाशस्य च उभयभिन्नत्वात् स्वरूपतो भानं न युक्तम् । तस्मात् आकाशत्वविशिष्टस्य शब्दाश्रयत्व विशिष्टस्याकाशस्योपस्थितिर्वाच्या । एवन्च शब्दाश्रयत्वेनाकाशस्योपस्थिति स्वीकारे शब्दश्रयत्वेऽपि आकाशपद-

वाच्यतावश्यं स्वीकार्या । तत् प्रकारशाब्दानुभवात् । शक्यतावच्छेदकेऽपि अवश्यमेव शक्तिः स्वीकार्या ।

यदि शक्यतावच्छेदके शक्तिर्न स्वीक्रियते तदा गवादिपदात् गोत्वस्य शक्यतावच्छेदकत्वेनैवभानं स्यात् न तु गोपदनिष्ठसंकेतविषयत्वेनेति तदा द्रव्यं द्रव्यपदात् गुणवत्त्वेन बोद्धव्यमित्यादि आधुनिकसंकेतस्थले गुणवत्त्वेन द्रव्यस्य भानं न स्यात् गुणवत्त्वस्य शक्यतावच्छेदकत्वाभावात् ।

एवञ्च आकाशत्वे शब्दाश्रयत्वे वा शक्तिरवश्यं वाच्या । तथा च प्रवृत्तिनिमित्तलक्षणे वाच्यत्वे सतीति विशेषणं न देयमेव ।

ननु तथापि शब्दाश्रयत्वस्यापि आकाशत्वाविशेषात् कथं जातिरिति चेन्न उक्त प्रकारेण जातित्वोपपादनात् । अथवा शब्दाश्रयत्वस्य वाच्यत्वे स्थिते तत्र विशेषणकोटिप्रविष्टस्य शब्दस्य नानात्वात् तस्याश्रयेऽपि आरोपात् जातित्वनिर्वाहः सम्भवति । तथा च जातिपक्षे नैकव्यक्तिस्थले दोषः ।

अभावस्यापि प्रागभाव प्रध्वंसाभावात्यन्ताभावान्योन्यभावभेदात् निरूपाख्यत्वं विशिष्यनिर्वक्तुमशक्यत्वं सामान्यमवश्यं वाच्यं तथा च तदेव शक्यम् । अभावत्वं वा जातिविशेष इति स्वीकार्यम् ।

ननु गोत्वादेः सामान्यस्य निःसामान्यत्वात् जातिवाचकत्वं नोपपद्यते । इति चेन्न नियमतः निःसामान्यं सामान्यमिति वैयाकरणैरस्वीकारात्। उक्तञ्च सर्वं सरूपाणामिति सूत्रे भाष्ये कैयटोपाध्यायैः - गोत्वाश्वत्वे सामान्ये इति व्यावृत्तेषु अनुवृत्तप्रत्ययहेतु सामान्यानामपि सामान्यमाश्रयितव्यम् ।

अथवा निःसामान्यानि सामान्यानीति तार्किकदर्शनं न वैयाकरणै नियोगात आस्थेयम् । कार्यान्नीयमाना हि तेषां पदार्थाः इति सामान्येष्वपि सामान्यमस्ति । अभावाश्चत्वार इत्यत्रापि निरूपाख्यत्वं सामान्यं कल्पनीयम् । तदेवं सर्वत्राकृति सद्भावात् सिद्धमेकशब्दत्वम् ।। (महाभा० कैयट - पृ० ।०।)

आकृतिपक्षमाश्रित्य भट्टपादैरप्युक्तम् -

आनन्त्यव्यभिचाराभ्यां शक्त्यनेकत्वदोषतः
सन्देहाच्चरमज्ञानाच्चित्रबुद्धेरभावतः
अन्वयव्यतिरेकाभ्यामेकरूपप्रतीतितः
आकृतेः प्रथमज्ञानात् तस्या एवाभिधेयता
व्यक्त्याकृत्योरभेदाच्च व्यवहारोपयोगिता
लिङ्गसंख्यादिसम्बन्धाः सामानाधिकरण्यधीः
सर्वं समन्जसं ह्येतत् वस्त्वनेकान्तवादिनः ।

व्याख्यातन्चैतत् शास्त्रदीपिकायाम् - नह्यनन्तासु व्यक्तिषु संज्ञित्वं शक्यतेऽवगन्तुम् । व्यभिचाराच्च व्यक्तीनामशब्दार्थत्वं नियमलक्षणत्वात्सम्बन्धस्यानियमे तदयोगात् । अनन्ताश्च शब्दव्यक्तयोऽनन्तासुव्यक्तिषु कल्प्याः जात्युपलक्षणत्वेऽप्यभिधेयानामनन्तत्वाच्छक्त्यानन्त्यमस्त्येव । व्युत्पत्तिकाले हि जातिरुपलक्षणम्, नत्वभिधानसमये । अभिधानं हि प्रातिस्विकेनैव रूपेण व्यक्तीनाम् । तद्यथा - अक्षत्रयमेकापवरकस्थमेकापवरकस्थित्यैवोपलक्ष्य कश्चित् कंचिदाह - "य एतस्मिन्नपवरकेऽधुना आसते ते त्रयोऽक्षशब्दाभिधेयाः" इति । तन्न यद्यपि व्युत्पत्तिः समयेऽपवरकस्थितिर्निमित्तमुपलक्षणं लभ्यते तथापि शब्दस्तदनापरेण व्यक्तित्रयमेव स्वरूपेणाभिधत्ते इति

भवति शक्तित्रयम् । एवमिहापि यद्यपि व्युत्पत्तिसमये जातिरेकोपलक्षणमासी-
त्तथापि शब्दस्तामस्पृशन्नेव नानारूपा व्यक्तीः स्वेनरूपेणाभिधत्ते इति स्यादेव
शक्त्यानन्त्यम् । अपि च यद् व्यपदेश्यं धर्मिरूपमभिधेयं ततो गो शब्दोच्चारणका
व्यक्तिः प्रतीयामानापि नाश्वादि व्यक्तिभ्यो व्यवच्छिन्ना प्रतीता स्यात्।
नह्य साधारणया कारणन्तरेण द्रव्यं द्रव्यान्तरव्यवच्छिन्नं प्रतीयते । तत्र गौ-
रित्युक्ते सर्वत्राविशिष्टाप्रतीतिः स्यात् । अथाभिधानसमय एव जातिरूप-
लक्षणमित्यभिदधदेव हि व्यक्तिं शब्दो जातिमुपलक्षणमादाय तज्जातीयरूपेणाभि-
धत्ते गो जातीयमिति ततः प्रथमं जातिभिधातव्या । ब नह्यनभिधायजातिं
तज्जातीयत्वेन रूपेण व्यक्तिरभिधातुं शक्यते । ततश्च विशिष्टाभिधानमेव
वाचो युक्त्यन्तरेणापन्नं वः न शुद्धाभिधानम् । विशिष्टाभिधाने च पूर्वतरं
विशेषणमभिधातव्यम् । तदभिधाने च तत् एवात्यन्ताविनाभूतव्यक्तिप्रतिपत्ति-
सिद्धेर्न तत्राभिधानशक्तिकल्पनावसरः । किं च गो शब्द उच्चारिते व्यक्तिषु
संशयो भवति । न कस्यांचिन्निर्णयः । यत्र च संशयो न तस्यामभिधेयता
शब्दस्य निश्चायकत्वात् । सामान्यं तु निर्वि निर्णीयते इति भवत्यभिधेयम् ।
नन्वसत्यपि व्यक्तिविशेषनिर्णये व्यक्तिमात्रं निर्णीयत एव । किमिदं व्यक्ति-
मात्रं सामान्यं विशेषो वा द्व्याकारैव हि वस्तुषु बुद्धिर्व्यावृत्त्यनुगतरूपा ।
तत्र विलक्षणबुद्ध्यालम्बनं च व्यक्तिः, समानबुद्ध्यालम्बनं च सामान्यम् । न
तदुभयातिरिक्तमुक्तं व्यक्तिमात्रं नाम किंचिदस्ति वस्तुनो रूपम् । सामान्यमेव
त्वनेन मात्रशब्देनाभिधीयते इति तदेवाभिधेयम् । प्रथमं च सामान्यमेव शब्दाद्
भम्यते पश्चाच्च व्यक्तिष्वाकाङ्क्षाभात्रं जायते । ततस्तदेवाभिधेयं न व्यक्ति-
विशेषः । विचित्राश्च खण्डमुण्डादिरूपा व्यक्तय इति विचित्रा गो शब्दो-

च्चारणे बुद्धिः स्यात् । एकाकारा तूत्पद्यते । अतोऽभिधेयाजातिः । अन्वयव्यतिरेकाभ्यां चैवमेव युक्तम् । व्यवहाराङ्गता च जातेर्व्यक्त्यनतिरेकादुपपद्यते । अतोऽभिधेया जातिः । नहि जातिर्नाम व्यक्तेरर्थान्तरभूतं किमपि तत्त्वम् । अपितु वस्त्वेन स्यैकमुभयात्मकं व्यावृत्त्यनुगतरूपतया बुध्यते। तत्र सामान्यं शब्दार्थ इति । अयमर्थः - सामान्यात्मना वस्तुशब्दाद् गम्यते, न विशेषात्मनेति । यच्च सामान्यात्मना शब्देन बोधितं तस्य क्रियासम्बन्धश्चोद्यते । शक्नोति च तद् क्रियां च साधयितुम् । अतस्तदेव क्रियाश्रयविशेषरूपमपि । लिङ्गसंख्याकारकसम्बन्धः सामानाधिकरण्यं च सर्वमनेकान्ताश्रयेणैव सुपरिहारम् । यदा तु भेद एव जातिव्यक्त्योस्तदा सर्वमिदं लाक्षणिकव्यक्त्याश्रयणेनोपपद्यते । यत्र तु पशुना यजेत" "अरुण्या क्रीणाति" इत्येवमादौ करणत्व श्रवणं तत्र जातिगुणयोरेवामूर्तयोरपि द्रव्यपरिच्छेदेन मुख्यमेव करणत्वमुपपन्नम् । अधिकरणसम्प्रदानत्वादिरूपत्वं चामूर्तस्यासंभवादभेदं लक्षणाम् आश्रित्यसमर्थनीयम् । आह च -

तेन तल्लक्षित व्यक्तेः क्रियासम्बन्ध चोदना ।
जातिव्यक्त्योरभेदो वा वाक्यार्थेषु व्यवस्थितः ।। इति

"तस्मात्सामान्यमेवाभिधेयं न व्यक्तिरिति सिद्धम्" इत्याकृत्यधिकरणे पार्थसारथिमिश्रैः ।

केवल जातिपक्षे व्यक्तिपक्षे वा सर्वत्रव्यवस्थानुपपत्तिः

वस्तुतस्तु व्यक्तिपक्षे गौः शुक्लश्चलेडित्थ इत्यादौ शब्दानां

व्यक्तिवाचकत्वात् व्यक्तेरकत्वात् विषयविभागोऽनुपपन्नः स्यात् । किन्च तेषामेकार्थबोधकत्वात् सहप्रयोगानुपपत्तिः । न च शक्यतावच्छेदकभेदात् भेदोपपत्तिः । गो पदस्य गोत्वं शुक्लपदस्य च शुक्लत्वमिति शक्यतावच्छेदकभेदात् सहप्रयोगः सम्भवतीति वाच्यम् अशक्यस्य शक्यतावच्छेदकत्वायोगात् अन्यथा द्रव्यत्वादेरपि गोपदशक्यतावच्छेदकत्वापत्तेः ।

न च शक्यनिष्ठविशेष्यतावच्छेदकतया भासमानत्वस्यैव शक्यतावच्छेदकत्वात् गोपदशक्य गोव्यक्तिनिष्ठविशेष्यतावच्छेदकतया भामानत्व गोत्वस्यैव न द्रव्यत्वादेति वाच्यम् । द्रव्यत्वेन गौः गोपदवाच्येति संकेतस्थले द्रव्यत्वप्रकारकगोविशेष्यकबोधो न स्यात् अ गोत्वप्रकारकगोविशेष्यकस्यैव बोधस्य सत्त्वात् । एवन्च शक्यतावच्छेदकेऽपि शक्तिरवश्यं वाच्या तथा च केवलव्यक्तिपक्षे न सर्वत्र व्यवस्था ।

केवल जातिपक्षेऽपि गो शब्दवत् गोत्वादिशब्दात् गोत्वादिविशिष्टबोधापत्तिः । विशिष्टबोधौपयिकस्य जातिशक्तिग्रहस्य सत्त्वात् । न च निर्धर्मितावच्छेदकशक्तिग्रहो गोत्वविशिष्टबोधे हेतुर्गोत्वत्वधर्मितावच्छेदकशक्तिग्रहश्च गोत्वत्वेन तदुपस्थितौ शाब्दबोधे हेतुरिति न गोत्व पदात् तद्विशिष्टबोधानुपपत्तिरिति वाच्यं गोत्वं न गोपदशक्यमिति गोत्वत्वधर्मितावच्छेदकशक्तिग्रहस्य तादृश बोधहेतु ताया आवश्यकत्वात् । यदि च गोत्वे निरवच्छिन्नैव शक्तिः गोपदं गौरित्याकारकं शक्तिसम्बन्धेन गोत्वप्रकारकं गोपदत्वविशिष्टविषयकं शक्तिज्ञानं गोत्वविशिष्टबोधहेतुरिति विभाव्यते तथापि कदाचित् समवायेन गोत्वविशिष्टबोधः कदाचित् कालिकादि

सम्बन्धेनेति व्यवस्थानुपपत्तिः गोत्वविषयकशक्तिज्ञानस्याविशिष्टत्वात् । गोत्वविशिष्ट गोव्यक्तिशक्तिमते तु समवायेन गोत्वविशिष्टविषयकशाब्द-बुद्धिं प्रति तेन सम्बन्धेन गोत्वविशिष्टशक्तिग्रहस्य एवमितरसम्बन्धेन तादृश विशिष्टविषयकबोधे तेन सम्बन्धेन तादृश विशिष्टशक्तिज्ञानस्य हेतुतया तन्नि-यमोपपत्तिः । गोपदं गौरित्याकारक शक्तिग्रहात् तादृश बोधाननुभवाच्च गोत्वादिपदानां गोत्वत्वे शक्तिरित्यपि न प्रकृतिजन्य बोधप्रकारे भावप्रत्यय-विधानात् । गवेतरासमवेतत्वविशिष्टसकलगोसमवेतत्वरूपस्य गोत्वत्वस्य शक्यत्वे लाघवमूलकस्याकृतिपक्षस्य मूलशैथिल्यापत्तेश्च । गोत्वेऽपि गोत्वत्व जाति स्वीकारेऽनवस्थादोषसद्भावाच्च व्याकृतिपक्षे सुव्यवस्था । अत एव न्यायसिद्धान्त-मुक्तावल्यां शब्दखण्डे जातिपक्षे दोषं प्रदर्शयता श्रीविश्वनाथपञ्चाननभट्टाचार्येणो-क्तम् - "यदि तु गोत्वं शक्यमिति शक्तिग्रहः तदा गोत्वप्रकारकपदार्थस्मरणं शाब्दबोधश्च न स्यात् । समानप्रकारकत्वेन शक्तिज्ञानस्य पदार्थस्मरणं शाब्द-बोधं प्रति च हेतुत्वात् । किञ्च गोत्वे यदि शक्तिः, तदा गोत्वत्वं शक्यता-वच्छेदकं वाच्यम् । गोत्वत्वं तु गवेतरासमवेतत्वे सति सकलगो समवेतत्वं तथा च गोव्यक्तीनां शक्यतावच्छेदकेऽनुप्रवेशात् तवैव गौरवम्" (मु० पृ० 279)

तत्रैव दिनकर्यामुक्तम् गोत्वं गोपदशक्यमित्याकारकशक्तिज्ञानमाश्रित्य- "ईदृश शक्तिज्ञानस्य गोत्वप्रकारकत्वाभावेन गामानायेत्यादौ गोत्व प्रकारक-स्मरण शाब्दबोधानुपपत्तिरित्यर्थः । न च गोपदं गत्वे शक्तमित्येतादृश शक्तिग्रहस्यैव शाब्दबोधे हेतुत्वात् तस्य च शक्यांशे गोत्वप्रकारकत्वात् न तत् प्रकारक शाब्दबोधानुपपत्तिरिति वाच्यं शक्तिग्रहे यदंशे गोत्वादिप्रकारकत्वं

शाब्दबोधस्यापि तदंशे गोत्वादिप्रकारकत्वमित्येतादृश समानप्रकारकत्वस्य परमते सिद्धान्तितत्वात् । अत एवापूर्ववादेऽपूर्वस्य पूर्वमनुपस्थितत्वात् कथं तत्र शक्ति-ग्रह इत्याशंक्य कार्यत्वेन घटादिषु शक्तिग्रहात् कार्यतया शाब्दबोधेऽपूर्वभान-मित्युक्तं तैरिति । ननु कार्यत्वाद्युपाधिप्रकारक शाब्दबोधस्थले तादृश समान-प्रकारकत्वस्य तदनुमतत्वेऽपि जातिप्रकारकशाब्दबोधस्थले तादृश समानप्रकारकत्वं न तदनुमतमित्यत आह किन्चेति । शक्यतावच्छेदक वाच्यमिति । गोत्वधर्मिक-शक्यत्वज्ञानस्य गोपदधर्मिक गोत्वादिशक्तिज्ञानस्य वा शाब्दबोधहेतुत्वे गोत्व-त्वावच्छिन्नगोत्वविषयताया निवेश आवश्यकः । निर्धर्मितावच्छेदकशक्ति-ज्ञानस्य, गोत्वाद्यंशे निष्प्रकारकशक्तिज्ञानस्य वा विपरीतज्ञाना विरोधिनः शाब्दबोध हेतुत्वात् । तथा च गोत्वत्वे शक्यतावच्छेदकत्वावगाहि तादृश प्रमाया विषयसाधकत्वात् गोत्वत्वे शक्यतावच्छेदकत्व सिद्धिरिति भावः । तवैव गौरवम् इति । न च गोत्वत्वावच्छिन्नविषयकशक्तिज्ञानस्य कारणत्वे-ऽपि स भ्रमः, न तु तस्य विषयसाधकत्वमिति वाच्यं तथा सति प्रतीतेः कारणतावच्छेदकत्वाद्यंशेऽपि भ्रमत्वस्य वक्तुं शक्यतया कारणतावच्छेदकत्वादीनां कुत्रापि सिद्धिर्न स्यात् । अस्तु वा गोत्वत्वादीनां मनवच्छेदकत्वं तथापि गवे-तरा समवेतत्वादि घटित गोत्वत्वादेर्धर्मितावच्छेदकताधात्मकगोविषयताया शाब्दबोधकारणतावच्छेदक कोटिप्रवेशयुक्तं गौरवं दुर्वारमेवेति" (दिनकरी - पृ० 279)

<u>तत्र सिद्धान्तः</u>

अतो न केवलं व्यक्तिपक्षे जातिपक्षे वा सर्वत्रव्यवस्था सूपपादा

उभयत्र दोषसद्भावात् । अतः जातिर्व्यक्तिश्चोभयं पदार्थः ।

जातिवादिनोऽपि व्यक्तिरपि पदार्थोऽङ्गीकार्यः । व्यक्तिवादिनोऽपि जातिरपि पदार्थोऽङ्गीकार्यः ।

अत एव सरूपाणामेकशेष इति सूत्रे महाभाष्ये "न ह्याकृतिपदार्थकस्य द्रव्यं न पदार्थः द्रव्यपदार्थकस्य वा आकृतिर्न पदार्थः । उभयोरुभयं पदार्थः । कस्यचित् किन्चि प्रधानभूतं किन्चिद् गुणभतम् । आकृतिपदार्थकस्य आकृतिः प्रधानभूता, द्रव्यं गुणभूतम् । द्रव्यपदार्थकस्य द्रव्यं प्रधानभूतमाकृतिर्गुणभूता" ﴾महाभा० – पृ० ११﴿

पस्पशाह्निके महाभाष्येऽपि उक्तम् – "किं पुनराकृतिः पदार्थः आहोस्विद् द्रव्यम्" उभयमित्याह । कथं ज्ञायते । उभयथा ह्याचार्येण सूत्राणि पठितानि । आकृतिं पदार्थं मत्वा जात्याख्यामेकस्मिन् बहुवचनमन्यतरस्यामित्युच्यते । द्रव्यं पदार्थं मत्वा "सरूपाणामित्येकशेष आरभ्यते" ﴾महाभा० – पृ० ४४﴿

तत्रैव कैयटेनापि व्याख्यातम् – "सकलशास्त्रव्यवस्था एकतरपक्षाश्रयणेन न सिध्यतीति पक्षद्वयाश्रयणं प्रश्नपूर्वकं करोति किं पुनरिति । आकृतिपक्षे केवल आश्रीयमाणे सकृद्गतौ विप्रतिषेधे इत्यादि नोपपद्यते । केवलेऽपि व्यक्तिपक्षे पुनः प्रसङ्गविज्ञानात् इत्यादि न घटेत । तस्माल्लक्ष्यसिद्धये क्वचित् प्रदेशे कश्चित् प्र पक्षः परिगृह्यते" ﴾कैयट० – पृ० ४४﴿

तत्र लक्ष्यसिद्धये क्वचित् प्रदेशे क्वचित् पक्षः परिगृह्यते इति कैयट-

वाक्यस्य नायमर्थः यत् एकतरपक्ष एवास्ति । जातिपक्षे व्यक्तिरर्थो नास्ति व्यक्तिपक्षे वा जातिः पदार्थो नास्ति । अपितु सरूपाणामिति सूत्रभाष्यानुरोधात् उभयोरुभयं पदार्थ इति मन्तव्यम् । व्यक्तिप्राधान्यं मत्वा एकशेषारम्भः जातिप्राधान्यं मत्वा जात्याख्यायामिति कैयट तात्पर्यं वर्णनीयम् ।

यद्यपि न ह्याकृतिपदार्थकस्य द्रव्यं न पदार्थः इत्यादि भाष्येण उभयोः पक्षयोरुभयं विशकलितावेव पदार्थौ प्रतीयेते न विशिष्टाविति । तथापि कस्यचित् किञ्चिद् गुणभूतमित्याद्युत्तरभाष्यपर्यालोचनया विशिष्टावेव पदार्थौ वाच्यौ । एवञ्च जातिविशिष्टाव्यक्तिः व्यक्तिविशिष्टा जातिर्वा पदार्थः । तथा च जातिविशिष्टव्यक्तिपदार्थं मत्वा गौः शुक्लश्चलो डित्थ इत्यादिविषयविभागः । न वा गोत्वादिशब्दात् गोत्वविशिष्टबोधापत्तिः समवायेन गोत्वविशिष्टविषयकं शक्तिज्ञानं समवायेन गोत्वप्रकारकबोधे इतरसम्बन्धेन तद्विशिष्टविषयकशक्तिज्ञानं तद्विशिष्टबोधे कारणमिति स्वीकारात् ।

एवं सिद्धे शब्दार्थसम्बन्धे इति वार्त्तिके सिद्धपदार्थस्य शब्देऽर्थे सम्बन्धे चान्वय उपपन्नः । नित्ययोः शब्दार्थयोः सम्बन्धोऽपि नित्य एव ।

व्यक्तिपक्षे च सिद्धे शब्दे अर्थसम्बन्धे चेति विग्रहः कर्त्तव्यः । सम्बन्धश्च बोधजनकत्वरूपः, वाच्यवाचकभावरूपो वेति । स च वृत्तिपदवाच्यः । सा च त्रिधा शक्तिर्लक्षणा व्यन्जना चेति । मन्जूषादिग्रन्थे एतत् सर्वं व्युत्पादितम् । विस्तरभयान्ने वितन्यते इति दिक् ।

(2) प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु न ।
आचारदप्रधानत्वाल्लोपश्च बलत्तरः ।।

वार्त्तिकमिदम् ।

आदिरन्त्येनसहेता इति सूत्रेण अजादिप्रत्याहारसंज्ञा क्रियते । आदिरन्त्येनेत्संज्ञकेन स गृह्यमाणस्तन्मध्यपतितानां वर्णानां ग्राहको भवति स्वस्य च रूपस्य । आद्यन्तयोर्मध्याक्षेपत्वात् मध्यवर्त्तिनां संज्ञित्वं विज्ञायते । एवं रूपमित्यनुवृत्ते स्वस्य रूपस्येति । मध्यगतवर्णसमुदायस्य युगपल्लक्ष्ये प्रयोगासम्भवात् प्रत्येकं वर्णः संज्ञीति निश्चीयते । स्वरूपग्रहणाच्च आदेरेव ग्रहणं नान्त्यस्य अप्राधान्यात् । अन्त्येनेति अप्रधान तृतीया निर्देशात् ।

नव्यास्तु प्रत्युच्चारणं शब्दभेदात् आदिरन्त्येनेत्यस्य आदिरकारादिसदृशः अन्त्येनेता तत्सदृशेन साकारादिना सहोच्चार्यमाण आद्यन्ताक्षिप्तानां संज्ञा इत्यर्थः ।

आदिरकारः अइउण् इति सूत्रघटकाकारः तत् सदृशः अणुदित् इति सूत्र घटकाण् घटकाकारः, एवमन्त्येनेता लण् घटकणकारेण तत्सदृशेन अण् घटकणकारेण सहोच्चार्यामाणः अण् इति संज्ञा स्वाक्षिप्तानां संज्ञि ।

तत्र नव्यमते स्वरूपमिति नानुवर्त्तते । आद्यन्ताभ्यामवयवत्वेन बोधकाभ्यां स्वघटितः समुदायः संज्ञी आक्षिप्यते । एवञ्च अण्पदेन अकारादारभ्य णकार पर्यन्तः समुदाय आक्षिप्यते । तस्य च एकत्रप्रयोगे असम्भवात् प्रत्येकं संज्ञित्वम् । एवञ्चादेरपि अन्त्यस्यापि मध्यस्यापि संज्ञित्वं प्राप्तम् ।

तत्र आदेर्मध्यस्य चेष्टत्वात् अन्त्यस्य ज्ञापकादिना संज्ञा वर्त्यते । स्वं रूपमिति अनुवर्तने न किन्चित् फलम् । न च शब्दशास्त्रीयसंज्ञायां स्वरूपाग्रहणात् कथमादेरन्त्यस्य च प्रत्याहारसंज्ञात्वमिति वाच्यम् । संज्ञात्वस्य अद्यन्तवर्णविशिष्टसमुदाये पर्यवस्यनात् न तु तदवटकीभूतप्रत्येकवर्णे । न च प्रत्याहारे तादृश विशिष्टस्य ग्रहणं भवति । प्रत्येकं ग्रहणे तु न कोऽपि दोषः इति वदन्ति ।

एवं प्राच्यनव्ययोः सूत्रार्थविवादेऽपि प्रत्येकं संज्ञेति पक्षे न विवादः। तत्र अजादिप्रत्याहारसंज्ञा आद्यन्ताक्षिप्तसमुदायघटकवर्णानां भवति । सा च यथा अकारादीनां तथैव समुदायघटकीभूतत्वात् मध्यगत्वेनाक्षिप्तत्वात् इत्संज्ञकवर्णानामपि प्राप्तैवेति तेषामजादिप्रत्याहारे पाठे दधि ङ्‌कार इत्यादौ यणदेशः प्राप्नोति इति अनिष्ठप्रसक्तिनिवारणायोच्यते वार्त्तिककारेण ।

प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु न ।
आचारादप्रधानत्वात् लोपश्चबलत्तरः।।

प्रत्याहारे अक्षरसमाम्नाये येऽनुबन्धास्तेषां मज्ग्रहणेषु अजादिप्रत्याहारग्रहणेषु अज्ग्रहणस्योपलक्षणत्वात् अजादिप्रत्याहार इत्यर्थः ।

कथं न ग्रहणं भवति । अज् इत्यस्याः संज्ञायाः प्रदेशवाक्येषु ग्रहणानि उच्चारणानि अज्ग्रहणानि तेषु सत्सु साकारादीनां कथमच्कार्यं न भवेदिति पूर्वार्धार्थः ।

अज्ग्रहणेषु अजादिप्रत्याहारबोधकेषु शब्देषु । ननु अजादिप्रत्याहारे

शंका कृता उत्तरञ्चोपात्तम् । हल्प्रत्याहारे तदघटितप्रत्याहारे वा अनुबन्धानां ग्रहणाभावाय को यत्न इति एवञ्च दृशादिप्रत्याहारे "ट"ग्रहणापत्ते देवष्टीमते इत्यादौ हशि चेत्युत्वापत्तेरिति चेन्न हकारादिषु अकारस्य पुनः पुनरुच्चारणेनोच्चारणानि वर्णरहितहलां तद्घटितप्रत्याहारे ग्रहणाभावकस्य वक्तुं शक्यत्वात् तद्विषयप्रयोगाणां रामो टीकते इत्यादीनामनभिधानाच्चेति । एवञ्च अइउण्मते सूत्रचतुष्टयघटकीभूतानुबन्धानां तत्सम्बन्धि अणादिप्रत्याहारे कथं न ग्रहणमिति शंकितुरभिप्रायः ।

अतः उत्तरं पठति वार्त्तिककारः -

आचारात् अप्रधानत्वात् लोपश्च बलवत्तरः इति । आचार आचरणं व्यवहारः स च प्रत्यासत्त्या आचार्याणामेव पाणिनीनाम् । न हि पाणिनिराचार्य अनुबन्धणकारपरे क्वचित् अच्कार्यं मृतवान् तृषिमृषिकृषेरिति । अत्र ककारे नाच्कार्यं दृश्यते । अच्कार्या दर्शनात् नैतेषा मज्संज्ञेति ज्ञाप्यते ।

अप्रधानत्वात् अप्रधानत्वं परार्थत्वम् । अणादिसंज्ञासिद्ध्यर्थमेव णकारादीनामुपदेशो न तु स्वरूपबोधनाय । तदर्थं तु हलि उपदेशः कृत कृत एवेति । प्रधानानि अकारादीनि तेषां स्वरूपक्रमबोधनायोपदेशात् । णकारादयस्तु अप्रधानानि परार्थ्यात् । न चादेर्वर्णस्यापि संज्ञिस्वरूपबोधनात् परार्थत्वात् अप्रधान्यं स्यादिति वाच्यं तस्य स्वरूपमित्यनुवर्तनात् ग्रहणसिद्धेः । तथा च येषां परार्थमेवोपादानं ते अप्रधानानि । येषाञ्च स्वार्थविबोधनायापि ते प्रधानानीति ।

प्रधानाप्रधानयोः प्रधाने कार्यं सम्प्रत्यय इति न्यायात् अप्रधनानां ग्रहणं न भवति। अप्रधान्यन्चाचार्यशैलीसिद्धम् ।

उक्तन्च एषा हि आचार्यस्य शैलीलक्ष्यते यत्तुल्यजातीयांश्तुल्यजातीयेषूपदिशति अचोऽक्षु हलो ह हल्सु । इति द्वितीयो हेतुर्व्याख्यातः ।

लोपश्च वलवत्तर इति । लोपस्य वलवत्त्वात् इत्यर्थः । स्वार्थे तरप् । अल्पाच्तरमित्यादौ यथा । अनुबन्धा इत्संज्ञकाः तेन तेषामच् संज्ञायाः प्रागेव "तस्य लोपः" इति लोपेन भवितव्यम् । ननु लोपस्य बलवत्त्वे किं बीजमिति चन्न चेन्न । परत्वान्नित्यत्वादन्तरङ्गत्वाच्चेति पूर्वं लोपप्रवृत्तेः आदिरन्त्येन सहेता इत्यनेनाच् संज्ञाविधानकाले अनुबन्धनां लोपात् असंन्निधानात् अच्संज्ञा न प्रवर्तते । अनुबन्धा हि उच्चारण एव सन्ति। इत्संज्ञा प्रतिबद्धं च कार्यमसन्त एव प्रतिपादयन्ति स्वतस्तु न किन्चित् कार्यं प्रतिपद्यन्ते इति ।

एवं परत्वान्नित्यत्वात् अन्तरङ्गत्वाच्च प्रत्याहार संज्ञायाः प्रागेव णादीनामनुबन्धानां लोपात् अच्प्रत्याहारे तेषां न ग्रहणम् ।

नन्वत्र कीदृशोऽनुमानाकारः । न तावत् चतुर्दशसूत्रीघटकानुबन्धाः प्रत्याहारजन्यबोधविषयत्वाभाववन्तः लोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वात् यन्नैवं तन्नैवं यथा अइउण् इति सूत्रघटकाकारः न इमे तथा तस्मात् तादृश बोध्यत्वाभाववन्त इति चेत् ।

चतुर्दशसूत्रीघटकानुबन्धत्वावच्छेदन प्रत्याहारबोध्यत्वाभावसाध्ये

अइउण् इत्यादौ णकारादीनामपि हल्प्रत्याहारबोध्यत्वाभावात् इत्संज्ञा न स्यात् । साध्यदले सामान्येन प्रत्याहारबोध्यत्वाभावरूपसाध्यत्व स्वीकारात् इति व्यभिचारः । किन्च कथयतीत्यादौ कथ धातोर्णिचि अतो लोपे सति थकाराकारे लोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वमस्ति प्रत्याहारबोध्यत्वाभावरूपं साध्यं नास्ति । तस्याकारस्याच् प्रत्याहारबोध्यत्वाङ्गीकारात् अत एव स्थानिवद्भावेन उपधावृद्धिर्न भवतीति तत्र व्यभिचारः । यदि हेतुदले तस्य लोपेति विशेषणप्रक्षेपः क्रियते तदापि अइउण् इति सूत्रेषु णकारादिषु व्यभिचारः ।

किन्च पक्षकुक्षौ चतुर्दशसूत्रीति विशेषणप्रदानेन कृमो नकारादीनां पक्षत्वासम्भवात् निश्चितसाध्यवत्त्वाभावात् सपक्षत्वासम्भवात् । सन्दिग्धसाध्यवत्त्वेऽपि प्रतिज्ञाविषयत्वाभावात् पक्षत्वासम्भव इति ।

यदि च अनुबन्धा इत्येव पक्षस्वरूपं तदपि अनुबन्धत्वावच्छिन्नस्य हल्प्रत्याहारबोध्यत्वाभावे इत्संज्ञानापत्तेः तस्येति सुत्राप्रवृत्तेः स्वरूपासिद्धिः स्यात् । यदि चानुबन्धाः अच्प्रत्याहारबोध्यत्वाभाववन्तः तस्य लोप शास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वात् इत्यनुमानम् । तथापि मनिनादौ अनुनासिकाचोऽनुबन्धस्य अच्प्रत्याहार बोध्यत्वं न स्यात् तस्याच्प्रत्याहारबोध्यत्वाभावे उपदेशेऽजनुनासिक इति इत्संज्ञा न स्यात् । एवन्चोक्त स्थले व्यभिचारः बाधो वा स्यात् ।

अत्रोच्यते - अनुबन्धाः प्रत्याहारजन्यबोधविषयत्वाभाववन्तः तस्य लोप इति शास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वात् इत्येवानुमानाकारः ।

न च अइउण् इति णकारादिषु अलुहलुप्रत्याहार बोध्यत्वसत्त्वात् हेतोश्च सत्त्वात् व्यभिचार इति वाच्यं स्वेतरो यः स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नस्तदबोधकप्रत्याहारजन्यबोधविषयत्वाभावस्य साध्यत्वेन दोषाभावात् । तथाहि अइउण् इति णकार स्वं तदितरः स्ववृत्तिश्रवणप्रत्यक्षविषयतावच्छेदकणत्वधर्मावच्छिन्नः नमङणनम् इत्यादौ णः तदबोधकप्रत्याहारः अच् इति तद्बोध्यत्वाभावः अइउण् इति णकारे इति लक्षणसमन्वयः ।

स्वेतरत्वमात्रनिवेशे स णकारेतरः अकारोपि स्यात् तदबोधकप्रत्याहारो हल् । तद्बोध्यत्वाभावसाध्यत्वे पुनर्व्यभिचारः स्यात् अतः स्ववृतीत्यादिनिवेशः । स्वेतरत्वानिवेशे च स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नः स्वयं णकार एव स्यात् तथा च तदबोधकप्रत्याहारोऽच् अधावधि न निर्णीतः अचि तदबोधकत्वे निर्णीतेतु अनुमानप्रयोगवैयर्थ्यता स्यात् ।

येषान्च मते स्वत्वमननुगतं तन्मते अनुबन्धाः प्रत्याहारजन्यबोधीयघटकत्वावच्छिन्नविषयत्वाभाववन्तः तस्य लोप इति शास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वात् तथा च हलादिप्रत्याहारजन्यबोधीयघटकत्वावच्छिन्नविषयताया अनुबन्धणकारादौ अभावेऽपि अननुबन्धणकारादौ सत्त्वे न सर्वणकारादीनां हल्त्वादिसिद्धिः ।

वस्तुतस्तु प्रत्याहारेष्वनुबन्धानां कथमज्ग्रहणेषु न इति वार्तिकस्वारस्यात् य एतेऽक्षु प्रत्याहार्थाः अनुबन्धाः क्रियन्ते तेषामजग्रहणेन ग्रहणं कस्मान्नेति महाभाष्यस्वारस्यात् ।

अच्प्रत्याहारबोधकसूत्रचतुष्टयघटकीभूतानुबन्धा: अच्प्रत्याहार-बोध्यत्वाभाववन्त: तस्य लोपेति वलवत्तरलोपाक्रान्तत्वात् । न च कथ-धातोरकारे हेतो: सत्त्वात् साध्याभावात् व्यभिचार इति वाच्यम् । हेतु-दलेस्य हलुद्देदश्यके तत्संज्ञाप्रयुक्तलोपाक्रान्तत्वात् इति परिष्कारात् दोषा भावात् । एवन्च अन्वयव्यतिरेक्येवानुमान् यत्र यत्र हलुद्देश्यकेत्संज्ञाप्रयोज्य-लोपस्तत्र तत्राच्प्रत्याहारबोध्यत्वाभाव इति व्याप्ति: यथा कृत् इत्यत्र नकारे । यत्राच्प्रत्याहारबोध्यत्वं तत्र तादृश लोपोऽपि नास्तीति बोध्यम् । अनुबन्धमात्रे प्रत्याहारमात्र बोधविषयत्वाभावस्य साध्यत्वे भाष्याशयस्यादर्श-नात् । तथा सति अनुबन्धत्वस्यैवाभावपत्ते: । अत एवाप्राधान्यात् इति हेतूक्ति: संगच्छते ।

अत एव शेखरकृता: प्राहु: "अच्प्रत्याहारे शङ्का कृता न हल्-प्रत्याहारे । भाष्ये च अइउण् इत्यादि सूत्रचतुष्टयोपादानेनैवास्य प्रवृत्ति-र्दर्शितेति" (लघुशब्देन्दु० - पृ० 32)

न च हशादिप्रत्याहारे हग्रहणापत्तिरिति वाच्यं उक्तोत्तरत्वात् ।

अथ र-प्रत्याहारविचार:

प्राचीनै: कैयटादिभिराचार्ये तवल्कार इत्यादिसिद्ध्ये र-प्रत्याहार: स्वीकृत: । तथाहि तुल्यास्यप्रयत्नं सवर्णमिति सूत्रे - ऋलृवर्णयो: सावर्ण्य-स्वीकारे तव + लृकार इत्यादौ गुण: अकार: उरण्रपर इत्यनेन रपर स्यात्

दृष्यते तु लपर इति अतः तत्र लपरत्वसिद्धये भाष्यकारैर्लपरत्वं वक्ष्यामीत्युक्तम् । तत्र महाभाष्यव्याख्यातृभिः कैयटैः लपरत्वं वक्ष्यामीति भाष्यप्रतीकस्य लपरत्वं व्याख्यास्यामीत्यर्थः कृतः । व्याख्यानञ्च लण् सूत्रघटकीभूतोऽकारोऽनुनासिक इति प्रतिज्ञाय उपदेशेऽजितिसूत्रेणेत्संज्ञायां सत्यामादिना रकारेण रप्रत्याहाराश्रयणम् । तेन उरण् रपर इत्यत्र रपर इति र-प्रत्याहारपर इत्यर्थो भवति । तथा च कृष्णर्द्धिरित्यत्र रपरः । तवल्कार इत्यत्र लपरश्च सिध्यति । अत एव सिद्धान्तकौमुद्यां लण् सूत्रेऽकारश्चेत्युक्तम् । र-प्रत्याहारः काशिकाकारस्य तद्व्याख्यानभूतपदमञ्जरी न्यासादिकर्तॄणामपि सम्मतः उक्तञ्च काशिकावृत्तौ - "लकारे त्वनुनासिकः प्रतिज्ञायते तेन उरण् रपर इत्यत्र प्रत्याहारग्रहणात् लपरत्वमपि भवति"[1] ।

तत्रैव हरदत्तमिश्रेण पदमञ्जर्यामुक्तम् - "ऋकार-लृकारयोः सवर्णसंज्ञाया उपसंख्यानात् ऋकार-लृकारमपि गृह्णाति । ततश्च उरण्रपर इति लृकारस्याप्यण् रपरः स्यात् । लपरश्चेष्यते । तस्मादनुनासिकः प्रतिज्ञायते तेन ऋकारस्याण्रपरः, लृकारस्य तु लपरः इति तवल्कार इति सिद्धं भवति"[2] ।

एवञ्च र-प्रत्याहारः प्राचीनैराचार्यैः स्वीकृतः । किन्तु नवीनैर्लघुशब्देन्दुग्रन्थकारैर्नागेशप्रभृतिभिर्लपरत्वं वक्ष्यामीति भाष्यस्य लपरश्चेति वचनं करिष्यामीति अभिसन्धाय उरण् रपरः, इत्यत्र लपरश्चेति वचनकरणमेव रप्रत्या-

---

1- का० - पृ० 53.

2- पदमञ्जरी - पृ० 52.

हार स्वीकारात् ~~हल्~~ ज्याय इति स्वीकृतम् । खण्डितश्च रप्रत्याहार: शेखरे ।

तत्र खण्डने तिस्रो युक्तय: प्रदर्शितास्तथाहि - लकाराकारस्यानुनासिकत्वे अतो लरान्तस्येति सूत्रे लकारोच्चारणं पाणिनेर्गौरवग्रस्तं स्यात् लाघवात् रप्रत्याहारेणैव निर्देशो युक्त: स्यात् । इति प्रथमा युक्ति: ।

बहुषु यण् पदघटितसूत्रेषु अर्द्धमात्रलाघवानुरोधेन य प्रत्याहारेणैव निर्देश: स्यात् इति द्वितीया युक्ति: ।

तृतीयया युक्तिस्तु अनुबन्धानामच्च प्रत्याहारे ग्रहणाभावे भाष्यप्रदर्शित हेतूनामाचारात् अप्रधानत्वात् लोपस्य बलवत्त्वात् इति रूपाणां तृतीयस्य हेतोरव्यापकत्वापत्तिरूपा । तत्र र-प्रत्याहारवादिनां मते तृतीयहेतोरव्यापकत्वापत्ति: परिहरणीया भवतीति कृत्वायं विषय: अत्र समीक्ष्यते।

तथाहि - अनुबन्धा: स्वेतरो य: श्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नस्तदबोधकप्रत्याहारजन्यबोधविषयत्वाभावन्त: तस्य लोप इति शास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वात् । इत्यनुमानाकार: ।

लकाराकारस्यानुनासिकत्वे इत्संज्ञायोग्यत्वमनुबन्धत्वमिति कृत्वा पक्षतावच्छेदकावच्छिन्नतया हल्प्रत्याहारसिद्धे: प्राक् अच्पदार्थनिष्पत्त्यभावेन उपदेशेऽजित्यस्य वाक्यार्थबोधाभावेन लण् इत्यकारस्येत्संज्ञालोपयोरभावेन हल् प्रत्याहारे अकारस्य प्रवेशो मा भाँस्त्रपस्वेत्यत्रानुनासिकपक्षेऽनुस्वारापत्तिर्दुर्वारा स्यात् ।

एवञ्च लकाराकाररूपे पक्षे तस्येति लोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तेरभावेन तृतीयहेतोरभावात् भागासिद्धिः स्यात् । पक्षतावच्छेदकावच्छेदेनानुमिति त्वावच्छिन्नं प्रति पक्षतावच्छेदकव्यापकत्वं हेतोरपेक्षितम् । व्याकपकत्वञ्च स्वाधिकरणनिष्ठात्यन्ताभावाप्रतियोगित्वम् । स्वं व्याप्यम् । एवञ्च अनुबन्धत्वाधिकरणे अकारे लोपशास्त्रीयोद्देश्यतावच्छेदकं नास्तीति अभावीयप्रतियोगित्वमेव तत्र नाप्रतियोगित्वमिति भागासिद्धिः स्पष्टा ।

अत्रोच्यते । रप्रत्याहारवादिना मतेऽपि लोपस्य बलवत्त्वरूपतृतीयहेतोरव्यापकत्वं नास्ति । उक्तानुमाने इत्संज्ञकत्वस्यैव अनुबन्धत्व स्वीकारात् । पक्षतावच्छेदकेत्संज्ञकत्वानाक्रान्तत्वात् लकाराकारकस्य हल्प्रत्याहारसिद्धेः प्राक् हेतोरपि असत्त्वात् नास्ति भागासिद्धिः । न च तर्हि हल्प्रत्याहारे लकाराकारस्य ग्रहणात् मामांस्त्रायस्वेत्यादौ दोषः स्यादेवेति वाच्यं हकारादौ प्रतिवर्णमकारोच्चारणसामर्थ्यात् अजादिषुप्रत्याहाराणां स्वाद्यवर्णसाजातीय मध्यगवर्णबोधकत्वं स्वीकृत्य अनुबन्धानां प्रत्याहारेषु ग्रहणाभावस्य वाच्यत्वात् । साजात्यञ्च बोधकत्वेनाचार्य तात्पर्यविषयत्वेनैवेति । हयवरदित्यादि घटकाकारवल्लण्घटकाकारे बोधकत्वेनाचार्य तात्पर्यविषयत्वस्याभावान्न मामांस्त्रायस्वेत्यादौ अनुस्वारापत्तिः । किन्च इत्संज्ञायोग्यत्वमनुबन्धत्वमिति पक्षेऽपि लण्घटकाकारे लोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्व रूपहेतोर्हल्प्रत्याहारसिद्धेः प्राक् उपलक्षणविधया सत्त्वेन नाव्यापत्वम् । अविद्यमानस्यापि तत्र तस्य हल्प्रत्याहारबोध्यत्वनिवर्तकत्वस्वीकारात् । किन्त लोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तियोग्यत्वस्यैव हेतुत्वस्वीकारात् हल्प्रत्याहारसिद्धेः प्राक्

लकाराकारे तस्य सत्त्वात् न भागासिद्धिः ।

किन्च हलुप्रत्याहारसिद्धेः पश्चात् अजुपदार्थनिष्पत्तौ जातायामुपदेशे इत्यस्य वाक्यार्थबोधे जाते लकाराकारस्येत्संज्ञायां तस्येति लेपः स्यात् । लुका यथा जातस्यापि निवृत्तिस्तथा रप्रत्याहारसाधकभाष्यादिप्रमाणबलात् हलि गृहीतस्यापि लकाराकारस्य इत्संज्ञा लोपाभ्यामपहारात् न सोऽस्तीत्यादौ दोषः ।

किन्च आदिरन्त्येनेति सूत्रेण आद्यन्तसमुदायघटकानां तत् प्रत्याहारसंज्ञा क्रियते । तादृशं समुदायघटकत्वमितामपीति तेषामपि प्रत्याहारबोधकत्वं प्राप्तमिति इत्संज्ञालोपाभ्याम् आचारात् अप्रधानत्वाच्च वार्यते इति स्थितिः तत्र प्रकल्प्य अपवादविषयं तत उत्सर्गः प्रवर्तते इति न्यायात् अत्रापि प्रत्याहारसंज्ञा इत्संज्ञायोग्यवर्णान् विहायैव प्रवर्तते इति हलुसंज्ञा अपि लण्घटकाकारे न प्रवर्तिष्यते इति नोक्तदोषः ।

किन्च प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु न इति महाभाष्यस्य सर्वप्रत्याहारविषयत्वात् । अज्ग्रहणस्य प्रत्याहारमात्रोपलक्षणत्वात् । प्रत्याहारेषु इतां ग्रहणं नास्ति । आचारात् अप्रधानत्वात् इत्यनयोर्हेत्वोर्हलुप्रत्याहारसिद्धेः प्रागपि लण्घटकाकारे सत्त्वात् हलि अकारस्य ग्रहणाभावस्य वक्तुं शक्यत्वात् 2 लोपयोग्यत्वेनापि बलवत्त्वस्य स्वीकारात् लकाराकारे तादृशयोग्यत्वस्य सत्त्वात् हलि अकारग्रहणं नास्त्येव । किन्च शेखरकारमतेऽपि हकारादिष्वकाराणां इत्संज्ञालोपाभ्यामेवापहारात् हलि अकारग्रहणायत्तिरुभयोर्मतयोस्तुल्यदोषपरिहारौ । न च विधयविषये एव उच्चा-

रणार्थवर्णानामित्संज्ञालोपौ । न चात्र विधेयविषयतेति वाच्यम् । हत्वावच्छिन्ने साधु इत्याकारेण साधुत्वविधायकत्वस्य हकारादिष्वपि स्वीकारात् ।

न च वृत्तिपरिच्छेदकत्वेन संज्ञासूत्रत्वमेवास्तु तथाहि आदिरन्त्येनेति प्रत्याहारसंज्ञासूत्रेण सहोषामेकवाक्यतया संज्ञा सूत्रत्वमिति शेखरकारेणोक्तमिति वाच्यम् । एकवाक्यतया सूत्रविशेषनिर्णयेऽतिप्रसङ्गात् संज्ञासूत्राणामपि विधित्वप्रसङ्गः स्यात् । तस्मात् अइउण् इत्यादिसूत्राणि अत्वाद्यवच्छिन्नस्य साधुत्वविधायकान्येवेति । तस्मात् रप्रत्याहारवादिनां मते तृतीयहेतोरन्यापकत्वापत्तिर्दोषो नास्ति ।

अथ वर्णैकदेशग्रहणाग्रहणपक्षनिर्णयः

अत्रेदं विचार्यते - वर्णैकदेशाः वर्णान्तरसमानाकृतयः अवयवग्रहणेन गृह्यन्ते न वेति ।

तथाहि - अक्षरसमाम्नाये समुदाया अपि उपदिश्यन्ते ऋ लृ ए ओ ऐ औ इति । अवयवा अपि उपदिश्यन्ते । इ उ ऋ लृ इति । अवयवस्य च समुदायघटकत्वात् वृक्षप्रचलन् न्यायेन एङादिसंज्ञातत् प्रयुक्तकार्यञ्च अवयवस्यापि प्रसक्तम् । अजादिसंज्ञा तत्कार्यञ्च एकारादिघटकाकारादिवर्णानां प्रसक्त न वेति ज्ञायते विचारणा ।

ननु वर्णस्य स्फोटरूपस्य नित्यत्वान्यथानुपपत्त्या निरवयवत्वमवश्यमङ्गीकर्त्तव्यम् । अत एवोच्यते वर्णेष्ववयवा नाहीति । तथा च

वर्णस्यैकदेशाभावादेव तद्ग्रहणम् अवयवग्रहणेन भवति न वेति विचारणा व्यर्था ।

किन्च एकारादौ वर्णसमुदायत्वाङ्गीकारे साङ्कार्यदोषात् अत्वादिजातिर्न स्यात् । यदुक्तम् -

व्यक्तेरभेदस्तुल्यत्वं संकरोऽथानवस्थितिः ।
रूपहानिरसम्बन्धो जातिबाधकसंग्रहः ॥ इति ।

साङ्कार्यन्च परस्परात्यन्ताभावाधिकरणे सिद्धस्यैकत्रधर्मिणि स्थितिः । अत्र इत्वाभावाधिकरणे अकारे अत्वमित्वं च अत्वाभावाधिकरणे इकारे सिद्धमुभयोस्तु एकारे इति साङ्कार्यं स्यादेवेति चेत् ।

अत्रोच्यते सिद्धान्ते वाक्यस्फोटस्यैव मुख्यत्वात् पदादिस्फोटानां कल्पितत्वात् । वर्णानामपि कल्पितत्वमेव न पारमार्थिकत्वं स्वीक्रियते अत एवोक्तं पदे न वर्णा विद्यन्ते इति । एवन्च वर्णस्यापि कल्पितत्वे तदवयववानामपि कल्पने न कोऽपि दोषः । न च तर्हि यथा वर्णस्फोटः स्वीक्रियते तदा तदवयवस्फोटोऽपि स्वीक्रियतामिति वाच्यम् । वर्णस्यापि वर्णान्तरमेवावयव इति वर्णस्फोटस्य स्वीकृतत्वात् । न चावयवोऽवर्ण इति । शास्त्रप्रक्रियानिर्वाहार्थमेव वर्णादिस्फोटानां कल्पितत्वात् तुल्ययुक्त्या वर्णावयवानामपि कल्पनात् । स्फोटस्य चैकत्वात् निर्भागत्वात् कल्पनया पदवर्णावयवानां सत्त्वेऽपि न तस्य काचित् क्षतिः ।

साङ्कार्यदोषोऽपि नास्ति नरसिंहवत् एत्वादि जत्यन्तरमेव एकारादौन अत्वेत्वादिजाति संकर इति स्वीकारात् अतः सर्वे वर्णाः अकारा-

दयः स्वराः सभागा इष्यन्ते । अत एव तस्यादित उदात्तमर्धह्रस्वमिति सूत्रं प्रवृत्तम् । "एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदूतो" इति वचनाच्च । अकारादीनां सभागत्वं स्पष्टं प्रतीयते ।

एवन्च केषान्चित् एकारदीनां वर्णानामवयवाः सन्ति वर्णान्तबुद्धिबोध्याः । यथा आकारादिषु अकारादयः । एकारे ऐकारे च च अकारेकारौ । ओकारे औकारे चाकारोकारौ । ऋकारे रेफः लृकारे लकार इति । तत्र सन्देहः स्यादेव किम् एकारादयो वर्णान्तरभुत अकारादिवर्ण संघातमात्रमिति । वर्णान्तरपक्षे एकदेशाग्रहणम् । संघातपक्षे च ग्रहणमिति प्रकृतो विचार उपयुक्त एव ।

कैयटेनापि स ओङ् इति सूत्रे भाष्ये प्रकृतप्रसङ्गे उक्तम् । "अकारादिषु अकारादिसदृशा अवयवाः, ऋकार-लृकारयो रेफलकारसदृशावयवौ, सन्ध्यक्षरेष्वकरेकारो कारसदृशाः तत्र केवलवर्णकार्यमवयवेषु भवति न वेति विचारः ।

इह समुदाया अपीति ऋ लृ ए ओ औ ऐ इति । अवयवा अपीति अइउण् रत् लण इति । तत्र समुदायपरे निर्देशे सन्निहिता अप्यवयवा नान्तरीयकत्वादे ङादिसंज्ञा न लभन्ते । अवयवपरे च निर्देशे समुदायो न संज्ञाभाक् । यथा ह य वरेत्यादा वनच्च कस्य हलो दुःखेनोच्चार्यत्वात् निर्दिष्टोऽप्यकारोऽन्यत्रप्राधान्येन न निर्देशात् हलादिसंज्ञा न प्रतिपद्यते इति दध्यत्र इत्यादावनच्क एव यणादेशः प्रवर्तते । तत्रासत्यामप्येजादिसंज्ञायामयादयः समुदायादेशा अपि नान्तरीयकत्वादवयवान्निवर्तयन्ति । एवं स्थिते अग्ने

इन्द्र इत्यादौ यत्रावयवकार्यं च प्राप्नोति समुदायकार्यं च, तत्रान्तरङ्गत्वात् तत्र च साक्षात् चोदितत्वात् प्रत्यक्षत्वादवयवकार्यप्रसङ्गः । अवयवावगति-पूर्वकत्वाद्धि समुदायावगमस्य समुदायकार्यं बहिरङ्गम् । अयादीनाञ्चावकाशः अग्न आयाहीति । नन्वत्रापि यणादेशोऽवयवस्य प्राप्नोति । येन नाप्राप्ते इति वा मध्येऽपवादा इति वा यण एवायादयो बाधकाः स्युः । तत्र यथा दधीन्द्र इत्यत्र दधि-शब्दस्थ इकारः सवर्णदीर्घत्वं प्रतिपद्यते, एवमेकारस्थोऽपि प्रतिपद्यते । प्रत्याहारे एओङ् ऐऔच् इत्यत्रावयवानां प्राधान्येनानिर्देशात् इत्येवं ग्रहणपक्षा शङ्का बीजमुपन्यस्तम् ।

इदानीमग्रहणपक्षशङ्का बीजमुपन्यस्यते – अभ्यन्तरश्चेति । तिरोहितत्वात् अवयवानां समुदायकार्ये च पारतन्त्र्यात् स्वकार्यस्याप्रयोजकत्वात् नरसिंहवज्जात्यन्तरयोगात् वर्णान्तरसारूप्यमात्रेण तत्कार्याप्रवर्तनादित्यर्थः ।[1]

काशिकाकारैरग्रहणपक्ष एव सिद्धान्तितः । उक्तञ्च वर्णेषु ये वर्णैकदेशा वर्णान्तरसमानाकृतयस्तेषु तत्कार्यं न भवति । तच्छायानुकारिणो हिते न पुनस्त एव । पृथक्प्रयत्ननिर्वर्त्यं हि वर्णमिच्छन्ति आचार्याः । नुड्विधिलादेशविनामेषु ऋकारे प्रतिविधातव्यम् । नुड्विधौ ऋकारग्रहणम् आनृधतुः आनृधुः । लादेशे ऋकारग्रहणम् । क्लृप्तः क्लृप्तवान् । विनामे ऋकारग्रहणं कर्तृणां हर्तृणामिति[2] ।

---

1- महा० कै० – पृ० 81.  2- का० – पृ० 36.

यद्यपि महाभाष्ये उभयोः पक्षयोः दोषपरिहार उक्तस्तथापि ग्रहणपक्षे बहुपरिहरणीयत्वात् लाघवात् अग्रहणपक्ष एव युक्तः । तथाहि -

यदि वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते चेत् सन्ध्यक्षरे समानाश्रयविधिः प्राप्नोति अग्ने इन्द्रं वायो उदकमिति तत् प्रतिषेधो वक्तव्यः स्यात् दीर्घे ह्रस्वविधिप्रतिषेधो वक्तव्यः । आलूय-प्रलूय इत्यादौ ह्रस्वस्य पिति कृति तुक् प्राप्नोति स प्रतिषेध्यः एकवर्णवच्च दीर्घो भवतीति वक्तव्यमन्यथा वाचा तरतीत्यादौ वाक्शब्दस्यावयवर्णगतद्वित्वसंख्यामाश्रित्य द्व्यज्लक्षण ठन् प्राप्नुयात् । एवमस्मिन् पक्षे दोषाः प्रसक्ताभाष्ये ज्ञापकादिना तेषां वारणं कृतम् ।

तत्र ज्ञापकमनपेक्ष्यापि नाव्यपवृक्तस्यावयवस्य तद् विधिर्यथा द्रव्येषु इति वचनात् न्यायसिद्धात् ग्रहणपक्षोक्त सर्वदोषाणां समाधानं भवति । तत्र व्यपवर्गः भेदः । व्यपवृक्तस्य अभिन्नबुद्धिविषयस्येत्यर्थः । तथा च एकत्वालम्बनज्ञानग्राह्यस्य समुदायस्य योऽवयवः तस्मिन् पृथग्भूतवर्णविधिर्न भवतीत्यर्थः । यथा तैलं न विक्रेतव्यं घृतं न विक्रेतव्यमिति व्यपवृक्तं न विक्रीयते अव्यपवृक्तं गावः सर्षपाश्च विक्रीयन्ते इति । सन्ध्यक्षरेषु व्यपवृक्तेषु विवृतस्त्वं स्वीकृत्य वर्णान्तरविध्यप्राप्तिरुक्ता भाष्ये । एवञ्च ग्रहणपक्षेऽपि न दोषः । किन्तु वहु वारणीयं भवति ।

अग्रहणपक्षे चेदं वार्त्तिकं प्रवृत्तम् ।

3. अग्रहणं चेत् नुड्विधिलादेशविनामेषु ऋकारग्रहणं कर्त्तव्यमिति

नुड्विधौ लादेशे विनामे च ऋकारग्रहणं कर्त्तव्यमित्यर्थः । विनामः सात्वम् ।

नुड्विधौ - तस्मान्नुड्द्विहलः ऋकारे चेति वक्तव्यम् आनृधातुः, आनृधुरिति । वर्णैकदेशस्य वर्णत्वेन ग्रहणे च रकारधकारयोः सत्त्वात् द्विहल्त्वादेव नुड् सिध्यति । अग्रहणपक्षे एकहल्त्वात् न प्राप्नोतीति ऋकारग्रहणं कर्त्तव्यं भवति ।

लादेशे - "कृपो रोलः" ऋकारस्य चेति वक्तव्यम् ।क्लृप्तः क्लृप्तवान् । ग्रहणपक्षे च ऋकारघटकीभूत रकारस्य लत्वे सिद्धमिष्टम् । अग्रहणपक्षे च ऋकारस्य लत्वं वक्तव्यं भवति ।

विनामे - रषाभ्यां नोणःसमानपदे, ऋकारच्चेति वक्तव्यम् । मातृणां पितृणामिति । ग्रहणपक्षे रेफपरत्वात् नस्य णत्वं सिद्धम् । अग्रहणपक्षे ऋकारादिति पठनीयम् ।

एवन्चैते दोषा अग्रहणपक्षे समागताः । दोषपरिहारार्थन्च तत्तत् सूत्रेषु ऋकारग्रहणं कर्त्तव्यम् अन्यथा वा प्रतिविधातव्यमिति । ऋकारग्रहणे च गौरवं स्यात् अतः अन्यथा प्रतिविधानं वक्तव्यम् । तत्र काशिकायां मूले ऋकारग्रहणं कर्त्तव्यम् इत्येवोक्तम् । नान्यथा प्रतिविधानं कृतम् ।

महाभाष्यकारकृत प्रतिविधानान्येव काशिकाटीका कृद्भिरनूदि-

तानि सन्ति न्यासादौ । तथाहि - तत्र नुड्विधौ तावत् ऋकारस्थो रेफो हल्ग्रहणे न गृह्यते तेनात्रापि द्विहलोऽङ्गस्य नुड् भवति । आनृधुरानृधुरि-त्यादौ । अथ कथं वर्णात्मना हलां ग्रहणे न ऋकारस्थस्यापि अवर्णात्मनो रेफस्य ग्रहणं भवतीति चेत् ? द्विहल्ग्रहण सामर्थ्यात् । तत्र हि तस्मान्नुड् इत्येतावदेव वक्तव्यम् । न चाटतुरित्यादावपि नुट्प्रसङ्गः । द्विहल्ग्रहणा-भावात् एकहलोऽपि प्रसङ्गात् इति वाच्यम् अश्नोतेश्चेत्यस्य नियमार्थत्वात् । अद्विहलो यदि भवति तदाश्नोतेरेव नान्यस्य इति । न चाश्नाति निवृत्त्यर्थं तत्, एवं तर्हि नाश्न इत्येवं प्रतिषेधं कुर्यात् । तदेवमन्तरेणापि द्विहल्ग्रहणं सिद्धे यद् द्विहल्ग्रहणं करोति तस्यैतत् प्रयोजनम्, द्विहल्छायानुकारिणोऽपि यथा स्यात् ।

ऋधृ इत्यादौ एको मुख्यो हल्, अपरश्च ऋकारस्थस्तदवयवस्तत् समानाकृतित्वात् उपचारेण हल्व्यपदेशार्हः । यदि हल् इति श्रुतिस्तत्र सूत्रे गृह्यते । सा च हल् छायानुकारिण्यामपि ऋकारस्थायां रेफव्यक्तौ वर्तते एव । तस्मात् द्विहल् ग्रहणेन ऋकारस्थो रेफोऽपि गृह्यत एव अन्यथा द्विहल्-ग्रहणमनर्थकं स्यात् । ननु रादिफ इति वर्णवाचकात् रकारात् इफ प्रत्ययं शास्ति । ऋकारस्थे रकारे च वर्णत्वाभावात् कथं रेफशब्देनोच्यते इति चेन्न सदृशश्रुतेस्तत्र अतस्मिन्नपि रेफशब्दप्रयोगः । सादृश्यात् अतस्मिन्नपि तद्व्यप-देशो भवति यथा अग्निर्माणवक इति । अथवा रादिफ इत्यत्र वर्णात्कार इत्यतो वर्णात् इति नानुवर्तते तेनावर्णात्मकादपि रात् इफो भवति । बहुल-वचनाद्वा । इति बोध्यम् । अथवा द्विहल्ग्रहणसामर्थ्यं नाश्रीयते । अपि तु द्विहल्-

ग्रहणं न करिष्यत एव । अश्नोतेश्चेति नियमात् अकारोपधस्य यदि भवति अश्नोतेरेवेत्याकारात् आटतुरित्यादौ नुडभावो बोध्यः । अतो नुड्विधौ अन्तरेणापि ऋकारग्रहणं दोषो नास्ति ।

लादेशेऽपि ऋकारग्रहणं कर्त्तव्यमिति दोष उद्धृतः । तथाहि वर्णैकदेशग्रहणपक्षे कृपधातोः ऋकारस्थरेफस्य वर्णग्रहणेन ग्रहणात् कृपो रो ल इत्यनेन लत्वे क्लृप्त इति सिद्धं भवति । अग्रहणपक्षेऽपि न दोषः कृपो रो ल इत्यत्र ऋकारस्यापि निर्देशात् । अविभक्तिको निर्देशस्तत्र विद्यते कृप उः रः लः कृपो रो ल इति । न च ऋकारनिर्देशेऽपि अखण्डवर्णपक्षे कथं लत्वं स्यात् इति वाच्यम् । तत्र ऋकारनिर्देशस्य सामर्थ्यात् विभागं परिकल्प्यादेशो विधीयते । एवन्च रेफपदेन तत् सदृशं आरोपितरेफत्ववानपि गृह्यते इति फलितम् ।

अथवा उभयतो जातिस्फोटमात्रं निर्दिश्यते रश्रुतेर्लश्रुतिर्भवतीति । ततश्चान्तर्भूतानन्तर्भूतरेफलकारव्यक्तिव्यङ्ग्यं सामान्यं स्थान्यादेशभावेनाश्रीयते । इति उक्तन्च पदमन्जर्याम् हरदत्तमिश्रेण - "रो ल इति सामान्यनिर्देशात् ऋकार-लृकारस्थयोश्च रेफलकारयोर्निष्कृष्य स्थान्यादेशभावायोगात् एकदेशविकारद्वारेण ऋकारस्यैव लृकार इति । अत्र च प्रमाणम् - लुटि च क्लृप इति निर्देशः ।" {का० - पृ०36}

कृपो रो ल इति सूत्रे {8/2/18} काशिकाकारेणापि उक्तम् र इति सामान्यमुपादीयते । इति । वर्णत्वावर्णत्वकृतं भेदमुत्सृज्य यत् सामान्यमवर्णात्मिकायां वर्णात्मिकायान्च रेफव्यक्तौ वर्तते यतस्तयोर्वर्णत्वावर्ण-

त्वभेदभिन्नयोरपि र इति शब्दप्रत्ययौ अभिन्नौ भवतः तौ उपादीयेते न तु वर्णात्मिकैव रेफव्यक्तिः । तेन सामान्योपादानेन द्वयोरपि ग्रहणं भवति । इति ।

विनामविधावपि ऋकारग्रहणं विनैव परिहारः । तथाहि मातॄणामित्यादौ रषाभ्यामित्यादिना णत्वं सिध्यति । तथाहि रषाभ्यामित्यादौ रश्रुतिसामान्यं निर्दिश्यते । केवलस्य ऋकारस्थस्य च वर्णत्वावर्णत्वकृतभेदं परित्यज्य यत् सामान्यं रेफमात्र तदिह निर्दिश्यते न तु वर्णात्मिकैव रेफव्यक्तिः । तेनोक्त प्रयोगे णत्व सिद्धिः । ऋवर्णान्नस्य णत्वमिति वक्तव्यं न भवति । न च ऋकारे परयाज्भक्त्या व्यवधानात् रश्रुतिसामान्यनिर्देशेऽपि रषाभ्यामिति णत्वं न स्यादिति वाच्यम् अट्कुप्वाङ् इत्यनेन णत्वसिद्धेः । ननु व्यपवृक्तस्य वर्णस्य वर्णग्रहणेन ग्रहणात् रेफात् भक्तेर्व्यपवृत्तत्वाभावमत् । कथं तेनापि सूत्रेण णत्वसिद्धिरिति चेन्न योगविभागात् सिद्धेः । रषाभ्यां नोणो भवतीति ततः व्यवाये, व्यवाये च नो रणे भवतीति । तत अट् कुप्वाङ्नुम्भिरिति । इदमिदानीं किमर्थम् । नियमार्थम् एतैरेवाक्षरसमाम्नायिकैर्व्यवाये नान्यैरिति ।

एवञ्च व्यवाये इति योगेन णत्वसिद्धिः । न च वर्णान्तर व्यवाये प्रसङ्ग इति वाच्यम् उक्तनियमेन निवर्तनात् । भक्तेस्तु न निवृत्तिः आक्षरसमाम्नायेऽनुपदिष्टत्वात् उपदिष्टेन वा प्रत्याय्यत्वाभावात् । एतच्च वर्णग्रहणपक्षेऽपि समानम् ।

अथवा क्षुम्नादिषु नृनमनतृप्नोति शब्दग्रहणात् ज्ञापकात् ऋकारात् नां णो भवतीति ज्ञाप्यते ।

अथवा उपरिष्टात् योगविभागः करिष्यते ॠत नो णो भवति, ततः छन्दस्यग्रहात् ॠत इत्येवेति ।

एवञ्च नुड्विधौ लादेशविधौ णत्वविधौ च प्रतिविधानस्य सहभावात् वर्णैकदेशाग्रहणपक्ष एव ज्यायान् ।

अन्येऽपि ये दोषा अस्मिन् पक्षे ते भाष्ये समाहिता एव तथाहि प्लुतावैच इदुतौ {8/2/106} इतच्च वक्तव्यं भवति ग्रहणपक्षे च गुरोस्तेरित्येव प्लुत्या सिद्धमिति दोषः । अग्रहणपक्षेऽपि अस्य न्यासस्य कृतत्वादेव न दोषः । कर्त्तव्यश्चायं न्यास अवश्यम् । व्यपवृक्तेऽपि भागयोर्विवृततरत्वात् प्रयत्नभेदात् इकारोकाराभ्यामग्रहणात् अचत्वाभावात् । प्लुतस्यासिद्धेः । ननु एवमेवाग्रहणपक्षे - कुक्कुट-पिप्पल इत्यादौ च तुल्यरूपे संयोगद्विव्यञ्जनाश्रयो विधिः संयोगसंज्ञा न स्यात् । ग्रहणपक्षे द्वौ ककारौ द्वौपकाराविति सिध्यतीति चेन्न । अग्रहणपक्षेऽपि न दोषः । उक्त प्रयोगे मात्राकालस्य गम्यमानत्वात् मात्रिकस्य च व्यञ्जनस्याभावात् अनुपदिष्टत्वात् अविज्ञायमानत्वात् । एवञ्च मात्राकालत्वात् संयोगः सिध्यतीति नाग्रहणपक्षे कोऽपि दोषः । काशिकाकारेण अग्रहणपक्षएवाश्रितः भाष्यादौ चोभयपक्षे दोषस्य परिहारात् नैकपक्षे आग्रह इति तुल्यास्य प्रयत्नमिति सूत्रे भाष्ये ॠलृवर्णयोः सवर्णसंज्ञायां क्लृप्यमानं पश्येत्यादौ णत्ववारणं वर्णैकदेशग्रहणपक्षमाश्रित्यकृतमिति स पक्षोऽपि तैरादृत इति गम्यते । तथा हि तत्रत्यं भाष्यम् "वर्णैकदेशाश्च वर्णग्रहणेन गृह्यन्ते इति योऽसौ लृकारे लकारस्तदाश्रयः प्रतिषेधो भविष्यन्ति । यद्येवं नार्थो रषाभ्यां नो णत्वे ॠकार ग्रहणे न वर्णैकदेशाश्च वर्णग्रहणेन गृह्यन्ते इति योऽसौ ॠकारे रेफस्तदाश्रयं णत्वं

भविष्यति इति" । तत्राग्रहणपक्षे क्लृप्यमानमित्यादौ क्षुम्नादेराकृतिगणत्वात् णत्वनिषेधो बोध्य: ।

इति वर्णैकदेशग्रहणाग्रहणविचार: ।

4- मृजेरजादौ संक्रमे विभाषा वृद्धिरिष्यते

काशिकायां क्ङिति चेति (1/1/5) सूत्रे इदं वार्त्तिकं पठितम् । कित् ङित निमित्ते ये गुणवृद्धी प्राप्नुतस्ते न भवत: । चित: चितवान् स्तुत: स्तुतवान् इति । तत्र संक्रमो न गुणवृद्धिप्रतिषेधविषय: । संक्रामतोऽपक्रामतो गुण-वृद्धिप्रतिषेधविषय: । संक्रमतोऽपक्रामतो गुणवृद्धी अस्मात् इति व्युत्पत्ते: ।

अजादौ इति यस्मिन् विधिस्तदाविति वार्त्तिकलभ्यत्वेऽपि आदि-ग्रहणात् मुख्येऽजादौ यथा स्यात् व्यपदेशिवद्भावेनाजादौ माभूत् तुन्दपरिमृज: यूयं ममृज, त्वया ममृजे इति । उद्योतकारा नागेशभट्टास्तु अचि इत्येव वचनम् । आदौ इति तु तदादि परिभाषा लब्धार्थानुवाद । अत एव इको गुणवृद्धी इति सूत्रे भाष्ये अचि क्ङिति इत्युक्तम् । एवञ्च ममृजे ममृज इत्यादौ विकल्पो भवत्येव । तुन्दपरिमृज इत्यत्र वृद्ध्यभावो व्यवस्थितविभाषया बोध्य इत्याहु: । उदाहरणानि चास्य वार्त्तिकस्य परिमृजन्ति परिमार्जन्ति, परिमृजन्तु परि-मार्जन्तु इत्यादि ।

इदञ्च वार्त्तिकं महाभाष्ये इको गुणवृद्धी इति सूत्रे पठितम् । तत्र हि इको गुणवृद्धी इत्यत्र वृद्धिग्रहणमुत्तरार्थमुक्तम् । तच्च मृज्यर्थम् । मृष्ट: मृष्टवान्

इति । वृद्धिग्रहणगुत्तर क्ङिति चेति सूत्रेऽनुवृत्त्यर्थं कर्त्तव्यम् प्रतिषेधार्थम् । स च मृज्यर्थः मृष्टः मृष्टवान् इत्यादौ ।

अग्रे इहार्थञ्चापि भृज्यर्थं वृद्धिग्रहणं कर्त्तव्यम् । भृजेर्वृद्धिरविशेषेणोच्यते सा इको यथा स्यात् अनिको माभूदिति आशंकितं मृजेर्वृद्धिरचः, ञ्णिति इति योगविभागेन च समाहितम् ।

तदनन्तरञ्च वृद्धिप्रतिषेधानुपपत्तिमाशङ्‌क्ययोगविभागमकृत्वा मृजेर्वृद्धिरित्यस्ये गुलक्षणत्वसम्पत्तये इको गुणवृद्धी इत्यस्य इक्पदोपस्थिति पक्षत्व माश्रितम् ।

तदनन्तरमुक्तम् - एवं तर्हि इहान्ये वैयाकरणमृजोरजादौ संक्रमे विभाषा वृद्धिमारभन्ते परिमृजन्ति परिमार्जन्ति, परिमभृजतुः परिममार्जतुरित्याद्यर्थं तदिहापि साध्यम् । तस्मिन् साध्ये योगविभागः करिष्यते मृजेर्वृद्धिश्चः, भवति । ततः अचि क्ङिति अजादौ च क्ङिति मृजेर्वृद्धिर्भवति, परिमार्जन्ति परिमार्जन्तु ।

किमर्थमिदम् ? नियमार्थम् अजादौ एव किति नान्यत्र क्वान्यत्र माभूत् मृष्टः मृष्टवान् इति । ततः वा कचि क्ङिति मृजेर्वृद्धिर्भवति परिभृजन्ति परिमार्जन्ति परिमभृजतुः परिममार्जतुरिति ।

एवञ्च भाष्ये अचो ञ्णिति इति सूत्रे मृजेर्वृद्धिरिति अनुवर्तते ।

---

1- महाभा० - पृ० 126

जराया जरसन्यतरस्या-मित्यत्र: अन्यतरस्याम् अचिरनुवृत्त इत्यत: अचि इति मण्डूकप्लुत्यानुवर्तते । एवञ्च योगविभाग: कृत: मृजेर्वृद्धिरच:, इत्येको योग:, अचि क्ङिति इति द्वितीयो योगो नियमार्थ:, वा इति तृतीयो योग: अत्र चीति वर्तते । अथञ्च विकल्पार्थक: तथा चोक्तवार्त्तिकस्य प्रयोजनं योग-विभाभागादेव सिद्धम् । तथा चेदं वार्त्तिकं न कर्त्तव्यम्भवति । उपपादित-न्चैतत् न्यासग्रन्थे तत्रैव । "कथं पुनरिष्यमाणापि सा लभ्यते । यथा लभ्यते तथा श्रूयताम् । अचो ञ्णिति इत्यत्र मृजेर्वृद्धिरिति वर्तते । जरा या जरस-न्यतरस्यामित्यतोऽन्यतरस्यां ग्रहणञ्च मण्डूकप्लुतिन्यायेनानुवर्तते । सा च व्यवस्थितविभाषा । अच इति योगविभाग: क्रियते मृजेरजादौ संक्रमे विभाषा वृद्धिर्भवति अन्यत्र तु न भवत्येव" (न्यास - पृ० 86)

## 5- ऋकारऌकारयो: सवर्णसंज्ञा वक्तव्या

ऋकारस्य मूर्धस्थानत्वात् ऌकारस्य च दन्तस्थानत्वात् स्थानभेदात् तुल्यास्येति सवर्णसंज्ञाया अप्राप्तौ वार्त्तिकारम्भ: । तथा च होतृऌकार इत्यादौ अक: सवर्णेऽचीति दीर्घे होतॄकार इति सिध्यति । अत्र ऋकारऌकार-समुदायस्य स्थानिनोऽन्तरतम: सवर्णो नास्ति । न च ऌवर्णस्य सवर्णो दीर्घ: प्रसिद्ध इति इति कृत्वा ऋकार एव दीर्घो भवति ।

ननु अक: सवर्णे दीर्घ इत्यत्र ऋति ऋ वा वचनम् । ऌति ऌ वा वचनम् । तत्र ऌ वा वचनमित्यत्र दीर्घेऽनुवृत्ते ऌति ऌशब्दे विकल्पितेऽप्राप्त एव पक्षे दीर्घो भविष्यति सा च भवन् ऌकारस्य दीर्घाभावात् ॠकार एव

जराया जरसन्यतरस्या-मित्यत्र: अन्यतरस्याम् अचिरन्नुत इत्यत: अचि इति मण्डूकप्लुत्यानुवर्तते । एवञ्च योगविभाग: कृत: मृजेर्वृद्धिरच:, इत्येको योग:, अचि क्ङिति इति द्वितीयो योगो नियमार्थ:, वा इति तृतीयो योग: अत्र चीति वर्तते । अथञ्च विकल्पार्थक: तथा चोक्तवार्त्तिकस्य प्रयोजनं योग-विभाभागादेव सिद्धम् । तथा चेदं वार्त्तिकं न कर्त्तव्यम्भवति । उपपादित-न्चैतत् न्यासग्रन्थे तत्रैव । "कथं पुनरिष्यमाणापि सा लभ्यते । यथा लभ्यते तथा श्रूयताम् । अचो ञ्णिति इत्यत्र भृजेर्वृद्धिरिति वर्तते । जरा या जरस-न्यतरस्यामित्यतोऽन्यतरस्यां ग्रहणञ्च मण्डूकप्लुतिन्यायेनानुवर्तते । सा च व्यवस्थितविभाषा । अच इति योगविभाग: क्रियते मृजेरजादौ संक्रमे विभाषा वृद्धिर्भवति अन्यत्र तु न भवत्येव" (न्यास - पृ० 86)

## 5- ऋकारलृकारयो: सवर्णसंज्ञा वक्तव्या

ऋकारस्य मूर्धस्थानत्वात् लृकारस्य च दन्तस्थानत्वात् स्थानभेदात् तुल्यास्येति सवर्णसंज्ञाया अप्राप्तौ वार्त्तिकारम्भ: । तथा च होतृलृकार इत्यादौ अक: सवर्णेऽचीति दीर्घे होतॄकार इति सिध्यति । अत्र ऋकारलृकार-समुदायस्य स्थानिनोऽन्तरतम: सवर्णो नास्ति । न च लृवर्णस्य सवर्णो दीर्घ: प्रसिद्ध इति इति कृत्वा ऋकार एव दीर्घो भवति ।

ननु अक: सवर्णे दीर्घ इत्यत्र ऋति ऋ वा वचनम् । लृति लृ वा वचनम् । तत्र लृ वा वचनमित्यत्र दीर्घेऽनुवृत्ते लृति लृशब्दे विकल्पितेऽप्राप्त एव पक्षे दीर्घो भविष्यति सा च भवन् लृकारस्य दीर्घाभावात् ऋकार एव

भविष्यतीति व्यर्थं सवर्णसंज्ञावचनम् । तत्र ऋशब्दो द्विमात्रः । मध्ये द्वौ रेफौ तयोरेकामात्रा अभितोऽज्भक्तेरपरा, ईषत् स्पृष्टश्चायम् । तत्र प्रयत्नभेदात् ऋकारेण ग्रहणात् अनण्त्वात् दीर्घसंज्ञाया अभावात् अप्राप्तोऽयं विधीयते । वे लृति लृ वा वचनमित्यत्रापि लृ कारो द्विमात्रः ईषत्स्पृष्टश्च मध्ये द्वौ लकारौ तयोरेका मात्राभितोऽज्भक्तेरपरा । प्रयत्नभेदात् ऋकारेणाग्रहणात् अप्राप्तौ विधीयते । एवञ्च होतॄकार इत्यादिसिद्धिः स्यादेवेति चेन्न । तथापि संज्ञाया विधानस्यावश्यकत्वात् । अन्यथा सवर्णसंज्ञामविधाय एतस्य वचने अक इति सम्बन्धात् । अङ्•मात्रस्य लृति तत् कार्यं प्राप्नोति तथा च दध्य् लृकार इत्यादावपि यणं प्रबाध्य लृकार एव स्यात् । तस्मात् सवर्ण-संज्ञा वक्तव्यैवेति ।

ननु दध्य्लृकार इत्यादौ दोषवारणार्थं ऋति ॠ वेत्यत्र ऋत इति वक्तव्यम् । तच्च लृति इत्यत्रापि अनुवर्तते । अस एवञ्च लृकारे लृ भवति ऋत इत्येव ।

अयम्भावः ऋत ॠ वा वचनमिति करणे होतृकार इत्यादौ ऋकारस्य ऋकार एव सवर्णं इति ऋत्येव भविष्यति । लृति ऋत एव ॡ वा वचनमिति चा-सवर्णार्थम् । लृति ऋत एव ॡ भवति नान्यस्येति । तथा च दध्य्लृकार इत्यादौ इकारस्य न ॡ भवति तेन लृति रूप द्वयं सिध्यति । तत्रासंहिताया-मृकारे होतृ ऋकार इति रूपम् । संहितायामपि ऋत्यक इति शाकलप्रकृतिभाव एतदेव रूपम् । शाकलाभावे होतॄकारः होतृकार इति ईषत्स्पृष्ट घटितं विवृत-घटितञ्च रूपद्वयं लृकारेऽसंहितायां संहितायां वा शाकले होतृ लृकारः इति

रूपम् । शाकलाभावे तु होतृकारो होतॢकार इति रूप द्वयं सिध्यति । इति चेन्न सवर्णसंज्ञापक्षे लृति ऋत लृ वा वचनमित्यस्य अकर्त्तव्यता लाघवात् असवर्ण-संज्ञापक्षे ऋकार ऌकारयोरच्त्वाभवात् दीर्घप्लुत्यसिद्धेः ननु च ऋकारस्य ऌकारस्य चाच्त्वं वक्ष्यामि। तथा च होतृ ऋकारः होतृकारः होतृ उकारः । होतृ लृकारः, होतॢकारः होतलृ उकार इति । सवर्णसंज्ञापक्षे तु सर्वं समन्जसमिति ।

ननु ऋति वा वचनमित्यादि वचनद्वयारम्भपक्षे ऋति इत्यत्र ऋत इति करणे ऋकार ऌकारयोरच्त्वस्वीकारे च सर्वेष्टसंग्रहः । सवर्णसंज्ञापक्षेऽपि द्वयोर्ऋकारयो रेफद्वययुक्तत्वात् विवृतत्वाच्च कदाचिदरेफद्वययुक्त ऋ भवति कदाचिद् विवृत ऋकारः । लृकारेऽपि कदाचित् ऋकारान्तरतमः ऋकारः कदाचित् लृकारन्तरतम ऌकार इति साम्यमुभयोः पक्षयोः । तथा च द्वयोः कतरपक्षो वै युक्त इति चेत् अत्रोच्यते सवर्णसंज्ञापक्ष एव ज्यायान् उक्तन्च भाष्ये - "सवर्णसंज्ञावचनमेव न्यायः । दीर्घत्वन्चैव हि सिद्धं भवति । अपि च ऋकारग्रहणे लृकारग्रहणं सन्निहितं भवति । ऋत्यकः खट्व ऋष्य माल ऋष्यः । इदमपि सिद्धं भवति खट्व लृकारः माल लृकार इति । वा सुप्यापिशलेः उपर्कारीयति उपार्कारीयति । इदमपि सिद्धं भवति उपल्कारीयति उपाल्कारीयति ।"[1]

न च ऋदितां लृदितान्च धातूनामनुबन्धकार्याणां संकरप्रसङ्गः पृथगनुबन्ध-सामर्थ्यात् ।

---

1- म० भा० - पृ० 159.

उरण् रपर इत्यादौ रप्रत्याहारमाश्रित्य तवल्कार इत्यादौ लपरत्वं सिद्धम् । क्लृप्यमानं पश्येत्यादौ ऋवर्णान्नस्येति णत्वं प्रसक्तिरपि नास्ति । चुटुतु लशर्व्यवाये नेति वचनात् अथवा वर्णैकदेशस्य वर्णग्रहणेन ग्रहणात् लकारव्यवधानात् न णत्व प्रसक्तिः । न च क्लृप्तशिख इत्यादौ गुरोरिति प्लुतप्रसङ्गे अनृत इति प्रतिषेधः स्यादिति वाच्यं लृकारस्य वर्णसमाम्नाये पृथक् पाठसामर्थ्यात् सवर्णसंज्ञायामपि । क्वचित् परस्पराग्राहकत्वकल्पनेनाा दोषात् । ननु ऋ लृवर्णयोः सावर्ण्ये सति वर्ण समाम्नाये लृवर्णस्य पाठो व्यर्थः ऋकारग्रहणादेव अणुदिति सूत्रेण ग्रहणादिति चेन्न सवर्णसंज्ञार्थमेव तस्य तत्र पाठात् अन्यथा तस्यासत्त्वाङ्कया अस्य वार्त्तिकवचनस्यैव शक्यत्वं स्यात् ।

तथा च स्वरूपप्रतिपत्त्यर्थं क्वचित् सवर्णाग्राहकत्वकल्पनार्थं लृकार-पाठो युक्तः ।

6- अर्धपूर्वपदश्च पूरणप्रत्ययान्तः संख्यासंज्ञो भवतीति वक्तव्यं समासकन् विध्यर्थम्

बहुगणवतु इति संख्या ॥1/1/23॥ इति सूत्रे इदं पठितं बहुगणवतु इति इत्येते संख्या संज्ञा भवन्ति । बहुक्तत्वः बहुधा, गणकृत्वः गणधा, तावत् कृत्वः तावद्धा कतिकृत्वः कतिधा इति प्रयोगाः ।

तत्रेदं वार्त्तिकं प्रवृत्तम् । अस्यार्थः - अर्धपूर्वपदश्च पूरणप्रत्ययान्तः संख्यासंज्ञो भवतीति वक्तव्यम् । किं प्रयोजनं समासविध्यर्थं कन् विध्यर्थञ्च ।

७४समासविध्यर्थम् - अर्धपञ्चमशूर्पम् । अर्धं पञ्चमं येषामिति बहुव्रीहिः । अर्धपञ्चमैरर्धाधिकचतुर्भिः शूर्पैः क्रीत इति विग्रहे तद्धितार्थोत्तरपदेति समासः । संख्या पूर्वो द्विगुरिति द्विगुसंज्ञायां शूर्पादमन्यतरस्यामिति विहितस्य अञ्ठनो वा अध्यर्धपूर्व द्विगोर्लुग संज्ञायामिति लुक् ।

कन् विध्यर्थम् - अर्धपञ्चमकः । संख्याया अतिशायन्तायाः कन् इति कन् । एवमर्थं वार्त्तिकमारब्धव्यम् ।

न्यासकारश्चात्र वार्त्तिके वक्तव्यमित्यस्य व्याख्येयमित्यर्थमाह । तत्रेदं व्याख्यानम् । इति चेत्यत्र यश्च कारः स इह स्वरितत्वमाराज्यसिंहावलोकनन्यायेनोपस्थाप्यते । स चानुक्त समुच्चयार्थः । तेन अर्धपूर्वपदश्च पूरणप्रत्ययान्तः संख्यासंज्ञो भवतीति सिद्धम् ।

## 7- अपुरीति च वक्तव्यम्

इदञ्च वार्त्तिकम् अन्तरं बहिर्योगोपसंख्यानयोः (1/1/36) इति सूत्रे उक्तम् । बहिर्योगो परिधानीये च वाच्ये अन्तरशब्दस्य पूर्वेण प्राप्त सर्वनामसंज्ञा जसि विभाष्यते । अन्तरे गृहाः अन्तरा गृहाः, अन्तरे शाटकाः अन्तराः शाटकाः । तत्र गणसूत्रे अपुरीति कर्त्तव्यमित्यर्थः । इहसूत्रे त्वनेनार्थः । तत्र प्रकारात् वहिर्वर्तिन्यामन्तरायां पुरि इत्यर्थे अन्तरशब्दस्य पुरविशेषणस्य वहिर्योगोऽस्ति । अतः पुर्विशेषणी भूतान्तराशब्दस्य टाबन्तस्यापि लिङ्गविशिष्टपरिभाषया सर्वनामसंज्ञाप्रसङ्गे निषेधार्थं वार्त्तिकमिदं कर्त्तव्यम् । तेन

अन्तरायामित्यत्र स्यात् न भवति ।

8- विभाषाप्रकरणे तीयस्य वा ङित्सु सर्वनामसंज्ञेत्युपसंख्यानम्

वार्त्तिकमिदम् । अन्तरं बहिर्योगोपसंख्यानयोः ॥1/1/36॥ सूत्रे पठितम् । विभाषाजसीति सूत्रात् एतस्मिन् सूत्रे विभाषा जसीति अनुवर्तते । तत्र विभाषाप्रकरणे इदं वचनं पठितव्यम् । तीयप्रत्ययान्तस्य ङित्विभक्तिसु वा सर्वनामत्वं वक्तव्यम् । तेन द्वितीयाय द्वितीयस्मै । द्वितीयायै द्वितीयस्यै। तृतीयाय तृतीयस्मै तृतीयायै तृतीयस्यै इति । प्रयोगाः सिध्यन्ति ।

तत्र सर्वादिगणे पाठात् अङित्स्वपि नित्यं सर्वनामत्वं स्यात् । अतः विभाषाप्रकरणे पठनीयम् । तत्रापि जस् विभक्तेः प्रकरणात् ङित्सूपसंख्यानं कृतम् । यद्यपि द्वितीयायै द्वितीयस्यै तृतीयायै तृतीयस्यै इति सिद्धये विभाषा द्वितीया-तृतीयाभ्यामिति सूत्रेण स्याड्ह्रस्वौ विभाषितौ । ततश्च स्यड्ह्रस्वाभावे याटि रूपद्वयं सिद्धमिति चेत्तथापि पुंनपुंसकयोः सर्वनामत्वं तीयप्रत्ययान्तस्य न स्यादिति एतदुपसंख्यानं कर्तव्यमेव । उपसंख्याने च कृते विभाषा द्वितीया-तृतीयाभ्यामिति सूत्रं न कर्त्तव्यम् । उपसंख्याने च कृते सर्वमिष्टं संगृहीतं भवति । यथोक्तं भाष्ये "वाप्रकरणे तीयस्य ङित्सूपसंख्यानं कर्त्तव्यम् । द्वितीयायै द्वितीयस्यै, तृतीयायै तृतीयस्यै, विभाषा द्वितीया तृतीयाभ्यामित्येतन्न वक्तव्यं भवति । किं पुनरत्र ज्यायः । उपसंख्यानमेवात्र ज्यायः । इदमपि सिद्धं भवति द्वितीयाय द्वितीयस्मै, तृतीयाय तृतीयस्मै"

॥महाभा० - पृ० 221॥

मनोरमायामप्युक्तम् "अनेनैवसिद्धौ विभाषा द्वितीया-तृतीयाभ्यामित्येतन्न वक्तव्यं भवति"। ननु द्वयोः पूरणो द्वितीय इत्यत्र द्वेस्तीयः (5/2/54) इति सूत्रेण पूरणे तीयप्रत्ययः । त्रेः संप्रसारणञ्च (5/2/52) इति सूत्रेण तीयप्रत्यये सम्प्रसारणे कृते तृतीयशब्दानिष्पन्नः । न च हलश्चेतिव दीर्घस्तत्र द्रलोपेति सूत्रात् अणनुवृत्ते अण एव दीर्घ विधानात् । एवञ्च द्वितीय-तृतीयशब्दौ निष्पन्नौ । तयोर्विभाषाप्रकरणे ङित्सूपसंख्यानं कर्त्तव्यम् तीयप्रत्यान्तत्वात् तयोर्ग्रहणात् । टापि कृते द्वितीयातृतीयाशब्दयोश्च तीयान्तत्वेन ग्रहणं न स्यादिति तदर्थं विभाषा द्वितीयेति सूत्रं कर्त्तव्यमिति चेन्न तीय-शब्दस्य प्रत्ययत्वात् प्रत्ययाग्रहणे तदन्तग्रहणात् तीयप्रत्ययान्तस्येत्यर्थस्याक्षयकत्वात् । तीयशब्देन द्वितीयतृतीययोस्तीय प्रत्यान्तयोः प्रातिपदिकग्रहणात् तद्ग्रहणे लिङ्गविशिष्टस्यापि ग्रहणात् द्वितीयाशब्दस्य तृतीयाशब्दस्यापि ग्रहणात् । द्वितीयोत्यादौ पूर्वान्तवद्भावा वा एकादेशस्य, तीयप्रत्ययान्तत्वं वेद्यम् । ननु पूरणात् भागे तीयादन् (5/3/48) सूत्रेण पूरणप्रत्ययोयस्तीयस्तदन्तात् प्रातिपदिकात् भागे वर्तमानात् स्वार्थेऽन्प्रत्ययः स्यात् । तथा च भागवाचकौ द्वितीयतृतीयशब्दौ ताभ्यां स्त्रीत्वे टापि द्वितीया तृतीयेति शब्दौ तयोरेव विभाषा द्वितीया-तृतीयाभ्यामिति सूत्रे ग्रहणम् । न च तयोरुक्तवार्त्तिकेन संग्रहः तीयप्रत्ययान्तत्वाभावात् । तस्मात् सत्यपि वार्त्तिके सूत्रे कर्त्तव्यमेवेति चेन्न भागार्थे विधीयमानस्यानो भक्तेर्विशेष्यत्वेन न स्त्रीत्वमनभिधानात् । प्रमाणञ्चात्र सूत्रप्रत्याख्यानपरभाष्यमेव । वस्तुतः उक्तभाष्यप्रामाण्यादेव अनन्तरस्य विभाषा द्वितीयेत्यादि सूत्रे न ग्रहणमेव कल्पनीयम् । स्त्रीत्वानभिधाने प्रमाणाभावात् ।

न च तीयप्रत्ययान्तस्य द्वितीय-तृतीयशब्दस्यैव वार्त्तिके प्रतिपदोक्तत्वात् ग्रहणं टापि कृतैकादेशस्य द्वितीया-तृतीयेत्यादेर्न ग्रहणं तथा च तद् ग्रहणार्थसूत्रं कर्त्तव्यमिति वाच्यम् अत्र लक्षणप्रतिपदोक्त परिभाषाया अप्रवर्तनात् । सूत्रप्रत्याख्यान परभाष्यपरिभाषाया अप्रवर्तनात् । सूत्रप्रत्याख्यान परभाष्यविरोधात् । एवञ्च अनन्ततीयप्रत्ययघटितस्य न ङि·त्सु सर्वनामत्वमिति रामवद् रूपं बोध्यम् । ननु यथैव तीयग्रहणात् टाप्प्रत्ययान्तस्य तीया इत्यस्य ग्रहणं क्रियते तथैव भागार्थकान् प्रत्ययान्तस्यापि ग्रहणमस्तु तथा च अनन्तस्यापि द्वितीयादिशब्दस्य ङि·त्सु सर्वनामत्वं स्यात् । अनन्तस्याग्रहणे च टबन्तस्यापि अग्रहणात् विभाषेति सूत्रं कर्त्तव्यमेवेति । तद्ग्रहणे एतदग्रहणे वैषम्ये किं बीजमिति चेत् अत्रोच्यते तीयग्रहणात् तीयेत्यस्य ग्रहणं तु सम्भवति प्रातिपदिकग्रहणे लिङ्·गविशिष्टस्यापि ग्रहणात् । न च तीयस्य प्रातिपदिकत्वं नास्तीति कुतो ग्रहणमिति वाच्यं तीयशब्दस्य प्रत्ययत्वात् तदन्तविधौ प्रत्ययान्तग्रहणात् एवञ्च तीयेत्यनेन तीयप्रत्ययान्त द्वितीय-तृतीय प्रातिपदिकौ बोध्येते तथा च लिङ्·गविशिष्टस्य ग्रहणं भवति । न च तृतीयो प्रत्ययो न गृह्यतां श्रुतिरेवास्तु यत्र तीयश्रुतिः तस्य ङि·त्सु सर्वनामत्वमिति वाच्यम् । एवं तर्हि पटुजातीयः पर्वतीय इत्यादावपि सर्वनामत्वं प्रसज्येत । न चार्थवद्ग्रहणे नानर्थकस्य ग्रहणमिति परिभाषया अतिप्रसक्तिस्तत्रत्या कवारणीया । प्रत्ययपक्षेऽपि अवश्यमेवोक्तस्थलेऽतिप्रसक्तिनिवृत्तये साश्रयणीयेति वाच्यम् । तीयस्यैव तकेवलस्य सर्वनामत्वप्रसक्तेः द्वितीयतृतीयोरभावात् केवल तीयस्य प्रयोगाभावात् वार्तिकवैयर्थ्यापत्तेः । न केवला प्रत्ययाः प्रयोक्तव्या इति भाष्यात् । न च यत्र तीयश्रुतिः सार्थकेति अर्थाश्रयणम् । तीयस्येत्येवोक्तत्वात् । तीयप्रत्यय स्वीकारपक्षे च

प्रत्ययग्रहणे तदन्तग्रहणात् तीयान्तस्य सर्वनामत्वं सिध्यति । पूर्वान्तवद्भावात् द्वितीयेत्यादौ तीयप्रत्ययान्तत्वं बोध्यम् । भागार्थकात् प्रत्ययान्ते तु एकादेशाभावात् नान्तवद् भावात् । स्त्रीप्रत्ययाभावात् नोक्तपरिभाषया ग्रहणमिति अनुप्रत्ययान्तद्वितीयतृतीयाशब्दयोर्न सर्वनामत्वमिति बोध्यम् ।

यत्तु न्यासकारैरुक्तम् - "उपसंख्यानशब्दस्य प्रतिपादमर्थः । अस्मिन् विभाषाप्रकरणे तीयप्रत्ययान्तस्य सर्वनामसंज्ञायाः प्रतिपादनं कर्त्तव्यम् । तत्रेदं प्रतिपादम् - विभाषाजसीत्यत्र विभाषेति योगविभागः क्रियते । तत्र च सर्वादीनि द्वन्द्वे इति च निवृत्तम् । तेन तीयस्य विभाषा सर्वनामसंज्ञा भविष्यति न चैवं सति अतिप्रसङ्गः योगविभागादिष्टसिद्धेः । नापि विभाषाद्वितीयातृतीयाभ्यामित्यस्य वैयर्थ्यापत्तिः, प्रपन्चार्थत्वात् । ततः जसीति द्वितीयो योगः । अत्र विभाषाग्रहणं सर्वादिग्रहणम् द्वन्द्वग्रहणन्चानुवर्तते" (का० न्यास - पृ० 146) इत्युक्तम् । तन्न युक्तम्, तादृश योगविभागस्य भाष्येऽदृष्टत्वात् । विभाषातियोगे सर्वादीनीत्यादेः सम्बन्धाभावे प्रमाणाभावात् । जसीतियोगे मण्डूक प्लुत्या सम्बन्धे गौरवात् । योगविभागेऽतिप्रसक्तेः सत्त्वात् । तस्मात् भाष्यकारीय एव पन्थाः युक्तः ।

<u>विभाषापदार्थविमर्शः</u>

अत्रेदं विचार्यते विभाषाप्रकरणे इत्यत्र वार्त्तिके विभाषा का ? तथाहि - विभाषेति शास्त्रीया संज्ञा । संज्ञासूत्रन्च न वेति विभाषा । तत्र न भोऽभावार्थकतया वेत्यस्य विकल्पार्थकतया अभावविकल्पयोर्विभाषा संज्ञा

भवति । सिद्धान्तकौमुद्यां तु निषेधविकल्पयोर्विभाषेत्युक्तं तन्न युक्तं समासाघटकतया नञो निषेधार्थकत्वाभावात् । अत एव गङ्गां निषेधतीत्यर्थे गङ्गां नेति न प्रयुज्यते । वस्तुतस्तु निषेधस्याप्यभावार्थकत्वात् दीक्षितवृत्तिनायुक्ता । ननु स्वं रूपमित्यादिपरिभाषणात् नवाशब्दस्यैव विभाषासंज्ञा स्यात् नार्थस्येति चेन्न इति शब्दसामर्थ्यात् अर्थग्रहणम् । इति शब्दस्य पदार्थविपर्यासमत्वं प्रसिद्धम् । इति लोकेऽर्थपदार्थकस्य शब्दपदार्थकत्वकृदस्ति राम इत्युच्चारयेत्यादौ । गवित्ययमाह इत्यादौ च । इह तु स्वरूपमिति परिभाषणात् शब्दपदार्थकस्यार्थपदार्थकत्वकृद् । स्वरूपमिति सूत्रसत्त्वे इतिः सार्थकः । तत् सूत्रप्रत्याख्याने तु इतिर्व्यर्थ एव अर्थे कार्यस्याबाधात् । न वा शब्दस्यैव संज्ञित्वे विभाषाश्वेरित्यादौ विभाषाश्रवणे नवा शब्दौ उपस्थितौ आदेशौ स्यातुम् । अत्र न वा शब्दो न एकनिपातोऽपि तु नेति वेति निपातद्वयं बोध्यम् । निर्णीतञ्चैतत् महाभाष्ये ।

विभाषा त्रिधा भवति प्राप्ता अप्राप्ता प्राप्ता प्राप्ता च । तत्र प्राप्तविभाषा यथा "विभाषा जसि" । पूर्वेण प्राप्तस्य सर्वनामसंज्ञानिषेधस्य विकल्पो विधीयेत । अत्र च विभाषा सूत्रस्य नोपयोगः । निषेधांशस्यैव केवलस्य चरितार्थत्वात् विधेस्तु पूर्वेणैव प्राप्तत्वात् । यथा वा विभाषोपपदेन प्रतीयमाने इति स्वरितचित इत्यादिना नित्यमात्मने पदे प्राप्ते विभाषा विधीयते । विभाषाशब्दश्च लोके विकल्पार्थकप्रसिद्धः । तेन भावाभावयोर्विभाषापदोपस्थापितयोरभावांशस्यैव चरितार्थत्वं पूर्वेण भावांशस्य प्राप्तत्वात् । भावांशस्तावदचरितार्थः स्यात् । अप्राप्तविभाषा यथा विभाषोर्णोः,

तीयस्य ङि॰त्सूपसंख्यानमित्यादौ । अत्र पूर्वेणाप्राप्तस्य विकल्पेन विधानं क्रियते । अत्रापि विधिमात्रस्य चरितार्थत्वात् नवेति सूत्रस्य नोपयोगः । निषेधांशस्य व्यर्थत्वात् किन्तु प्राप्ताप्राप्तविभाषासु अस्योपयोगः । सा च विभाषा श्वेरित्यादौ । वचिस्वपि यजादीनामित्यनेन कित्सु सम्प्रसारणं विधीयते ।

तत्र नवेति संज्ञासूत्राभावे विभाषापदेनोपस्थापितभावाभावयोर्बोधे । यदि निषेधमुखेन सूत्रप्रवृत्तिः तदा कित्सु सम्प्रसारणविकल्पः स्यात् न पित्सु । यदि च विधिमुखेन प्रवृत्तिस्तर्हि पित्स्वेव तिप्सिप्मिप्सु संप्रसारणं विकल्पः स्यात् न कित्सु स तत्र यजादित्वात् नित्यमेव स्यात् । न च भावाभावयोर्व्यवस्थितत्वं कित्सु प्रतिषेधमुखेन पित्सु विधिमुखेनेति, वाक्यभेदप्रसंगात् तस्यान्यतरविकल्पे एवोपक्षीणत्वात् ।

सत्यां संज्ञायां तु श्रुतक्रमानुरोधात् पूर्वं निषेधांशप्रवृत्तौ कित्सु प्रतिषेधे किदकित्सु एकरूपतां प्राप्तेषु पश्चात् विकल्पांशप्रवृत्ते सर्वत्र विकल्पो भवति। शुशाव शिश्वाय, शुशुवतुः शिश्वियतुरितिरूपाणि सिध्यन्ति ।

भाष्यकारस्तु - ह्वोरन्यतरस्यामित्यादौ विभाषाणदाभावादनुपत्तिः । इति शब्दस्य च विभाषेत्यत्रापि सम्बन्धात् विभाषापदार्थः संज्ञेति न युक्तः अर्थे संज्ञात्वस्यादृष्टत्वात् । तस्मात् लक्ष्यानुसारात् उभयमुखेन प्रवृत्तिर्न वाच्येति विभाषापदघटितेऽपि तथैवास्तु किं सूत्रेणेति जातिव्यक्तिपक्षयोरुभयोरपि सूत्रं प्रत्याचख्यौ ।

अयं भाव: संग्राहकवाक्ये यदि विधिमुखेन प्रवृत्ति: तर्हि उपप्लुत वाक्येऽपि विधिमुखेनैव प्रवृत्ति: यदि तु संग्राहकवाक्ये निषेधमुखेन प्रवृत्तिस्तर्हि उपप्लुतवाक्येष्वपि निषेधमुखेनैव प्रवृत्ति: स्यात् । उभयमुखेन प्रवृत्तिस्तु गौरवात् वाक्यभेदप्रसङ्गात् न युक्ता । अत: विभाषेति शब्दस्य विकल्पोऽर्थो भावाभावांशयुक्तोऽभिप्रेत: इति । तीयस्य ङित्सूपसंख्यानमित्यत्र अप्राप्तविभाषा । पूर्वेण तीयप्रत्ययान्तस्य सर्वनामत्वाप्राप्तेरिति ।

एवञ्च तीयप्रत्ययान्तस्य सर्वनामत्वं तदभावश्च सिद्ध इति दिक् ।

१- मस्जेरन्त्यात् पूर्वं नुममिच्छन्त्यनुषङ्गसंयोगादिलोपार्थम्

मिदचोऽन्त्यात्पर: {1/1/47} इति सूत्रे वार्तिकमिदम् । अत्र वार्त्तिकसम्बद्धत्वात् अस्य सूत्रस्य व्याख्यानमपेक्षितम् । अत: किञ्चित् तद् उपस्थाप्यते । तथाहि - अच इति निर्धारणे षष्ठी । यतश्च निर्धारणम् इति सूत्रेण ।

निर्धारणपदार्थविचार:

निर्धारणञ्च जातिगुणक्रियासंज्ञाभि: समुदायादेकदेशस्य पृथक्करणम् । यतोर्निर्धारणं तत: षष्ठीसप्तम्यौ भवत: । यथा नृणां नृषु वा द्विज: श्रेष्ठ:, गवां गोषु वा कृष्णा बहुक्षीरा गच्छतां गच्छत्सु वा धावन् शीघ्र:, छात्राणां छात्रेषु वा मैत्र: पटु: । इति क्रमेणोदाहरणानि । यत इति पञ्चम्यर्थे तसि: ।

यस्मात् समुदायात् इत्यर्थः जात्यादिविशिष्टस्य एकदेशस्य पृथक्करणम् । तथा च जात्यादिविशिष्टस्य स्वघटितसमुदायात् स्वेतरसमुदाय घटकव्यावृत्तधर्मकरणकं पृथक्करणं निर्धारणम् तद्वाचकात् षष्ठी-सप्तमी चेति सूत्रार्थयत इति पदाभावे जात्यादिविशिष्टस्यैव षष्ठी स्यात् । न च प्रथमया बाधः, तदपवादत्वात् षष्ठ्याः सप्तम्या वा आपत्तेः ।

समुदायाच्चेदेकदेशस्य पृथक्करणरूपेऽर्थे षष्ठीसप्तम्यौ भवतः । तत्र समुदायैकदेशयोरवयवावयविभावोऽपि सम्बन्धः प्रतीयत एवेति सोऽपि निर्धारणविभक्त्यर्थः । तथा च स्वघटितसमुदायावधिक स्वेतरसमुदायघटक-व्यावृत्तधर्मकरणकपृथक्करणरूपनिर्धारणविषयत्वरूपोऽवयवावयविभावरूपश्च सम्बन्धो विभक्त्यर्थः । नृणां द्विजः श्रेष्ठ इत्यादौ स्वघटितसमुदायो नृसमुदायः तदवधिकः स्वेतरो द्विजेतरो यो तादृश समुदायघटकः क्षत्रियादि तद्व्यावृत्तो धर्मः श्रेष्ठत्वादिः तदेव करणं यत्रेति तत् करणकं पृथक्करणं तद्रूपं निर्धारणं विषयो यस्येति तद्निर्धारणविषयः नृसमुदायावयवः द्विजः श्रेष्ठः इति बोधः । संसर्गघटककरणञ्च श्रेष्ठत्वादिरूपमेव ।

अयं भावः पृथक्करणावधेः षष्ठी-सप्तम्यौ भवतः । तत्प्रकृतिभूत पृथक्करणावधेश्च निर्धार्यमाणोऽन्वयो भवति । विभक्त्यर्थश्च अन्वयकोटि प्रविष्टः । अन्वयश्च स्वघटकत्व-स्वघटकनिर्धार्यमाणेतरावृत्ति धर्मवत्त्वोभयरूपः । तथा च नृणां द्विजः श्रेष्ठ इत्यादौ निर्धारण षष्ठीप्रकृतिभूतस्य नृसमुदायस्य निर्धार्यमाणे द्विजपदार्थे स्वघटकत्वसम्बन्धेनान्वयः एवं स्वघटकनिर्धार्यमाणद्विजेतरावृत्तिश्रेष्ठत्व धर्मवत्त्वसम्बन्धेन चान्वयो भवति । प्रथम-

सम्बन्धाभावे नृणां गजः स्थूलः इति प्रयोगापत्तिः । प्रथमसम्बन्धदाने च न दोषः गजस्य नृसमुदायघटकत्वाभावात् । नृसमुदायश्च नृत्वावच्छिन्नसमुदायो ग्राह्यः । द्वितीयसम्बन्धाभावे च नृणां द्विजः प्रमेयः नृणां ब्राह्मणः प्राणीत्यादयः प्रयोगा आपद्येरन् । द्वितीयसम्बन्ध सद्भावे च न दोषः स्वघटक-निर्धार्यमाणद्विजेतरशूद्रादिवृत्तितत्वस्यै प्रमेयत्वादिधर्मेषु सत्त्वात् । एवञ्च नृ-समुदायविशिष्टो द्विजः श्रेष्ठ इति बोधः । वैशिष्ट्यं पूर्वोक्तमेव ।

ननु सरूपाणामेकशेष इत्यादावपि सरूपपदोत्तरविभक्तिर्निर्धारणे वर्तते । तत्र सरूपपदार्थस्य शेषत्वेन निर्धार्यमाणे एकपदार्थेऽन्वयः कार्यः । तथा च सरूपविशिष्ठ एको शेष इति बोधः ।

तत्र सरूपपदार्थघटकत्वसम्बन्धस्य एकपादार्थे सत्त्वेऽपि स्वघटक-निर्धार्यमाणेतरा वृत्तिधर्मवत्वस्य सम्बन्धो न घटते । स्वघटका ये एकेतरे तद-वृत्तिधर्मवत्वमित्यत्र । तथाहि एकेतरेत्यादौ एकत्वावच्छिन्ने-तरस्याप्रसिद्धे एकत्वस्य केवलान्वपि त्वात् सर्वत्र सत्त्वात् ।

किञ्च एकपदस्य सरूपपदे साकांक्षत्वात् शेषपदेन सह समासोऽपि न स्यात् । इति चेन्न तत्रैकशब्दस्य न संख्यार्थः । प्रथमार्थकस्यैव एकशस्य ग्रहणात् । एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथेति स्मरणात् । तथा च सरूप-पदार्थस्य एकार्थे प्रथमे स्वघटकत्व स्वघटके निर्धार्यमाणप्रथमेतर द्वितीयाद्यवृत्ति-धर्मवत्त्वसम्बन्धाभ्यामन्वयः सम्भवति । धर्मश्च शेषत्वं तच्चावस्थितिमत्त्वम्।

सरूपपदे चैकपदस्य साकांक्षत्वेन समासाभाव एव । तत्र एकेति

लुप्तविभक्त्यन्तं पृथक् पदम् । सौत्रो लोपः । इति शेखरकारनागेशभट्टा-नामाशयः ।

अन्ये तु निर्धारणविभक्तिस्थले निर्धारणविभक्त्यन्तस्य निर्धार्यमाणे नान्वयः अपि तु निर्धारणकरणके धर्मे एव । तथा च समुदायविशिष्टत्वं निर्धा-रणविभक्तेरर्थः वैशिष्ट्यन्च स्वघटकवृत्तित्व-स्वघटकनिर्धार्यमाणेतरयावदवृत्ति-त्वोभयसम्बन्धेन । सम्बन्धद्वयेन च समुदायस्य तादृशधर्मेऽन्वयः । नृणां द्विजः श्रेष्ठ इत्यादौ नृत्वावच्छिन्नसमुदायस्य स्वघटकद्विजवृत्तित्वसम्बन्धः श्रेष्ठत्वे-ऽस्ति स्वं समुदायः तद्घटकद्विजे सत्त्वात् । स्वघटकनिर्धार्यमाणद्विजेतरक्षत्रिया-द्यवृत्तित्वमपि श्रेष्ठत्वेऽस्तीति सम्बन्धद्वयेन नृसमुदायस्य श्रेष्ठत्वेऽन्वयः । तद्-वदभिन्नो द्विज इति बोधः ।

अत्र पक्षे अवयवावयविभावो न षष्ठ्यर्थः । अपि तु उक्तसम्बन्धद्वयमेव तदेव निर्धारणं व्यावृत्तिकरणरूपं न च पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशे-नेति व्युत्पत्ति विरोधः । पदार्थैकदेशान्वये सति नित्यो घट इति नित्य-त्वस्य पदार्थैकदेश घटत्वे अन्वयेन प्रयोगः प्रामाणिकः स्यात् इहापि नृणां द्विजः श्रेष्ठ इत्यादौ नृसमुदायस्य विभक्त्यर्थसम्बन्धेन श्रेष्ठपदार्थैकदेशभूतश्रेष्ठत्वे-ऽन्वयात् इति वाच्यम् । तस्या व्युत्पत्तेर्नित्य साकाङ्क्षेतरविषयत्वात् । अत एव देवदत्तस्य गुरुकुलमित्यादौ देवदत्तादेः पदार्थैदेशभूतगुरुत्वादौ नित्यसाकां-क्षत्वात् अन्वयो भवति । इहापि नृसमुदायस्य श्रेष्ठत्व पृथक्करणरूपतया अस्ति साकांक्षत्वम् । केन धर्मेण समुदायात् एकदेशस्य पृथक्करणमिति अस्ति आकांक्षा ।

अत्र पक्षे द्विजमुद्दिश्य निरुक्तोभयसम्बन्धेन नृसमुदायविशिष्ट

श्रेष्ठत्वं विधीयते इति उद्देश्य विधेयभावोऽपि संगच्छते ।

नागेशपक्षे च नृसमुदायस्य द्विजेऽन्वयात् श्रेष्ठत्वस्य च उद्देश्यतावच्छेदके सम्बन्धकोटिप्रविष्टत्वात् नोद्देश्यविधेयभाव: सम्भवेत् ।

किन्च सम्बन्धकोटावेव श्रेष्ठत्वस्य निवेशात् श्रेष्ठपदं प्रयुक्तं व्यर्थं स्यात् । द्विधा मानं वा स्यात् तस्य ।

किन्च पुरूषोत्तम इत्यादौ पुरूषाणामुत्तम इति विग्रहे न निर्धारणे इति षष्ठीसमासनिषेधमाशङ्क्य यतो निर्धार्यते यश्च निर्धारणहेतु:, यश्च निर्धार्यमाण: तद्बोधकपदत्रय संनिधान एव यतश्च निर्धारणमिति सूत्रं प्रवर्तते अत: उत्तम: पुरूषस्त्वन्य इत्यादिगीतासहकारेण पुरूषोत्तम इत्यादौन न निर्धारणषष्ठी अपि तु कर्मधारय समस इति कैयट: । तस्य विरोध: स्यात् । शेखरकारमते निर्धार्यमाण एव निर्धारण षष्ठ्यर्थान्वयेन सामर्थ्याभावादेव षष्ठीसमासाप्राप्तेरिति ।

सरूपाणामित्यत्रापि सरूपसमुदायस्य स्वघटकवृत्तित्व-स्वघटक निर्धार्यमाणेतरावृत्तित्वोभयसम्बन्धेन शेषपदार्थे एवान्वय: । एवन्च एकशब्दस्य साकांक्षत्वाभावात् समासोऽपि उपपन्न इति लुप्तविभक्त्यन्तपदकल्पनमपि न कार्यं भवति ।

एवमेव अचोऽन्यादि रीति सूत्रेऽपि अच इति निर्धारणे षष्ठी । जातौ एकवचनम् । तत्र स्वघटकवृत्तित्व स्वघटकनिर्धार्यमाणेतरावृत्तित्व सम्बन्धद्वयेन अच्समुदायस्य अन्त्यत्वेऽन्वय: । तथाहि स्व अच्समुदायस्य: तद्घटको-

ऽन्त्योऽच् तद्वृत्तित्वमन्त्यत्वस्यास्ति । एव स्वघटकनिर्धार्यमाणान्त्याज्
तदितरयावदवृत्तित्वमपि अन्त्यत्वस्यास्तीति अच्समुदायविशिष्टमन्त्यत्वं
भवति तदाश्रयाभिन्नोऽन्त्योऽज् हि संज्ञी भवतीति बोध: ।

तत्र अन्त्यो आदिर्यस्येति बहुव्रीहिस्तु गमकत्वात् अन्त्यत्वस्य
निरूपकांशे नित्यसाकांक्षत्वात् समासो बोध्य: ।

शेखरमते च अच्समुदायस्य स्वघटकत्व स्वघटकनिर्धार्यमाणेतरयावद्-
वृत्तिधर्मान्तवत्त्वोभयसम्बन्धेन अच्येवान्वयात् अन्त्यत्वेऽन्वयाभावात् साकांक्ष-
त्वाभावात् अन्त्यादीत्यत्र समासे सम्भवति गमत्वात् समास: इति स्थोक्ति-
र्विरूध्येत । तस्मात् निर्धारणस्थले निर्धारणविभक्तिप्रकृते: स्वघटकवृत्तित्व-
स्वघटकनिर्धार्यमाणेतरावृत्तितत्वोभयसम्बन्धेन निर्धारणकरणधर्मे एवान्यव
उचितो न तु निर्धार्यमाणे ।

यत्तु न्यासकारेण यतश्च निर्धारणमिति सूत्रे उक्तम् "किमर्थं पुन-
रिदमुच्यते, यावता निर्धार्यमाणोऽवयव: समुदायादन्तर्भूत:। तत्र यदा समु-
दायस्याधिकरणत्वं विवक्ष्यते तदा सप्तमी सिद्धैवेति यथा वृक्षे शाखेति ।
यदा तु अवयवावयविसम्बन्ध: तदा षष्ठी यथा वृक्षस्य शाखेति । सत्यं
प्रपन्चार्थं वचनमिति"[1] । तन्न शोभनम् । तेन प्रकारेण षष्ठी-सप्तम्यो: सिद्धावपि
जात्यादिभि: यत्र पृथक्करणं तत्रास्य सूत्रस्योपयोगात् । अत एव न निर्धारणे
इति षष्ठी समासनिषेध: संगत: । अन्यथा अवयवावयविसम्बन्धे सर्वत्रैव

---

1- काशिका - पृ० 198.

समासो निषिध्यते । द्वितीयव्याख्यायाम् अवयवावयविसम्बन्धो न निर्धारण-विभक्त्यर्थः । वस्तुतस्तु निर्धार्यमाण एवान्वयो युक्तः ।

निर्धारणाख्ये निर्धार्यमाणे एव साकाङ्क्षत्वात् । समुदायस्य समु-दायिनि निरूप्यनिरूपकभावापन्नत्वात् अतः अवयवावयविभावोऽपि निर्धारण-विभक्त्यर्थः । न च नृणां द्विजः श्रेष्ठ इत्यादौ नृत्वावच्छिन्नसमुदायस्य स्व-घटकत्व-स्वघटकनिर्धार्यमाणेतरयावदवृत्तिधर्मवत्त्वोभयसम्बन्धेन द्विजे अन्वये सति श्रेष्ठत्वादेः सम्बन्धकोटिप्रविष्टत्वात् द्विधाभानायत्तिरिति वाच्यम् । सम्बन्धकोटौ सामन्येनैव धर्मस्य प्रवेशात् श्रेष्ठादि पदसन्निधानात्तु श्रेष्ठ-त्वादिविशेषधर्मलाभात् । एवञ्च श्रेष्ठादिपदप्रयोगोऽपि न व्यर्थः विशेषधर्मे तात्पर्यग्राहकत्वात् । अचोऽन्यादि टीत्यादौ अन्त्य एव अच्त्वावच्छिन्न समुदायस्यान्वयः । स चादिना समस्त इति गमकत्वात् समासोक्तिर्युक्तैव । न तु अन्त्यत्वेऽन्वयः । पुरुषोत्तम इत्यादावपि निर्धार्यमाणधर्मनिर्धार्यमाणा-दीनां प्रयोगा भावादेव न निर्धारणविभक्तिरिति कर्मधारयाश्रयणं कैयटोक्तं न विरुद्धम् । अतः शेखरमतमेव युक्तम् ।

इति निर्धारणपदार्थविचारः ।

मिदचोऽन्त्यात् पर इत्यत्र अच इत्यत्र निर्धारण षष्ठी । न च कारके इति सूत्रे निर्धारणसप्तम्यन्तत्वे कारकेष्विति वदेत् इति भाष्योक्तेर्बहु-वचनरूपाया एव निर्धारणविभक्तेः साधुत्वात् अच इत्यत्र एकवचनविभक्तेः कथं तत्त्वमिति वाच्यम् । सौत्रत्वादेकवचनस्य साधुत्वात् । जातावेकवचनमत्र वा बोध्यम् । यदि च जातौ एकवचन स्वीकारे अन्यत्रापि निर्धारणस्थले एकवचन-

त्वापत्तिस्स्यात् तर्हि सौत्रत्वादेवैकवचनमत्रेत्येव समाधानं युक्तम् । अत एव शेखरग्रन्थे एतदेवाश्रितम् । काशिकायां तु जातौ एकवचनमाश्रितम् । तथा च अचां मध्ये योऽन्त्योऽच् ततः परो मिद् भवतीत्यर्थः । यदि चात्र अच इत्यत्र अन्त्यादिति पञ्चम्यन्तपदानुरोधात् पञ्चमी आश्रीयते तदा अच इत्यस्य अन्त्यादित्यनेन सामानाधिकरण्यात् अन्त्यत्वविशिष्टादचः परो मित् भवतीत्यर्थः स्यात् । तत्र ज्ञानानीत्यादौ अन्त्यस्याचः सम्भवात् इष्टस्थाने नुम् स्यात् हलन्तेषु पयांसि यशांसीत्यादिषु तु अन्त्यस्याचोऽसम्भवात् नपुंसकस्य झलच इति विहितोनुम् अलोऽन्त्यस्येति सूत्रात् अन्त्यस्य सकारस्य स्थाने स्यात् । तस्मात् निर्धारण षष्ठी युक्तैव ।

न च निर्धारण षष्ठीपक्षेऽपि अन्त्यस्याविशेषितत्वात् यतः कुतश्चित् अन्त्यात् परो मित् स्यादित्यर्थ आपद्येतैवेति वाच्यम् । समानजातीय स्यैव निर्धारणात् । यथा हि लोके गवां गोषु वा कृष्णा बहुक्षीरो यत्र बहुक्षीरतया निर्धार्यमाणा गौरेवे प्रतीयते नाश्वा नाजेति । तस्मात् अच एवान्त्यात् मित् भविष्यति नान्यस्येति । सजातीयत्वञ्च अचत्वेन गृह्यते । इदं सूत्रं स्थाने योगप्रत्ययपरत्वस्यापवादः । मुञ्चतीत्यादौ स्थाने योगत्वापवादः । रुणद्धि इत्यादौ प्रत्ययपरत्वस्यापवादः ।

न च पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान् इति परिभाषया षष्ठीस्थानेयोगा इत्यस्यैवापवादोऽयं योगो न प्रत्ययपरत्वस्येति वाच्यम् । श्नमो मित्करण सामर्थ्यात् । न च श्रवणार्थमेव मकारः इति वाच्यम् तृणाह इम् इत्यादौ मकारस्याश्रूयमाणत्वात् । अन्यथा तृणम् ह इम् २

इति वदेत् । तस्मात् परश्चेत्यस्याप्यपवादोऽयं योगः । न च श्नमोऽपर-त्वात् तन्मध्यपतितन्यायेन वा तद्ग्रहणेन ग्रहणात् प्रत्ययसंज्ञा न स्यादिति वाच्यं प्रत्ययाधिकारे विहितत्वात् प्रत्ययसंज्ञा सिद्धेः । सत्यपि अपरत्वे प्रकृत्यन्तः पातित्वे वा सत्यपि यथा बहुजकचोरन्तोदात्तत्वम् । बहुपटवः उच्चकैरित्यादौ तथैव अत्रापि प्रत्ययसंज्ञात्वं भविष्यत्येव ।

एवं मिदचोऽन्त्यात् पर इत्यस्यार्थे सम्पन्ने मग्नः मग्नवान्, मङ्क्ता मङ्क्तुमित्यादौ मस्जिनशोर्झलि इति नुम् विहितः अचामन्त्या-दचः परः स्यात् । तथा च मन् स्ज् त मन्स्ज् तवत् इति जाहे स्कोः संयो-गाद्योरन्ते चेति स्कारलोपो न स्यात् । अनिदितामिति न लोपो न स्यात् संयोगादित्वाभावात् अनुपधात्वाच्च यथाक्रमम् । बहूनां समुदाये समुदायस्यैका संयोगसंज्ञा भवति । यदि च बहूनां समुदाये द्वयो द्वयोः संयोगसंज्ञा इति पक्ष आश्रीयते तदापि मन्स्ज् त इत्यादौ स्कारजकारयोः संयोगसंज्ञाया आदि-त्वात् सलोपे जातेऽपि अनिदितामिति न लोपो न स्यात् सलोपस्यासिद्ध-त्वात् अनुपधात्वात् ।

अत्र ओदितश्चेति निष्ठा नत्वं तस्यासिद्धत्वात् चोः कुरिति कुत्वेन जकारस्य गकारः । एवं मस्ज् धातोः तृचि तुमुनि च मङ्क्ता मङ्क्तुमिति रूपम् । अत्रापि मस्जिनशोर्झलीति नुम् अचामन्त्यादचः परो यदि स्यात् तदा मन् स्ज्तृ, मन्स्ज्तुम् इत्यवस्थायाम् समुदायस्य संयोगसंज्ञापक्षे स्कारस्य लोपो न स्यात् । द्वयोर्द्वयोः संयोग इति पक्षे च यद्यपि स्कारलोपः । चोः कुरिति कुत्वेन गकारे चर्त्वेन ककारे कृते नस्य । नुस्वारे परसवर्णे च रूपं सिध्यति ।

तथापि मग्न-मग्नवान् इत्यादौ अनुषङ्गलोपो न स्यात् स्लोपस्यासिद्धत्वात् । अनुषङ्ग इति नकारस्योपधायाः पूर्वाचार्यैः संज्ञा कृता । अतः उक्तप्रयोगोपपत्तये वार्त्तिकमिदमवश्यं कार्यम् - मस्जेरन्त्यात् पूर्वं मिदवक्तव्योऽनुषङ्गसंयोगादिलोपार्थमिति ।

मस्जधातोर्नुम् अन्त्यात् वर्णात् पूर्वं वक्तव्यो विशेषतः । ततश्च मस्नज त इत्यावस्थायां समुदायसंज्ञापक्षेऽपि सलोपे अनिदितामिति न लोपे मग्न इत्यादिरूपं सिध्यति ।

ननु अस्ति अकृतव्यूह परिभाषा । निमित्तं विनाशोन्मुखं दृष्ट्वा तत् प्रयुक्तं कार्यं न कुर्वतीत्यर्थिका । यथा निषेदुषीमित्यत्र निपूर्वात् सद्धातोः क्वसु प्रत्यये कृते अन्तरङ्गत्वात् वलादिलक्षण इट् प्राप्तः । तत्र वसोः सम्प्रसारणमित्यनेनभाविना वकारस्य सम्प्रसारणे उकारे कृते वलादित्वं नश्यतीति कृत्वा पूर्वमेव इट् न प्रवर्तते । इयं च परिभाष असिद्धमन्तरङ्गे इत्यस्यापवादभूता । अस्या अर्थः - विशिष्ट ऊहो येषु तानि व्यूहानि शास्त्राणि, अहस्तर्कः स चान्तरङ्गेण बहिरङ्गनिमित्तविनाशरूपः तद्वन्ति शास्त्राणि अकृतानि यैस्तेऽकृतव्यूहा आचार्याः ।

अस्याश्च ज्ञापकं समर्थानां प्रथमाद्वेति सूत्रे समर्थग्रहणम् । तद्धि कृत पूर्वसवर्णदीर्घात् सूत्थितशब्दात् इन् यथा स्यात् इत्येवमर्थं क्रियते । तत् परिभाषाया अभावेऽन्तरङ्गे सवर्णदीर्घे कृते एव भविष्यतीति समर्थग्रहणं व्यर्थं सत् अस्या ज्ञापकम् । अस्याः परिभाषायाः सत्त्वेतु भाविन्या आदिवृद्ध्या दीर्घनिमित्तस्य सवर्णत्वस्य विनाशः सम्भावित इत्यकृतदीर्घात् सु उत्थितशब्दात्

इञ् प्रत्ययः स्यात् । तथा च सावुत्थितिरिति रूपं स्यात् तन्निवृत्त्यर्थं समर्थ-ग्रहणं चरितार्थमिति ।

एवञ्च अकृतव्यूहपरिभाषा अत्रापि सञ्चारणीया । तथाहि मस्जू धातोः निष्ठाप्रत्यये कृते मस्जिनशोर्झलीति नुमुप्रसक्तः ओदितश्चेति निष्ठानत्वं प्रसक्तञ्च ।

तत्र नुम्शास्त्रनिमित्तभूतझलत्वस्य निष्ठानत्वे कृते विघातो भविष्यतीति कृत्वा पूर्वं नुमेव न भविष्यति । तथा च मस्जत् इति इत्यवस्थायाम् द्वयोःसंयोगसंज्ञायां सकारस्य लोपे सति कुत्वे नत्वे मग्नः मग्नवान् इति रूपं सिध्यति । तदर्थं वार्त्तिकमिदं व्यर्थम् । मङ्क्ता मङ्क्तुमित्यादौ तु अन्त्यादच परेऽपि नुमिकृते द्वयोः संयोगसंज्ञामादाय सलोपः सिध्यति । न च बहूनां संयोगसंज्ञापक्षे न सिध्येदिति वाच्यं पक्षान्तरैरपि परिहारसम्भवात् पक्षान्तरैरपि परिहारा भवन्तीति शल्लूः इति सूत्रे भाष्यकारैरेव स्वीकारात्। इति चेत् अत्रोच्यते । अकृतव्यूहपरिभाषाया नायं विषयः मग्न इत्यादौ मस्जिनशोर्झलीति नुम् दृष्ट्या ओदितश्चेति निष्ठानत्वस्यासिद्धत्वात् निमित्तविनाशाभावात् पूर्वं नुम् प्रवृत्तौ बाधकाभावात् किञ्च अकृतव्यूहपरिभाषा नव्यमते नास्त्येव । अत एव भाष्ये क्वापि न पठिता । निषेदुषीमित्यत्र पदावधिकान्वाख्याने नि सेद् वस् इ अम् इति स्थिते वस इट् सम्प्रसारणयोः प्राप्तौ प्रतिपदविधित्वात् सम्प्रसारणे कृते वलादित्व भावात् इटः प्राप्तिरेव नेति तदर्थमेषा परिभाषा न कार्या । लक्ष्यानुरोधात् तत्र पदावधिकमेवान्वाख्यानमाश्रयितव्यम् । एवञ्च निष्फलत्वात् एषा नास्त्येव । अत एव "चौ

प्रतिषेधवचनं वार्त्तिककृतारब्धं भाष्यकृता च न प्रत्याख्यातम् । तच्च वार्त्तिकं "चौ प्रत्यङ्गस्य प्रतिषेधः" । प्रत्यङ्गमन्तरङ्गम् । अस्याः सत्त्वे तु प्रतीच- इत्यादिरूपाणामनयैव सिद्धेस्तद्वार्त्तिकवैयर्थ्यं स्पष्टमेव ।

अत एव च्छ्वोरिति सूत्रे "अवश्यमत्र तुगभावार्थो यत्नः कर्त्तव्यो- ऽन्तरङ्गत्वाद् धितुक् प्राप्नोति" इति भाष्ये उक्तम् । एतस्याः परिभाषायाः सत्त्वे तु विश्नः प्रश्न इत्यादौ तुगभावस्य परिभाषयैव सिद्धेरावश्यकत्व कथन- वैयर्थ्यं स्पष्टमेव ।

अत एव शब्दरत्नशेखरादिग्रन्थेऽस्याः परिभाषायाः प्रत्याख्यानं कृतम् ।

किन्च मग्न-मग्नवानित्यादौ मस्जेरन्त्यात् पूर्वेति वार्त्तिकं भाष्यकृतापि सम्मतमेव तत्प्रत्याख्यानाभावात् । तथा चेदं वार्त्तिकं विना मग्न इत्यादि प्रयोगाणामसिद्धेस्तस्यावश्यकतेति ।

तत्र मग्न इत्यादौ नुम् निष्ठानत्वयोः प्राप्तयोर्नित्यत्वात् निष्ठानत्वं पूर्वं प्रवर्तते । अन्तरङ्गत्वादपि पूर्वं नत्वमेव प्रसक्तम् । तथापि तस्यासिद्धत्वात् नुम् दुर्वार एवेति बोध्यम् ।

## 10- सित्तद्विशेषाणां वृक्षाद्यर्थम्

स्वं रूपं शब्दस्याशब्दसंज्ञा (1/1/68) इति सूत्रे इदं वार्त्तिकं पठितम् । शब्दोच्चारणे सति स्वरूपस्य पर्यायाणान्च ग्रहणं प्राप्नोतीति

नियमार्था परिभाषेयम् ।

अन्ये तु लिङ्गाभावात् विध्यन्तरशेषभावाभावाच्च नेयं परिभाषा अपि तु संज्ञासूत्रमिदम् ।

तत्र देवदत्तादयश्च संज्ञाशब्दा नियमार्था इति सिद्धान्त सर्वार्थ-प्रत्यायनशक्तियुक्तो हि शब्दः । सर्वशक्तिप्रत्याय्य-शक्तियुक्तश्चार्थ इति व्यवहाराय नियमः क्रियते ।

रूपशब्देन चेहाग्निशब्दत्वादिकं शुकसारिकापुरुषोदीरित भिन्न-शब्दसमवेतं सामान्यमभिधीयते । तत्र व्यक्तेः सामान्यं संज्ञा, सामान्यस्य वा व्यक्तिरिति व्याख्याने कामचारः । व्यक्तिः कार्यं प्रतिपद्यमाना सा-मान्य प्रतिबद्धैव प्रतिपद्यते । सामान्यमपि कार्यं प्रतिपद्यमानं व्यक्तिद्वारेरैव प्रतिपद्यते इति न कश्चिद् भेदः ।

तत्रायमर्थः सम्पन्नः । शास्त्रे स्वमेव रूपं शब्दस्य ग्राह्यं बोध्यं भवति । न बाह्योऽर्थः । शब्दशास्त्रीय संज्ञां वर्जयित्वा ।

ननु किमर्थमिदमुच्यते इति चेत् उच्यते शब्देनोच्चारितेनार्थः कार्योपयोगितया गम्यते न शब्दस्वरूपम् । तथाहि गौ रूपलभ्यतामित्युक्ते अर्थमेवोपलब्धुमाद्रियते न शब्दस्वरूपम् । व्याकरणे तु प्रत्ययविधानादिकार्य-मर्थस्य न सम्भवति तेन सह शब्दस्य पौर्वापर्यभावात् । न चार्थात् विहितेन प्रत्ययेन कश्चित् प्रकृतोपयोगः । तेन अग्नेर्ढक् इत्युक्ते नायं सम्प्रत्ययो भवति अग्निशब्दस्य यो अर्थः, सह इह कार्यी, तस्येदं कार्यं विधीयते इति ततश्च

तस्यार्थस्य ये वाचका: शब्दास्तेषु तत् कार्यसम्भवात् तत् साहचर्याच्च तेषामेव संप्रत्यय: स्यात् । एतेऽत्र कार्यिण:, एतेषामिदं कार्यं विधेयम् । यथा आकृतिवादिना गौर्दुह्यताम् इति शब्देन जातौ चोदितायां तत्र तत् कार्यासम्भवात् तदाधारायां व्यक्तौ सम्भवात् तत् साहचर्याच्च तस्यामेव व्यक्तौ सम्प्रत्ययो भवति न जातौ तथेहापि तन्मा भूत् तद्वाचिनां संप्रत्यय: उपात्तादेव यथा स्यात् इत्येवमर्थमिदमुच्यते । तथा च अग्नेर्ढक् इति सूत्रमग्निशब्दादेव प्रवर्त्तते न ज्वलनपावकादे: । शब्दशास्त्रीयसंज्ञासु टिघुघादिषु न स्वरूपग्रहणं तत्र संज्ञिन एव ग्रहणम् । संज्ञा हि संज्ञिन: प्रत्यायनार्था क्रियते ।

रूपग्रहणञ्च किमर्थम् यत: प्रतीतावुपदेशानपेक्षत्वात् अन्तरङ्गत्वात् असाधारणत्वाच्च रूपमेव ग्रहीष्यते । अर्थो हि सम्बन्धग्रहमपेक्षते । अनुकरणशब्देषु नार्थ: प्रतीयते । साधारणश्च पर्यायैरपि प्रत्यायनात् । न चार्थ: संज्ञा शक्यते वक्तुं संज्ञित्वे चार्थस्य सूत्रमनर्थकं स्यादिति रूपग्रहणं व्यर्थमिति चेन्न रूपग्रहणेनार्थवद्ग्रहणे नानर्थकस्य ग्रहणमिति परिभाषाज्ञापनार्थत्वात् तथा चार्थवतो रूपस्य ग्रहणात् काशे कुशे इत्यादौ शे इति प्रगृह्यसंज्ञाऽभाव: सिद्ध: । एवञ्च स्वरूपमिति सूत्रमवस्थितम् ।

एवञ्च स्वमिति सूत्र सद्भावे स्वरूपस्यैव ग्रहणं प्रसक्तमिति यत्र विशेषाणां पर्यायाणां वा ग्रहणं तदर्थं यत्न: कर्त्तव्यो भवतीति । न्यूनतापरिहाराय इमानि वार्त्तिकानि प्रवृन्दि प्रवृत्तानि ।

11- सित्तद्विशेषाणां वृक्षाद्यर्थम्
12- पित्पर्यायवचनस्य च स्वाद्यर्थम्
13- जित्पर्यायवचनस्यैव राजाद्यर्थम्
14- झित्तद्विशेषाणाञ्च मत्स्याद्यर्थमिति

तत्र क्रमेण तेषां समीक्षा क्रियते । तथाहि सित् तद्विशेषाणां वृक्षाद्यर्थम् इति । सिन्निर्देशः कर्त्तव्यः । ततो वक्तव्यं तद्विशेषाणां ग्रहणं भवतीति । अयं भावः यत्र विशेषाणां ग्रहणमिष्यते तत्र सकार इत्संज्ञकः कर्त्तव्यः । यथा विभाषा वृक्षमृगेत्यादौ वृक्षस् मृगस् इति । ततो वक्तव्यं स्वरूपसूत्रादनन्तरं सित्तद्विशेषाणामिति । यस्य सकार इत्संज्ञकः स तद्विशेषाणां वृक्षादिविशेषाणां प्लक्षखदिरादीनां प्रतिपादक इत्यर्थः । तथा च विभाषावृक्षमृगेत्यादिना द्वन्द्वैकवद्भावो वृक्षविशेषाणामपि विकल्पेन सिध्यति । प्लक्षन्यग्रोधम्, प्लक्षन्यग्रोधा इति ।

प्रदीपकारैर्महामहोपाध्यायकैयटैरन्यैश्च हरदत्तादिभिरस्य वार्तिकस्यानावश्यकतां प्रतिपादयन्ति । तथाहि स्वरूपमित्यत्र कैयटः "एतदपि न्यायसिद्धम् । तुल्यजातीयानां द्वन्द्व एकवद् भवतीति कथ्यते । पर्यायाणां च युगपत् प्रयोगाभावात् सामान्यविशेषाणाञ्चार्थाभावात् सामान्यशब्देन सर्वविशेषाणामाक्षेपतात् धववृक्षमिति द्वन्द्वाभावात् विशेषाणामेव प्लक्षन्यग्रोधादीनां ग्रहणं सिद्धम्"।

विभाषावृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम्

---

1- महाभा० - पृ० 369.

§2.4/12§ इत्यत्र काशिकाव्याख्यानभूतेन न्यासे उक्तम् "वृक्षादिग्रहणेनेह वृक्षादिविशेषवाचिनां ग्रहणम् । कथम् । यस्मादत्र हि वृक्षादिभिर्द्वन्द्वः प्रत्येकं विशिष्यते तेनैषा विभाषा तुल्यजातीयेष्वेवावतिष्ठते । विरूपेषु तुल्यजातीयेष्वपि, न स्वरूपेषु । तेषां द्वन्द्वो नास्ति एकशेषविधानात् । विरूपेष्वपि न पर्यायेषु तेषां द्वन्द्वाभावात् । द्वन्द्वाभावश्च युगपत् प्रयोगाभावात् युक्तार्थाभावाच्च । चार्थाभावस्त्वर्थ भेदाभावात् । भिन्नाधिष्ठानता हि चार्थता । न च पर्यायाणां भिन्नार्थता सम्भवति । तस्मात् विरूपेष्वेव वृक्षादिविशेषवाचिषु अस्या विभाषाया उपस्थानम् । तेन विशेषग्रहणं वृक्षादिषु विज्ञायते न स्वरूपग्रहणम् । नापि पर्यायग्रहणम् । अथ सामान्यविशेषवाचिनां ग्रहणं कस्मान्न विज्ञायते । संभवति हि सामान्यविशेषवाचिनां द्वन्द्वः । यथा गोबलीवर्दमिति । न अनभिधानात् न हि वृक्षधवमित्येवं लोकेऽभिधानमस्ति । धवशब्दादेव तदर्थाभिधायिनो वृक्षशब्दस्यार्थावगतत्वात् धवादिशब्दप्रयोगे वृक्षादिशब्दस्य प्रयोगानर्हत्वात् । गोबलीवर्दमित्यत्र तु बलीवर्दसन्निधाने गो शब्दस्य स्त्रीगवीष्वेव वृत्तेर्द्वावपि विशेषवाचिनाविति द्वन्द्वः । येऽत्रा प्राणिवाचिनस्तेषां जातिरप्राणिनामित्येकवद् भावे नित्ये प्राप्ते वचनमिदं विभाषार्थम् । परिशिष्टनामप्राप्ते । पशुग्रहणेनैव मृगादिग्रहणे सिद्धे पुनर्मृगादिग्रहणं नियमार्थम् । तुल्यजातीयानां द्वन्द्वोऽयमेकवद् भवतीत्युक्तम् । अत्र पशुग्रहणेनैव सिद्धे मृगादिग्रहणे सत्यपि पशवन्तरेण एषां परस्परेण वा द्वन्द्वो मा-माभूदित्येवमर्थम्[1]" ।

---

1- का० न्या० - पृ० 255

अयमेवार्थस्तत्र पदमन्जर्यामुक्तं हरदत्तेनापि । एवन्च न्याय-सिद्धत्वात् उक्तं वार्त्तिकं न कर्त्तव्यम् । तथापि स्पष्टार्थप्रतिपत्त्यर्थं कृतम् ।

तथा "पित्पर्यायवचनस्य च स्वाद्यर्थम्" इदमपि वार्त्तिकं तत्रैव स्वरूपसूत्रे पठितम् । अस्यायमर्थः । यत्र च पर्यायाणां स्वरूपस्य विशेषाणान्च ग्रहणमिष्टं तत्र पिन्निर्देशः कर्त्तव्यः ततो वक्तव्यम् - पर्यायवचनस्य ग्रहणं भवति च कारात् स्वस्य रूपस्य तद्विशेषाणान्चेति । यथा स्वे पुषः ‖3/4/40‖ इत्यादौ । स्वशब्दः पित् कर्त्तव्यः स्वोपपदपुषधातोर्णमुल् भवति । तत्रेदमपि सिद्धं भवति स्वपोषं पुष्णाति धनपोषं रैपोषम् अश्वपोषम्, गोपोषम् इत्यादि।

इदं वार्त्तिकं वाचनिकम् । स्वे पुष इत्यादौ स्वार्थविवक्षायां पिन्निर्देशस्यावश्यकता नास्ति । स्पष्टार्थं तु वार्त्तिकमाश्रितम् ।

जित्पर्यायवचनस्यैव राजाद्यर्थम्

इदमपि वार्त्तिकं तत्रैव पठितम् । अस्यायमर्थः । यत्र च पर्याय-वचनग्रहणमेवेष्टं तत्र जकार इत्संज्ञकः कर्त्तव्यस्ततो वक्तव्यम् पर्यायवचनस्यैव ग्रहणं भवतीति न स्वरूपस्य नापि तद्विशेषाणाम् । यथा - सभा राजाऽ-मनुष्यपूर्वा ‖2/4/23‖ इति सूत्रेण सभान्तस्तत् पुरुषो नपुंसकलिङ्गो भवति सा चेत् सभा राजपूर्वा अमनुष्यपूर्वा च भवति । इदसभम् । ईश्वरसभम् इत्यादि सिद्धम् । अस्यापि वार्त्तिकस्यानावश्यकतां न्यायसिद्धतान्च प्रदीपे पदमन्जर्यां न्यासे च प्रतिपादितम् तथाहि । सभा राजेत्यत्र अराजेति पर्युदास आश्रीयते ।

पर्युदासस्य च तद्भिन्न तत्सदृश ग्राहित्वात् राजशब्दसदृशानां तत् पर्यायाणामेव ग्रहणं सिद्ध्यतीति स्वरूपसूत्रे प्रदीपे उक्तम् ।

समाराजेति सूत्रे काशिकायां पदमञ्जर्यां हरदत्तमिश्रेणापि कथितम् "इह कस्मान्नभवति राजसभा इति ? पर्यायवचनस्यैवेष्यते । कथं पुनरेतल्लभ्यते ? द्वावत्र ननौ अराजपूर्वा अमनुष्यपूर्वा चेति । तत्र नञिवयुक्तन्यायेन राजशब्द सदृशाः पर्याया एव गृह्यन्ते । अमनुष्यशब्दो रूढिरूपेणेति । कथं तर्हि अमनुष्य-कर्तृके चेत्यत्र पित्तघ्नं धृत मित्युदाहरिष्यते व्याख्यानात्तत्र मनुष्यादन्यमात्रस्य ग्रहणं न रूढिरित्यर्थः"।

तत्रैव न्यासकारैर्जिनेन्द्रबुद्धिभिरुक्तम् "कथं पुनः पर्यायवचनस्यैव भवतीत्येषोऽर्थः । यावता नेहसूत्रे तथाविधं वचनमस्ति । एवं मन्यते - ननु च पूर्वग्रहणमस्ति । अतः पूर्वग्रहणादेषोऽर्थो लभ्यते, कथम् ? यदि स्वरूपग्रहणं स्यात् राजाऽमनुष्यादित्येवं ब्रूयात् पञ्चम्यैव दिक् शब्दमध्याहारयिष्यति । न च सभान्तस्य तत्पुरुषस्य पूर्वग्रहणेन ? तत् क्रियतेऽर्थग्रहणं यथा स्यात् । अर्थ-ग्रहणे च सति अराजा अमनुष्यपूर्वा इति द्विःप्रतिषेधो कर्यते अराजपूर्वा अमनुष्य-पूर्वेति । तदनेन नञिवयुक्तन्यायेन तत् सदृशा राजपर्याया गृह्यन्ते न तु तद्-विशेषाश्चन्द्रगुप्तादयः । न हि ते राजार्थस्य वाचकाः । अथ वा अर्थग्रहणे अस्मिन् विभाषा समीपे (2/4/16) इत्यतो विभाषाग्रहणमनुवर्तते मण्डूक-प्लुतिन्यायेन सा च व्यवस्थितविभाषा विज्ञायते । तेनेह पर्यायवचनस्यैव

---

1- का० - पृ० 267.

ईश्वरादेर्ग्रहणं भविष्यति नान्यस्येति"[1] । एवन्चात्र पर्यायस्यैव ग्रहणात् राजसभा, पुष्यमित्र-सभा, चन्द्रगुप्तसभा इत्यादौ न नपुंसकलिङ्गता ।

झित् तद्विशेषाणान्च मत्स्याद्यर्थम्

इदमपि वार्त्तिकं तत्रैव पठितम् । अस्यायमर्थः । यत्र च स्वरूपस्य तद्विशेषाणान्च ग्रहणमिष्टं तत्र झकार इत्संज्ञको वक्तव्यः । ततश्च वक्तव्यं तस्य तद्विशेषाणान्च ग्रहणं भवतीति । यथा पक्षिमत्स्यमृगान् इति {4/4/35} इति सूत्रम् । तत्र स्वरूपस्य विशेषाणान्च ग्रहणमिष्टं तत्र झिन्निर्देशः कर्त्तव्यः तथा च पक्षिणो हन्तीति पाक्षिकः । शकुनिं हन्तीति शाकुनिकः, मायूरिकः मात्स्यिकः, मैनिकः, इत्यादिसिद्धिम् । तत्र मत्स्यपर्यायस्य मीनस्यैव ग्रहणमिति भाष्येष्टिः । पर्यायाणां ग्रहणं न भवति अजिह्वान् हन्ति । अनिमिषान् हन्ति इति । मत्स्यशब्दपर्यायस्य मीनस्यैव ग्रहणम् ।

अत्रापि विभाषा विवधवीवधात् {4/4/16} इति सूत्रात् विभाषापदं मण्डूकप्लुत्यानुवर्त्य व्यवस्थित विभाषामाश्रित्य, स्वरूपस्य विशेषाणान्च ग्रहणं सिद्धं भवति । एवं स्थितेऽपि स्पष्ट प्रतिपत्तये इमानि वार्त्तिकानि सूत्र सद्भावपक्षे स्वीकर्त्तव्यान्येव । सूत्रप्रत्याख्यान पक्षे तु लक्ष्यानुसारात् व्यवस्था भविष्यति वार्त्तिकानि न कर्त्तव्यानि । तथाहि शब्देन हि शब्दपूर्वक एवार्थस्य प्रत्ययो भवति । क्वचिच्च शब्दो विशेष्यतया प्रतीयते यथाविष्णुमुच्चारये-

---

1- का0 - पृ0 268·

त्यादौ तत्रार्थस्याबाधात् प्रकारतया भानम् । क्वचिच्चार्थस्यैव विशेष्यतया भानं यथा घटमानयेत्यादौ तत्र शब्दस्य प्रकारतया भानमबाधितम् । एवञ्च अग्नेर्ढक् इत्यादौ अग्निशब्दोच्चारणे शब्दार्थयोरुभयोरपि भानेऽर्थे ढक्प्रत्ययस्य पौर्वापर्याभावात् शब्दे च सम्भवात् शब्दादेव ढक्-प्रत्ययः अर्थस्तु प्रकारीभूय-भासते । एवञ्च स्वरूपं ग्रहणं सिद्धम् । अर्थस्य च प्रकारतया भानस्वीकारे अर्थ-वद्ग्रहणेनानर्थकस्य ग्रहणमिति परिभाषाऽपि सिद्धा । तेन काशे कुशे इत्यादौ न शे इति निपातसंज्ञा । न च शब्दशास्त्रीयसंज्ञायामपि स्वरूपग्रहणापत्तिः । तथा च उपसर्गे घोरित्यादौ घुशब्दस्यार्थ किप्रत्ययः स्यात् इति वाच्यम् षान्तसंख्यावाचक षष्शब्दस्य षट्संज्ञाकरणेन शब्दशास्त्रीयसंज्ञायां न स्वरूपग्रहण-मिति ज्ञापनात् अन्यथा षष्शब्दस्य षट्संज्ञाकरणमनर्थं स्यात् । एवञ्च स्वरूप-मिति सूत्रं व्यर्थम् ।

एतत्पक्षे उक्तवार्त्तिकलक्ष्याणां यथायथं व्यवस्था भविष्यति । उक्तञ्च लघुशब्देन्दुशेखरे नागेशभट्टेन "भाष्ये तु अर्थे कार्यस्य बाधेऽपि उपस्थित-त्वात् राज्ञ इत्यादौ तज्जन्यबोधे प्रकारतया भासमानस्य राजन् शब्दस्यैव ग्रहणं भविष्यति व्यर्थमिदं सूत्रम् उपस्थितार्थत्यागे मानाभावेन तस्य विशेषण-तयान्वयसम्भावेन चार्थवत् परिभाषापि सिद्धा । लक्ष्यानुसारात् तत्तत् संज्ञा-करणज्ञानरूपप्रकरणाच्च षान्तसंख्यावाचक षष्शब्दस्य षट्संज्ञाकरणेन शब्दशास्त्रीय-संज्ञायां स्वरूपाग्रहणज्ञापनाच्च उपसर्गे घोरित्यादौ दोषाभावेन अशब्दसंज्ञेत्यपि व्यर्थम् इत्युक्तम् । अत एव जनपदापत्यपशुदेवतादिशब्देषु न दोषः अत एव वृक्षादिषु विशेषाणां ग्रहणं स्वे पुष इत्यत्र पर्यायाणां विशेषाणां स्वरूपस्य च ग्रहणम्, सभाराजेत्यत्र पर्यायाणामेव ग्रहणम्, मत्स्यपदेन स्वरूपस्य विशेषाणां ग्रहणम्,

मीनरूपपर्यायस्य च ग्रहणं सिद्ध्यति । अन्यथा तदर्थं यत्नः कर्त्तव्यः । परेश्च घाङ्‌कयोरित्यत्र शब्देन स्वरूपग्रहणं नदीपौर्णमासीत्यत्र नदीपदेन स्वरूपस्य ग्रहणं सिद्ध्यति । लक्ष्यानुसारिव्याख्यानेन च मम सर्वेष्टसिद्धिः । ज्ञापकपक्षेऽपि च ज्ञापकसिद्धस्यासार्वत्रिकत्वात् न दोषः । अत एव भगवता ज्ञापकेन सिद्धं वचनं प्रत्याख्यातमिति दिक्[1] ।

एवञ्च सूत्रप्रत्याख्यानपक्षे वार्त्तिकानामेषामावश्यकता नास्ति । सूत्रपक्षेऽपि यद्यपि सिद्धिः पूर्वोक्त क्रमेणास्ति तथापि स्पष्टार्थं वार्त्तिकानि स्थितानीति दिक् ।।

## 15- समासप्रत्ययविधौ तदन्तविधेः प्रतिषेधो वक्तव्यः

येन विधिस्तदन्तस्य (1/1/72) इति सूत्रे वार्त्तिकमिदं पठितम् । येन विशेषणेन विधिर्विधीयते स तदन्तस्यात्मान्तस्य समुदायस्य ग्राहको भवति स्वस्य च रूपस्येति सूत्रार्थः । स्वं रूपमित्यस्यापवादः । येनेति करणे तृतीया। विधीयते इति विधिः कर्मसाधनः कि प्रत्ययः । तदन्तस्येति बहुव्रीहिः । तत् शब्देन येनेति निर्दिष्टः करणभूतः शब्दो निर्दिश्यते । एवञ्च विशेषणं तदन्तस्य संज्ञा स्यात् स्वस्य च रूपस्येत्यर्थः । यथा एरच् इति सूत्रेण इवर्णान्तात् अच्-प्रत्ययो भवति चयः जयः अय इति । ओरावश्यके म इति सूत्रेण उवर्णान्तात्

---

1- शेखर० - पृ० 154.

ण्यद्भवति अवश्यलाव्यम् अवश्यपाव्यमिति । अवश्यलव्यमित्यादौ मयूरव्यंसकादित्वात् समासः । लुम्पेदवश्यमः कृत्ये इति मलोपः ।

एवं तदन्तविधौ स्थिते समासविधौ द्वितीयाश्रितातीतेत्यादौ प्रत्ययविधौ नडादिभ्यः फक् इत्यादौ च तदन्तविधित्वे यथा कष्टं श्रितः कष्टश्रित इत्यत्र समासो भवति । तथैव परमकष्टं श्रित इत्यत्रापि समासः प्रसज्येत् ।

नडादिभ्यः फगपि नडस्यापत्यं नाडायन इत्यत्र यथा भवति तथा नडान्तस्यापि सूत्रनडस्यापत्यमिति विग्रहे सौत्रनाडिरित्यत्रापि फक् प्रसज्येत् । तादृशप्रसक्तिनिरासायेदं वार्त्तिकं प्रवृत्तं समासप्रत्ययविधौ तदन्तविधेः प्रतिषेधो वक्तव्य इति ।

इदमिह विचार्यं वार्त्तिकमिदं कर्त्तव्यमेव आहोस्वित् वार्त्तिकार्थस्य अन्यविधया सिद्धत्वात् अस्य तात्पर्यग्राहकत्वमेवेति । तत्र महाभाष्ये तत् वार्त्तिकात्पूर्वं विशेष्यविशेषणभावस्य यथेष्टत्वं निर्धारितम् । तथाहि - येन विधिस्तदन्तस्येति चेत् ग्रहणोपाधीनां तदन्तोपाधिप्रसङ्गः । ये ग्रहणोपाधयस्तेऽपि तदन्तोपाधयः स्युः । तत्र उतश्च प्रत्ययादसंयोगपूर्वात् इति असंयोगपूर्वग्रहणमकारान्तविशेषणं स्यात् । तथा चासंयोगपूर्वग्रहणेन इहैव पर्युदासः स्यात् अक्ष्णुहि तक्ष्णुहि । इह न स्यात् अश्नुहि शक्नुहीति ।

तथा उदोष्ठ्यपूर्वस्येति ओष्ठपूर्वग्रहणम् ॠकारान्तविशेषणं स्यात् । तथा च ओष्ठ्यपूर्वग्रहणेनेह स्यात् संकीर्णम् । इह च न स्यात् निर्पूताः पिण्डा इति ।

तत्रोक्त दोषनिवृत्त्यर्थं समाधानवार्त्तिकं पठितम् । सिद्धं तु विशेषणविशेष्ययोर्यथेष्टत्वात् । अस्यार्थः । यथेष्टं विशेषणविशेष्ययोर्योगो भवति । यावता यथेष्टम् । इह उतश्च प्रत्ययादित्यादौ नासंयोगपूर्वग्रहणेन उकारान्तं विशेष्यते अपि तु उकार एव विशेष्यते उकारो योऽसंयोगपूर्व इति तदन्तात् प्रत्ययादिति । एवम् उदोष्ठ्यपूर्वस्येत्यत्रापि नौष्ठ्यपूर्वग्रहणेन ऋकारान्तं विशेष्यते अपितु ऋकार एव विशेष्यते ऋकारो य ओष्ठ्यपूर्व इति । तथा च नोक्तदोषावकाशः । एवञ्च विशेषणविशेष्यभावस्य यथेष्टत्वं सिद्धं भवति ।

एवं स्थिते समासप्रत्ययविधौ तदन्तविधेः प्रतिषेधो वक्तव्य इति वार्त्तिके वक्तव्य इत्यस्य व्याख्येय इत्यर्थः व्याख्यानञ्चेदम् । तथाहि द्वितीया श्रितातीतेत्यादौ सुपा श्रितादयो विशिष्यन्ते न श्रितादिभिः सुप् । विशेषणेन च तदन्तविधिः न विशेष्येण । यस्मात् येनेति करणे तृतीया । करणञ्च पराश्रितं परार्थं भवति न विशेष्यम् । तस्मात् विशिष्टैश्रितादिभिस्तदन्तविधिर्न भवति ।

उक्तञ्च तत्रैव कैयटे "श्रितादिभिः सुबन्तस्य विशेषणे सति प्राप्तस्तदन्तविधिः प्रतिषिध्यते । प्रतिषेध द्वारेण चैतत् प्रदर्श्यते श्रितादयः प्राधान्येन आश्रयितव्यास्तद्विशेषणत्वेन च सुपा इति । अयमेवाशयः पदमञ्जर्यां न्यासे च काशिकाव्याख्याने आश्रितः । अर्वाचीनैरप्याचार्यैरयमेवाशयः प्रदर्शितः ।

एवमेव नडादिभ्यः फक् इत्यत्रापि प्रकृतेन प्रातिपदिकेन नडादयो विशिष्यन्ते न नडादिभिः प्रातिपदिकम् । अतोऽत्रापि नास्ति तदन्तविधिः ।

अत एव लघुशब्देन्दुशेखरे नागेशभट्टैरुक्तम् एतत् वार्त्तिकव्याख्यानावसरे "विशेषणविशेष्यभावव्यत्यासे तात्पर्यग्राहकमिदम् । एवञ्च द्वितीयाश्रित इत्यादौ श्रितादयोऽधिकारप्राप्तसमर्थैरित्यस्य विशेष्यभूता इति न तदन्तविधिः । तस्य तत् प्रकृतिके लक्षणया सुपेत्यनेनान्वयः तेन कृष्णं परमश्रित इत्यत्र न समासः । नडादिभ्यः फक् इत्यादावपि नडादिविशेष्यं प्रातिपदिकं विशेषणमिति सौत्रनाडिरित्यत्र न फक्"[6]। तस्मात् इदं वार्त्तिकं न कर्त्तव्यं विशेषणविशेष्यभावव्यत्यासेन सिद्धेः । अथवा तत्रैव तात्पर्यग्राहकमस्तु ।

## 16- उगिद्वर्णग्रहणवर्जमिति वाच्यम्

समासप्रत्ययविधौ तदन्तविधेः प्रतिषेधो वक्तव्यः इति वार्त्तिकस्यापवादवार्त्तिकमिदं येनेति सूत्रे पठितम् । तदन्तविधेरुक्तप्रतिषेधः उगिद्ग्रहणं वर्णग्रहणञ्च वर्जयित्वा वक्तव्य इत्यर्थः । उगिद्ग्रहणम् उगितश्चेति ङीप् यथा भवती महतीत्यादौ भवति तथा अतिभवती अतिमहतीत्यत्रापि भवेदिति । महान्तमतिक्रान्तेति प्रादिसमासः । तत्र यद्यपि गौरादिषु बृहत् महत् शब्दः पठ्यते तथापि अनुपसर्जनाधिकारात् तत्र ङीप् न भवतीति उगिल्लक्षणो ङीप् प्राप्यते । वर्णग्रहणम् "अत इञ्" दाक्षिः प्लाक्षिः इदमपि वार्त्तिकं न कर्त्तव्यम् । विशेषणविशेष्यभावस्य यथेष्टत्वादेव । अत्र उगिता वर्णेन च प्रातिपदिकं विशिष्यते विशेषणेन च तदन्तविधिः सिद्ध इति ।

## 17- यस्मिन् विधिस्तदादावल् ग्रहणे

इदमपि वार्त्तिकं येनेति सूत्रे तदपवादभूतं पठ्यते । येनेति तदन्तविधिर्भवति । अल् ग्रहणेषु च यस्मिन् विधिस्तदाविति वक्तव्यम् । अलादावित्यर्थः । यथा अचि श्नुधातुभ्रुवां य्वोरियङुवङौ इति श्रियः भुवः इति । तदादिविध्यभावे तु श्रियौ इत्यादौ एव स्यात् न तु श्रियः भुव इत्यादौ । इदन्च वार्त्तिकं कर्त्तव्यमेव ।

## 18- वा नामधेयस्य वृद्धसंज्ञा वक्तव्या

वृद्धिर्यस्या चामादिस्तद् वृद्धम् §1/1/73§ इति सूत्रे इदं वार्त्तिकं पठितम् । अचां मध्ये यस्य वृद्धिसंज्ञक आदिभूतः तच्छब्दस्वरूपं वृद्धसंज्ञकं भवति । शालीयो मालीय इति वृद्धसंज्ञायां वृद्धाच्छ इति छः सिध्यति । तत्रानेन वार्त्तिकेन नामधेयस्य तादृशस्य समुदायस्य विकल्पेन वृद्धसंज्ञा क्रियते । देवदत्तीयादैवदत्ता इति रूपद्वयं सिध्यति । अत्र नामपौरुषेयं गृह्यते । पौरुषेय माधुनिकम् । नामधेयशब्देन देवदत्तादिः पौरुषेय सांकेतिकः शब्दो गृह्यते । ये च जात्यादिनिमित्तकाः शब्दा गवायस्ते न गृह्यन्ते । ननु देवदत्तशब्दस्य काश्यादिषु पाठात् काश्यादिभ्यः ठञ् ञिठाभ्यां भवितव्यमिति चेन्न तत्र देवैर्दत्तो देवदत्त इति क्रियानिमित्तको देवदत्तशब्दः पठ्यते न संज्ञाशब्दस्य रूढस्य । देशवाची वा देवदत्तशब्दः पठ्यते । देशवाचिदेवदत्तशब्दस्य आप्राचीनत्वात् एङ्प्राच्यां देशे इति वृद्धसंज्ञाया अभावात् काश्यादिलक्षणौ ठञ् ञिठौ न भवतः । देशवाचिनोऽपि अनादित्वेनासांकेतिकत्वात् न वृद्धसंज्ञा । इदं वार्त्तिकं

कर्त्तव्यमेव ।

१७- गोत्रान्तादसमस्तवत् प्रत्ययो भवतीति वक्तव्यम्

अत्रैव सूत्रे इदमपि वार्त्तिकं पठितम् -। गोत्रशब्देन गोत्रप्रत्ययान्तं गृह्यते । तदन्तात् असमस्तवत् प्रत्ययो भवति । यथा असमस्तात् केवलात् गोत्रप्रत्ययान्तात् वृद्धात् छो भवति तथा समस्तादपि अवृद्धात् भवेत् । घृतप्रधानो रौढिः घृतरौढिः तस्य छात्रा घृतरौढीयाः । रूढस्यापत्यमिति अत इञ् इत्यनेन इञ्प्रत्यये रौढिरिति घृतशब्देन मध्यमपदलोपिसमासः । अत्र रौढिशब्दस्य यथा वृद्धत्वात् छात्रार्थे छो भवति तथैव घृतशब्देन समासेऽपि अवृद्धादपि घृतरौढिशब्दात् छो भवति । एतत् वार्त्तिकबलेन । यथा वा ओदनप्रधानः पाणिनिः ओदनपाणिनिः तस्य छात्रा ओदनपाणिनीयाः । पाणिनोऽपत्यम् इति विग्रहे तस्यापत्यमित्यण् गाथि विदथि इति प्रकृतिभावात् टेरिति टिलोपा भावः । पाणिनस्यापत्यमिति इञि पाणिनिः तस्य छात्रा इति विग्रहे छो भवति । तथैव ओदनपाणिनि शब्दादपि भवति ।

तथैव ओदनपाणिनि

यद्यपि गोत्रोत्तरपदस्य च वृद्धसंज्ञा वक्तव्या इति वृद्धसंज्ञायां छो भविष्यति वार्त्तिकमिदं न करणीयम् । तथापि तादृश वृद्धसंज्ञाप्रतिपादकवार्त्तिकस्य कर्त्तव्यत्वात् इदमेव कृतम् । तेन पिङ्गलकाण्वस्य छात्रा पैङ्गलमाण्वा इति सिद्धं भवति । वृद्धसंज्ञापक्षे तु छः स्यात् । वृद्धत्वाभावे काण्वादिभ्यो गोत्रे इति अण् भवति । अतः गोत्रान्तादसमस्तवत् प्रत्ययो भवतीति

वक्तव्यम् । इदमेव वार्त्तिकं ज्याय: ।

20- जिह्वाकात्य-हरितकात्यवर्जम्

इदन्च वार्त्तिकपूर्व वार्त्तिकापवादभूतं तत्रैव सूत्रे पठितम् । गोत्रान्तादसमस्तवत् इति वार्त्तिकेन प्रत्ययातिदेश: । जिह्वाकात्यं हरितकात्यन्च वर्जयित्वा भवति । यदि च गोत्रोत्तरपदस्य वृद्धसंज्ञापक्ष: तदापि ीदं वार्त्तिकं प्रवर्त्तते । कात्यशब्दो गर्गादि यनन्त: । जिह्वाचपल: कात्य: जिह्वाकात्य: । हरितभक्ष: कात्य: हरितकात्य: ताभ्यामौत्सर्गिक एवाण् यस्येति चेत्यकार लोप: । आपत्यस्य च तद्धितेऽनाति इति यकारस्य लोप: जैह्वाकाता: हारितकाता इति रूपम् । एवन्च एतत् प्रयोगद्वयं वर्जयित्वोक्तवार्त्तिकेन प्रत्ययातिदेशो वक्तव्य इति भाव: ।

।। इति प्रथमाध्यायस्य प्रथम: पाद: ।।



21- व्यचेः कुटादित्वमनसीति वक्तव्यम्

इदन्च वार्तिकं काशिकायाम् गाङ्कुटादिभ्योञ्णिन्ङित् ॥1/2/1॥ इति सूत्रे उल्लिखितम् । महाभाष्ये च लिट्यभ्यासस्योभयेषाम् ॥6/1/17॥ इति सूत्रे पठितम् । तत्र "व्यचेः कुटादित्वमनसीति वक्तव्यम् । किं प्रयोजनम् । अञ्णिति सम्प्रसारणार्थम् । अञ्णिति सम्प्रसारणं यथास्यात् उविचिता, उद्विचितुम् उद्विचितव्यम् । अनसीति किमर्थम् । उरु व्यचा कण्टकः"[1] । उरु विचतीति मिथुनेऽसिः पूर्ववच्च सर्वमिति असिप्रत्ययः अत्वसन्तस्येति दीर्घः । व्यच् व्याजीकरणे तुदादौ कुटादिभ्यः प्राक् पठ्यते तस्य कुटादित्वमस् प्रत्ययभिन्ने प्रत्ययेऽनेन वार्त्तिकेनातिदिश्यते । कुटादित्वाच्च ङित्वात् णित् नित्भिन्ने ग्रहिज्येति सम्प्रसारणं सिध्यति । विचिताविचितुमित्यादौ ।

अनसीति पर्युदासः स च तद्भिन्न तत्सदृशग्राही । एवन्च असिभिन्न कृत्प्रत्यय एव कुटादित्वं विज्ञायते तेन विव्यचिथ इत्यादौ न ङित्वम् । तदुक्तं सिद्धान्तकौमुद्यां श्रीमताभट्टोजीदीक्षितेन "अव्याचीत् अव्यचीत् व्यचेः कुटादित्वमनसि इति तु नेह प्रवर्तते अनसीति पर्युदासेन कृन्मात्रविषयत्वात्"[2] इदन्च वार्त्तिकमङ्गीकृतमेव ।

---

1- महाभा० - पृ० 695.

2- कसि० कौ० - पृ० 230.

22- श्रन्तिग्रन्थिदम्भिस्वञ्जीनामिति वक्तव्यम्

इन्धिं भवतिभ्यां चेति सूत्रे इदं काशिकायां पठितं नेदं वार्त्तिकमपि तु व्याकरणान्तरम् । इहापि व्याकरणे भाष्येष्ट्या स्वीक्रियते । अत एकहल्मध्ये इति सूत्रभाष्ये देभतुरिति प्रयोग एवात्र लिङ्गम् । यथोत्तरं मुनीनां प्रामाण्यमिति न्यायात् अत्रार्थे सूत्रकारवार्त्तिककाराणामपि तात्पर्यमस्त्येव । अस्यार्थः - श्रन्थिग्रन्थिप्रभृतीनां धातूनां लिटः कित्त्वं भवति । श्रन्थ-ग्रन्थसन्दर्भे, दम्भ, दम्भे ष्वन्ज-परिष्वङ्गे । लिटि कित्वादुपधालोपः । तस्याभीयत्वात् असिद्धत्वात् एत्वाभ्यासलोपयोरप्राप्तौ दम्भेश्च एत्वाभ्यासलोपौ वक्तव्यौ इति वार्त्तिकेन एत्वाभ्यासलोपयोः कृतयोः देभतुरिति रूपम्। तद्वचनाभावपक्षे ददम्भतुरिति । पदमन्जरीकारस्तु आभीयासिद्धत्वस्यानित्यत्वमाश्रित्य अत एकहल्मध्ये इत्यनेन सूत्रेणैव एत्वाभ्यासलोपौ प्राह ।

श्रेथतुः श्रेथुरित्यादौ तु तृफलभजत्रपश्चेत्यत्र चकारस्यानुक्त समुच्चयार्थत्वात् अत एकहल्मध्य इत्यनेन एत्वाभ्यासलोपौ । एवन्चानेनैव देभतुरित्यत्रापि सिद्धेः वार्त्तिकं न करणीयम् । परिपस्वजे इत्यादौ कित्वे उपधालोपे उपसर्गात् सुनोतीति षत्वे परस्य सकारस्य तु सदिस्वन्ज्योः परस्य लिटि इति प्रतिषेधे रूपं सिद्धम् ।

इदं कित्त्वं पिदपिद्विषयकमिति सुधाकरादयः । तन्मते तिप् सिप् मिप्सु देभ देभिथ देभ इति रूपान्तरम् । अपिद्विषयकमिति न्यासकारादिमते तु ददम्भ ददम्भिथ ददम्भ इति रूपम् ।

अत्रेदं बोध्यम् । इदं व्याकरणान्तरमिह व्याकरणे व्याख्यानात् सिद्धम् । तथाहि इन्धि भवतिभ्यान्चेत्यत्र चकारोऽनुक्त समुच्चार्थः एतेन श्रन्थिप्रभृतीनामपि संयोगान्तानां लिटः कित्त्वं भविष्यतीति ।

23- अनर्थकस्यापि निपातस्य प्रातिपदिकसंज्ञेष्यते

अर्थवदधातुरप्रत्ययः प्रातिपदिकम् (1/2/45) इति सूत्रे महाभाष्ये वार्त्तिकमिदं पठितम् । काशिकायान्चापि तत्रैव सूत्रे न्यस्तम् । अस्य वार्त्तिकस्य न्यासपदमन्जर्योर्व्याख्यानं नास्ति । एतेन काशिकायामिदं वार्त्तिकं नास्तीति गम्यत इति केचित् । सम्प्रति काशिकायामिदं वार्त्तिकमुपलभ्यते । टीका नास्ति । माभूत् टीका । तेन वार्त्तिकास्तित्वाभावः कथं सिध्येत् । अतो वार्त्तिकपाठः स्वीकर्त्तव्य एव ।

अनर्थकस्यापि निपातस्य प्रातिपदिकसंज्ञा वक्तव्या । प्रातिपदिकसंज्ञायामर्थवत्त्वमुद्देश्यतावच्छेदकमुक्तम् । अर्थवत्त्वाभावेऽनर्थकनिपाते प्रातिपदिकत्वाप्राप्तौ वचनम् ।

ननु निपाता द्योतकाः सन्ति । न च तेषामभिधेयं किन्चिदस्ति । अतः सर्वेषां निपातानामनर्थकत्वमेवेति निपातानामनर्थकानामित्यत्र अनर्थकत्वविशेषणं व्यर्थं व्यावर्त्याभावात् इति चेन्न निपातानां द्योतकत्वादभिधेयार्थाभावेऽपि द्योत्यार्थसद्भावात् तेषामर्थवत्त्वस्य स्वीकारात् । यस्य तु द्योत्योऽपि नास्त्यर्थः स इह अनर्थकनिपातशब्देन गृह्यते । यथा अध्यागच्छति,

पर्यागच्छति, प्रलम्बते । अत्र अध्याब्दीनां निपातानां प्रातिपदिकत्वात् स्वादिविभक्त्युत्पत्त्या सुबन्तत्वात् पदसंज्ञायां पदस्य पदात् इत्यधिकारविहित तिङ्ङतिङः इति निघातः सिध्यति । ननु न केवलं प्रातिपदिकत्वादेव स्वाद्युत्पत्तिः सम्भवति स्वादिविधायकसूत्रेण द्व्येकयोरित्यादिशास्त्रैकवाक्यत्वात् एकत्वादिष्वर्थेषु स्वादीनां विधानात् । अध्यागच्छतीत्यादौ अध्यादीनां निपातानां नैकत्वादयोऽर्थाः सन्ति अनर्थकत्वादेव । न च एकवचनमुत्सर्गत इति न्यायात् द्वित्वादेर अपि एकत्वस्य तत्र सत्त्वात् कथं न स्वाद्युत्पत्तिरिति वाच्यम् । तर्हि एकत्वार्थस्य सत्त्वात् निपातस्यानर्थकत्वाभावात् वार्त्तिकस्य वैयर्थ्यात् । अर्थवदित्यनेनैव प्रातिपदिकत्वसिद्धेः । एकवचनमुत्सर्गत इति न्यायस्यागतिकगतिकत्वाच्चेति चेन्न स्वादीनामविशेषेण प्रातिपदिकत्वादेवोत्पत्तिस्वीकारात् । उत्पन्नानाञ्च विभक्तीनां नियमः क्रियते । नानावाक्यश्रवणा च स्यादिविधिवाक्येन न द्व्येकयोरित्यादेरेकवाक्यता स्वीक्रियते । तथा च नियमश्च द्विविधः प्रत्ययनियमोऽर्थनियमश्च । तत्रार्थनियमः क्रियते एकस्मिन् एकवचनमेव, द्वयो द्विवचनमेव, बहुषु बहुवचनमेव । एवञ्च सति एकत्वाद्यर्थाभावेऽपि विभक्तयोम भविष्यन्ति ।

प्रत्ययनियमोऽपि द्विविधः प्रकृतार्थापेक्षः सामान्यापेक्षश्च । तत्र प्रकृतार्थान् एकत्वादीन् अपेक्ष्य प्रत्ययनियमः स्वीक्रियते । एकस्मिन्नेवार्थे एकवचनं न द्वयोर्न बहुषु इत्यादिरूपो नियमः । तथा चानर्थकस्यापि संख्यादिरहितस्य निपातस्य प्रातिपदिकत्वात् स्वाद्युत्पत्तिः सिद्धा । तस्मात् प्रातिपदिकत्वसिद्धये वार्त्तिकं कर्त्तव्यम् ।

अत्रेदं बोध्यम् अनर्थकस्य निपातस्य प्रातिपदिकत्व सिद्ध्ये वार्त्तिक-मिदं न कर्त्तव्यम् । ज्ञापकात् सिद्धत्वात् तथाहि आचार्यप्रवृत्तिर्ज्ञापयति यद-नर्थकानामपि निपातानां भवत्यर्थवत् कृतम् । यदयं अधिपरी अनर्थकौ इत्यनर्थ-कयोर्गत्युपसर्गसंज्ञावाधिकां कर्मप्रवचनीयसंज्ञां शास्ति तत्र क्रियायोगे गत्युपसर्ग-संज्ञयोर्विधानात् अनर्थकयोः क्रियायोगाभावात् प्राप्तिरेव नास्तीति संज्ञा-विधानं व्यर्थीभूयोक्तार्थं ज्ञापयति ।

एवञ्चोक्त ज्ञापकात् अनर्थकानामपि अर्थवत् कृतं प्रातिपदिकत्वं सिध्यतीति तदर्थं वार्तिकं न कर्त्तव्यम् ।

किञ्च अनर्थका निपाता इति धातुनिपातयोः साधारणार्थतया अधिकद्योत्यार्थाभावात् उच्यते न तु सर्वात्मनार्थाभावात् । अन्यथा प्रयोग एव न स्यात् किञ्च धात्वर्थस्यैव द्योत्यत्वात् तदर्थेनैव निपातस्यापि अर्थवत्वं सिध्यति ।

अथवा कृत्तद्धित समासाश्च इत्यत्र चकारोऽनुक्तसमुच्चयार्थः तेना-नर्थकस्यापि निपातस्य प्रातिपदिकत्व सिद्धमिति । एतदेव मनोरमाग्रन्थेऽप्यु-क्तम् । इति दिक् ।

## 24- अर्थवत् समुदायानां समासग्रहणं नियमार्थम्

वार्त्तिकमिदं कृत्तद्धितसमासाश्चेति सूत्रे काशिकायामुक्तम् महाभाष्ये चार्थवत् सूत्रे उक्तम् । कृत्तद्धितेत्यत्रापि इदं वार्त्तिकं स्मारितम् ।

तत्र महाभाष्ये - अर्थवत: शब्दसमुदायस्य धात्वादिभिन्नस्य प्रातिपदिकत्वस्योक्तत्वात् वाक्यस्यापि अर्थकत्त्वात् प्रातिपदिकत्वप्राप्तौ तत् प्रतिषेधोऽर्थवत्त्वात् इति ।

ननु देवदत्तगामभ्याज शुक्लामित्यादिवाक्ये को वाक्यार्थ: । पदान्येव स्वं स्वमर्थं प्रतिपादयन्ति । तेषान्चार्थवतां प्रातिपदिकत्वमिष्टमेव । तत्र पदैरूपस्थापिता पदार्था एवाकाङ्क्षायोग्यतासन्निधिवशात् परस्परसंसृष्ठा वाक्यार्थ: । न तु वाक्यार्थ: पृथगस्ति । न वा आकांक्षादिवशात् परस्परमिति पदातिरिक्तं वाक्यं न वा सम्भवति । यस्य शक्तिर्गृह्यते ।

तत्र पदैरभिहितानां पदार्थानामाकांक्षादिवशात् संसृष्टतया बोध: इति अभिहितान्वयवाद: । क्रियान्वितानां पदार्थानां तादृश पदकदम्बेनाभिधानमिति अन्विताभिधानवादिमतम् । अन्विताभिधानवादिमते च वाक्यार्थ: पदार्थ एव न च तत्र पुन: वाक्यशक्ति: कल्प्या । तस्मात् पदार्थातिरिक्तो वाक्यार्थ नास्ति । यत्र शक्तस्य वाक्यस्य प्रातिपदिकत्वं प्रसज्येतेति चेन्न पदार्थाभिसम्बन्धस्यातिरिक्तस्योपलब्धे: । सामान्ये वर्तमानानां पदानां यद्विशेषेऽवस्थानं तस्य वाक्यार्थत्वात् । एवन्च पदार्थसंसर्ग एव वाक्यार्थ: । स च देवदत्त गामभ्याज शुक्लमिति सर्वपदेषु उक्तष्वेव प्रतीयते । निरूपितन्चैतत् महाभाष्ये । पदार्थानां परस्परविशेष्य-विशेषणभाव: संसर्गो वाक्यार्थ: । लघुमन्जूषायान्च नागेशभट्टैरपि सम्यगालोचितम् । विस्तरभयात् इह नोपन्यस्यते तत्र तादृश संसर्गरूपे वाक्यार्थे पदानुपस्थापिते वाक्यस्य शक्ति: स्वीकर्तव्या । वाक्यमपि आकांक्षादिमत् पदकदम्ब इति पदातिरिक्तस्तत् समुदाय: सिध्यति ।

तथा च वाक्यस्यार्थवत्त्वात् तत्र प्रातिपदिकसंज्ञा प्रतिषेधो वक्तव्य एव । एवं प्राप्ते समासग्रहणस्य नियमार्थत्वबोधकमुत्तरपक्षवार्त्तिकं प्रवृत्तम् । अर्थवत् समुदायानां समासग्रहणं नियमार्थमिति । अनेन वार्त्तिकेन समासग्रहणस्य नियमत्वं बोध्यते । अतस्तादृशं वार्त्तिकवाक्यं कर्त्तव्यमेवेति न बोध्यम् । समास एवार्थवत् समुदायानां प्रातिपदिकसंज्ञो भवति । नान्य इति नियमः । तेन अर्थवतो वाक्यस्य न संज्ञा तत्रार्थसमुदायानामित्यत्र कर्मणि षष्ठीति पदमन्जरी निर्धारिणषष्ठीति न्यासः । अर्थवत् समुदायानां मध्ये समास्येति ।

ननु यद्येवं प्रकृतिप्रत्ययसमुदायस्यार्थवतः प्रातिपदिकत्वं न स्यात् तदर्थं प्रातिपदिकसंज्ञा वक्तव्या । अन्यथा बहुपटवः उच्चकैरित्यादौ प्रातिपदिकत्वाभावे सुबुत्पत्तेरभावः स्यात् पूर्वम् उत्पन्नायाश्च विभक्तेः सुपो-धातुरिति लुक् न स्यात् । ततश्च बहुशब्दात् सुबन्तात् विभा सुपो बहुजिति पुरस्तात् बहुच् प्रत्यये कृते सुब्लुगभावात् चितः इति सूत्रेण जस्विभक्तेरकारस्य स्वरः स्यात् । चितः सप्रकृतेर्बहुजकजर्थमिति वचनात् । उकारस्य चेष्यते । प्रातिपदिकत्वे तु सति पूर्वोत्पन्नाया विभक्तेर्लुकि कृते यान्या विभक्तिरुत्पद्यते सा बहुजुत्पत्तेरुत्तरकालभावित्वात् प्रकृतौ नान्तर्भवति तेन तामुत्सृज्य पूर्वो भागः स्वरभाग् भवति । अतः उकारस्य स्वरः सिध्यति उच्चकैरित्यत्रापि प्रातिपदिकत्वाभावात् अकज्वतः समुदायात् विभक्तिर्न स्यात् । ततः पदत्वाभावात् उच्चकैः पठतीत्यादौ तिङ्तिङः इति निघातो न स्यात् । तस्मात् प्रकृतिप्रत्ययसमुदायस्यार्थवतः संज्ञा वक्तव्यैव ।

न चैवम् अप्रत्ययान्त इति प्रतिषेधशासनज्ञापकात् प्रकृतिप्रत्यय-

तथा च वाक्यस्यार्थवत्त्वात् तत्र प्रातिपदिकसंज्ञा प्रतिषेधो वक्तव्य एव । एवं प्राप्ते समासग्रहणस्य नियमार्थत्वबोधकमुत्तरपक्षवार्त्तिकं प्रवृत्तम् । अर्थवत् समुदायानां समासग्रहणं नियमार्थमिति । अनेन वार्त्तिकेन समासग्रहणस्य नियमत्वं बोध्यते । अतस्तादृशं वार्त्तिकवाक्यं कर्त्तव्यमेवेति न बोध्यम् । समास एवार्थवत् समुदायानां प्रातिपदिकसंज्ञो भवति । नान्य इति नियमः । तेन अर्थवतो वाक्यस्य न संज्ञा तत्रार्थसमुदायानामित्यत्र कर्मणि षष्ठीति पदमन्जरी निर्धारणषष्ठीति न्यासः । अर्थवत् समुदायानां मध्ये समास्येति ।

ननु यद्येवं प्रकृतिप्रत्ययसमुदायस्यार्थवतः प्रातिपदिकत्वं न स्यात् तदर्थं प्रातिपदिकसंज्ञा वक्तव्या । अन्यथा बहुपटवः उच्चकैरित्यादौ प्रातिपदिकत्वाभावे सुबुत्पत्तेरभावः स्यात् पूर्वम् उत्पन्नायाश्च विभक्तेः सुपोधातुरिति लुक् न स्यात् । ततश्च बहुशब्दात् सुबन्तात् विभा सुपो बहुजिति पुरस्तात् बहुच् प्रत्यये कृते सुब्लुगभावात् चितः इति सूत्रेण जस्विभक्तेरकारस्य स्वरः स्यात् । चितः सप्रकृतेर्बह्वकजर्थमिति वचनात् । उकारस्य चेष्यते । प्रातिपदिकत्वे तु सति पूर्वोत्पन्नाया विभक्तेर्लुकि कृते यान्या विभक्तिरुत्पद्यते सा बहुजुत्पत्तेरुत्तरकालभावित्वात् प्रकृतो नान्तर्भवति तेन तामुत्सृज्य पूर्वो भागः स्वरभाग् भवति । अतः उकारस्य स्वरः सिध्यति उच्चकैरित्यत्रापि प्रातिपदिकत्वाभावात् अकज्वतः समुदायात् विभक्तिर्न स्यात् । ततः पदत्वाभावात् उच्चकैः पठतीत्यादौ तिङ॰तिङ॰ इति निघातो न स्यात् । तस्मात् प्रकृतिप्रत्ययसमुदायस्यार्थवतः संज्ञा वक्तव्यैव ।

न चैवम् अप्रत्ययान्त इति प्रतिषेधशासनज्ञापकात् प्रकृतिप्रत्यय-

समुदायस्य प्रातिपदिकत्वं सिध्यतीति वाच्यम् । अप्रत्यय इति प्रतिषेधस्य तर्हि करणीयत्वात् । न च प्रत्ययान्तस्य संज्ञानिषेधार्थं तस्य चरितार्थता, कृत्तद्धितग्रहणस्य नियमार्थत्वात् कृत्तद्धितान्तस्यैव प्रत्ययान्तस्य प्रातिपदिकसंज्ञा नान्यस्येति । तथा च उक्तार्थज्ञापनार्थमप्रत्यय इति वक्तव्यमेव । एतदभावे प्रकृतिप्रत्ययसमुदायस्य संज्ञा वक्तव्या वेति चेत्[1] अत्रोच्यते उभयमपि न वक्तव्यम् । नियमस्य तुल्यजातीयत्वात् । नियमो व्यावृत्तिः । कश्च तुल्यजातीयः यथाजातीयकः समासः । स च सुबन्तानामिति ।

न च सुप्तिङ्समुदायस्य तर्हि प्रातिपदिकसंज्ञा प्राप्नोति । तन्निषेधो वक्तव्य इति वाच्यं जहि कर्मणा बहुलमाभीक्ष्ण्ये कर्तारन्चाभिदधातीति वाक्यस्य नियमार्थत्वात् सिद्धेः । एतस्यैव सुप्तिङ्समुदायस्य नान्यस्य इति । एवमेव आख्यातमाख्यातेनेति वचनस्य एतस्यैव तिङ्समुदायस्य प्रातिपदिकत्वं नान्यस्येति नियमार्थत्वात् न तिङ्समुदायस्य प्रातिपदिकत्वम् । एवं नियमे विज्ञायमाने बहुपटव इत्यादौ तुल्यजातीयत्वाभावात् नियमेन न व्यावृत्तिर्भवतीति पूर्वेण सूत्रेण प्रातिपदिकत्वं सिद्धम् ।

तत्र सुबन्तानामित्यंस्यार्थं कैयटः प्राह - "भेदसंसर्गार्थवत्त्वयुक्तानां यस्मात् सुबन्तासुबन्तानामपि समासो भवति । अश्वक्रीतीत्यादौ । गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्ते-रिति वचनात्" ।

तत्रोद्योतकारो नागेशः प्राह = "वाक्ये पदार्थयोर्विभागेनापि प्रयोगे

---

1- महाभा० - पृ० 46.

सतीतरसंसर्गाकांक्षाभेदसंसर्गः । स द्वारभूतो यस्य विशिष्टार्थवत्त्वस्य तद्युक्तानामित्यर्थः । समासेऽपि वाक्यीयेनैक्तेन विशिष्टार्थवत्त्वम् । न हि प्रकृतिप्रत्ययोर्विभागः पदश्चेति वचनात् इति भावः । एवन्च समुदायघटका भागाः स्वातन्त्र्येणापि प्रयोगार्हा अर्थवन्तो गृह्यन्ते इति तात्पर्यम्" ।

एवन्च कैयटमते सुबन्तानामित्यस्य भेदसंसर्गार्थवत्त्वयुक्तानामित्यर्थः । नागेशमते च स्वातन्त्र्येण प्रयोगार्हार्थवत्त्वयुक्तामित्यर्थः । एतयोरर्थयोर्विस्तरेण विचारः प्रस्तोष्यते ।

पदमन्जरीकारा हरदत्तमिश्रास्तु प्राहुः - "तुल्यजातीयस्य नियमेन व्यावृत्तिः । कश्च तुल्यजातीयः, यस्यार्थवत् समुदायस्य पूर्वो भागस्तावत् पदम् । यत्रैव हि सुबन्तानां समासः राजपुरुष इति । यत्रैव हि तिङन्तानां आख्यातमाख्यातेन क्रियासातत्ये, अश्नीतपिबता, खादतमोदतेति । यत्र च सुबन्तानां तिङन्तानां च जहि कर्मणा बहुलमाभिक्ष्ण्ये, जहि जोडः जहिस्तम्ब इति। यत्र च सुबन्तानां प्रातिपदिकानान्च गतिकारकोपपदानामिति वस्त्रक्रीती निष्कक्रीतीति, सर्वत्र पूर्वो भागस्तावत् पदम् अतः स तुल्यजातीयो नियमेन व्यावर्त्यते तेन बहुपटव इत्यत्र जसन्तस्य पुरस्तात् बहुचिकृतेनोत्तरत्र संघाते पूर्वो भागः पदमित्यसति नियमे ईषदसमाप्तिलक्षणेनार्थेनार्थवत्त्वात् सत्यां संज्ञायां पूर्वोत्पन्नस्य जसः सुपो धातु इति लुकि कृते चित्स्वरोऽपि भवन् चितः सप्रकृतेर्बह्वकजर्थमिति पटुशब्दस्योकारस्य भवति । पूर्वोत्पन्नस्य तु जसोऽवस्थाने तस्यैव स्यात्"[2] ।

---

1- महाभा० - पृ० 46·

2- का० पदमन्जरी - पृ० 345·

पदमन्जरीकारमतमेव सिद्धान्तकौमुद्यां श्रीदीक्षितेन स्वीकृतम् । तेन प्रोक्तं समासग्रहणं नियमार्थम् । नियमाकारश्च यत्र संघाते पूर्वो भाग: पदं तस्य चेत् भवति तर्हि समासस्यैव तेन वाक्यस्य न प्रातिपदिकत्वम् । एतेषां त्रमेषां पक्षाणां समीक्षा आपेक्ष्यते । तत्र प्रथमम् अर्थवत् समुदायानां समासग्रहणं नियमार्थमिति समीक्ष्यते अत्र अर्थवत् समुदायानामित्यत्र तन्त्रेण षष्ठीतत्पुरुषकर्मधारयौ बोधव्यौ । एवन्च अर्थवता समुदाय:, अर्थवान् चासौ समुदाय इति । अर्थवदभिन्ना येऽर्थवतां समुदाया: तेषान्वेत् प्रातिपदिकत्वं तर्हि समासस्यैव इति नियम: । षष्ठीतत्पुरुषमात्राश्रयणे नियमेनैव दश दाडिमानीत्यादौ समुदायस्य संज्ञाया वारणीयत्वात् अर्थवद्ग्रहणप्रयोजनपरभाष्यविरोध: स्यात् अत: कर्मधारयाश्रयणं केवलकर्मधारयाश्रयणे तद्धितादिग्रहणवैयर्थ्यापत्ति: स्यादित्युभयाश्रयणम् ।

एवं व्याख्यानेऽपि प्रकृतिप्रत्ययसमुदायस्य संज्ञा न प्राप्नोतीति तदर्थं नियमस्य सजातीयविषयत्वात् सजातीयश्च सुबन्त इति महाभाष्ये उक्तं तत्र किं नियमत्वं किन्च सजातीयविषयत्वमिति विवेचनीयं भवति ।

तत्र यत् किन्चित् शास्त्रविशिष्टत्वं नियमत्वं वैशिष्ट्यन्च - स्वीयोद्देश्यतावच्छेदकधर्मव्याप्यधर्मावच्छिन्नोद्देश्यकताकत्व स्वीयविधेयतावच्छेदधर्मावच्छिन्नविधेयताकत्वोभयसम्बन्धेन । कृत्तद्धितसमासाश्चेति सूत्रं अर्थवत् शास्त्रविशिष्टम् । अर्थवत् सूत्रीयोद्देश्यतावच्छेदकार्थवत्त्वव्याप्यसमासत्वादिधर्मावच्छिन्नोद्देश्यताकत्वम् अर्थवत्छात्रीयविधेयतावच्छेदकप्रातिपदिकत्वधर्मावच्छिन्नविधेयताकत्वन्च कृत्तद्धितेति सूत्रे वर्तते इति तत् नियमसूत्रमुच्यते ।

सुबन्तत्वन्च साजात्यमिति भाष्ये सुबन्तानामिति वचनात् ।

अत्रेदं बोध्यम् । सुबन्तानामित्यस्य कैयटेन भेदसंसर्गद्वारकार्थवन्त उपलक्ष्यन्ते इति व्याख्या कृता । तस्यायं भावः - भेदे प्रवृत्तिनिमित्तभेदे सत्याकाङ्क्षा-संसर्ग इतरान्वयस्तद्वारकार्थवन्त इत्यर्थः । अथवा भिन्नं भेदः शक्तिभिन्नः सादृश्याख्यः संसर्गः अपि शब्दश्चाध्याहार्यः । तथा च सादृश्याख्यभेदसम्बन्धेन शक्त्याख्यतादात्म्यसम्बन्धेन च योऽर्थवान् इत्यर्थः । तेन गवित्ययमाहेत्यस्य सादृश्याख्यसम्बन्धेनार्थवतोऽनुकरणस्यापि नियमेन व्यावृत्तिः सिद्धेति । केचित्तु भेदे सति = उपस्थितिभेदे सतीत्यर्थमाहुः ।

अन्ये तु भेदसंसर्गद्वारकार्थवन्त इत्यस्य भेदस्य संसर्गविशेषणत्वे नीलो घट इत्यत्राभेदसंसर्गद्वारकार्थवत्त्वेन समासग्रहणकृतनियमेन वारणं न स्यात् । एवञ्च भेदे सति संसर्गद्वारकार्थवन्त इति व्याख्येयम् । तथाहि भेदे सति इति व्याख्यायां कस्य भेदे सति इत्याकाङ्क्षायां शक्तेरित्याहार्यम् । संसर्गश्च विशेष्य-विशेषणभावरूपः । तथा च शक्तिभेदे सति आकाङ्क्षाभास्य विशेष्यविशेषणभाव-प्रयोजकार्थवन्त इति फलितम् । नीलो घट इत्यादौ नील-घटपदयोः शक्ति-भेदेन तादृश विशेष्यविशेषणभावप्रयोजकार्थवत् समुदायत्वसत्त्वेन च न दोषः ।

वस्तुतस्तु शक्तिविशिष्टसंसर्गकविशेष्यविशेषणभावप्रयोजकार्थवन्त इति वक्तव्यम् । वै च स्वनिरूपकार्थप्रतियोगिकत्वस्वनिरूपकार्थानुयोगिकत्वैतदन्य-तरवत्त्वम्, स्वनिरूपकार्थभिन्नार्थप्रतियोगिकत्व स्वनिरूपकार्थभिन्नार्थानुयोगिक-त्वैतदन्यतरवत्त्वम्, एतदुभयसम्बन्धेन । शक्तिश्च पदनिष्ठा गृह्यते । तथा च "गवित्ययमाह" अस्य गो श्रृणु इत्यादौ न दोषः । तत्राद्ये गोपदस्यानुकरणत्वेन तादृश ज्ञानेनैवानुकार्योपस्थितौ शक्तिकल्पनस्य तत्राभावेऽपि इति पदे शक्ति-

सत्त्वेन तन्निरूपकार्थानुयोगिकत्व गवेति पदद्वयजन्याकांक्षाभास्यसम्बन्धे, एवं स्वनिष्ठशक्तिनिरूपकार्थभिन्नोगो पदार्थः तत्प्रतियोगिकत्वन्चेति तादृश विशेष्यविशेषणभावप्रयोजकत्वेन गवित्ययमाह इत्यस्य समासग्रहणकृतानियमेन व्यावृत्त्या न प्रातिपदिकत्वम् । अन्त्ये च एतच्छब्दनिष्ठशक्तिनिरूपकार्थप्रतियोगिकत्वम् एतत् पदनिष्ठशक्तिनिरूपकार्थभिन्नो गो पदार्थः तदनुयोगिकत्वन्च अस्य गो इति पदद्वयाकाङ्क्षाभास्य विशेष्यविशेषणभावे इति तत्रापि न प्रतिपदिकत्वम् । अन्यथा गो पदे शक्तेरभावेन शक्तिभेदस्य वक्तुमशक्यतया प्रातिपदिकत्वापत्तिर्दुर्वारा स्यात् । न चैवमपि देवदत्तो गार्ग्य इत्येतद् घटकदेवदत्तो गार्ग्येत्यस्यार्थवत्त्वेन समासग्रहणनियमेनैव व्यावृत्तौ प्रत्ययग्रहणपरिभाषया वारणपरभाष्यविरोधः स्यात् इति वाच्यम् ।

पदविशिष्टसमुदायत्वं भेदसंसर्गद्वारकार्थवत्त्वमिति परिष्कारेणादोषात् । वैशिष्ट्यन्च स्वनिष्ठशक्तिविशिष्ठसंसर्गकविशेष्यविशेषणभावप्रयोजकत्व स्वनिष्ठशक्तिनिरूपकार्थबोधौपयिकाकाङ्क्षापर्याप्त्यधिकरणत्वैतदुभयसम्बन्धेन । देवदत्तो गार्ग्येत्पाद्येन्धिकस्मत्वैतदुभ प्रथमसम्बन्धसत्त्वेऽपि देवदत्तपदार्थविशेष्यतानिरूपिताभेदसम्बन्धावच्छिन्नगार्ग्यत्वावच्छिन्नप्रकारताकशाब्दबोधे स्वन्तदेवदत्तपदसमभिव्याहृतस्वन्तगार्ग्यपदस्य प्रयोजकतया तादृशाङ्क्षापर्याप्तेः स्वन्ते एव सत्त्वेन तद्रहिते द्वितीयसम्बन्धाभावेनादोषात् । राज्ञः पुरुषेत्यस्य तु स्वत्व सम्बन्धावच्छिन्नराजत्वावच्छिन्न प्रकारताकपुरुषत्वावच्छिन्नविशेष्यताकशाब्दबोधीयाकांक्षायाः राज्ञः पुरुषेण, पुरुषायेत्यादौ विभिन्नविभक्त्यन्तानुरोधेन सर्वत्रसमानबोधाय षष्ठ्यन्तराजपदसमभिव्याहृतविभक्तिरहितपुरुषपदमात्रे क्लृप्ततया

तादृशाकाङ्क्षापर्याप्त्यधिकरणत्वेन तादृश विशेष्यविशेषणभावप्रयोजकत्वेन व्यावृत्ति-र्निराबाधैवेति दिक् ।

25- ईयसो बहुव्रीहेः प्रतिषेधो वक्तव्यः

गोस्त्रियोरुपसर्जनस्य {1/2/48} इति सूत्रे पठितमिदं वार्त्तिकम् । काशिकायामपि तत्रैव सूत्रे उपात्तम् । अनेन सूत्रेण उपसर्जनगोशब्दान्तस्य उपसर्जन-स्त्रीप्रत्ययान्तान्तस्य च प्रातिपदिकस्य ह्रस्वो भवति । चित्रगुः शबलगुः, निष्कौशाम्बिः, अतिखट्वः । स्त्रीशब्देन स्त्रीप्रत्ययस्य ग्रहणं बोध्यम् । तेन अतितन्त्रीः अतिलक्ष्मीरित्यादौ न ह्रस्वः ।

तत्र बहुश्रेयसी विद्यमानश्रेयसीत्यादावपि उपसर्जनस्त्रीप्रत्ययान्तान्त-त्वात् ह्रस्वप्रसङ्गः । तत्र अतिशयेन प्रशस्याश्रेयसी, प्रशस्य शब्दात् इय सुन् अतिशायने । प्रशस्यस्य श्रः इति श्रादेशे उगितश्चेति ङीप् । श्र ईयस् इ जाते प्रकृत्यैकाज् इति प्रकृतिभावात् यस्येति चेति लोपाभावे आद्गुण इति गुणे । श्रेयसीशब्दः बह्व्यः श्रेयस्यो यस्येति बहुव्रीहिः । नद्युतश्चेति कप् न भवति ईयसश्चेति प्रतिषेधात् । एवञ्चात्र गोस्त्रियोरिति ह्रस्वापत्तिः स्यादिति वार्त्तिक-मिदं प्रवृत्तम् । ईयसुन्नात् यः स्त्रीप्रत्ययो विहितस्तदन्तान्तस्य ह्रस्वो न भवतीत्यर्थः । वार्त्तिके बहुव्रीहिग्रहणाभावे अतिश्रेयसिरित्यादावपि ह्रस्व-निषेधः स्यात् तस्मात् तद् ग्रहणम् । इदञ्च वार्त्तिकं भाष्ये न प्रत्याख्यानम् । न्यासकारास्तु "विभाषाच्छन्दसि " इति सूत्रात् विभाषाग्रहणानुवृत्तिमत्र सूत्रे स्वीकृत्य तस्य व्यवस्थितविभाषामाश्रित्य वार्त्तिकार्थो लभ्य इति वार्त्तिकं

न कर्त्तव्यमित्याहु: ।

भाष्ये अस्य वार्त्तिकस्य नेदं स्वरूपमपि तु ईयसो बहुव्रीहौ पुंवद्-वचनमिति रूपम् । तत्र ईयसो बहुव्रीहौ पुंवद्भावो वक्तव्य: । यथा पुंविषये ईकार: श्रूयते ययी पपीरित्यादौ तथा ईयसोऽपि पर ईकार: श्रूयेतेत्यर्थ: । अन्यथा पुंवदतिदेशे स्त्रीप्रत्ययस्यापि निवृत्ति: प्रसज्येता अत एवास्य वार्त्तिकस्यात्रैव पाठ: कृत: । स्त्रीप्रत्ययनिवृत्तितात्पर्ये सति तु पुंवद्-भावप्रकरणे एव पठेत् । नपुंसके तु ह्रस्वत्वं भवत्येव । अत्र पाठसामर्थ्यादिव । एवञ्च बह्वयर्के श्रेयस्य यस्य कुलस्येति बहुश्रेयसि कुलं भवत्येव ।

केचित्तु बहुश्रेयसि कुलमित्यादौ नपुंसकह्रस्वत्वस्यापि निषेधो भवत्येव । अत एव महाभाष्ये बह्व्य: श्रेयस्योऽस्येति प्रयुक्तं न तु स इति । एवञ्च ह्रस्वमात्रस्यानेन निषेध इत्याहु: ।

यद्यपि ईयसो बहुव्रीहौ नेति वार्त्तिकस्वरूपकरणेऽपि सिद्धं पुंवद्वचनं गौरवग्रस्तं व्याख्यानसापेक्षञ्च तथापि वार्त्तिकाक्षरेषु लाघवगौरवविचारो नास्ति । यथा सूत्राक्षरेषु भवति । उभयस्वरूपस्वीकारोऽपि फले विशेषा-भावात् ।

26- हरीतक्यादिषु व्यक्ति:

वार्त्तिकमिदं विशेषणानाञ्चाजाते: (1/2/52) इति सूत्रे भाष्ये पठितम् । लुपि युक्तवद् व्यक्तिवचने (1/2/51) इति सूत्रेण लुपि युक्तवद्-

व्यक्तिवचने भवत: लुपीति लुप्संज्ञया लुप्तस्य प्रत्ययस्यार्थ उच्यते । युक्तवदिति निष्ठाप्रत्ययेन क्तवतुना प्रकृत्यर्थ उच्यते । स हि प्रत्ययार्थमात्मना युनक्ति । विशेष्यविशेषणभावसम्बन्धेनात्मसम्बन्धिनं करोति । अथवा युक्त: प्रकृत्यर्थ: प्रत्ययार्थेन सम्बद्धस्तस्मिन्निव व्यक्तिवचने लुबर्थे भवत: । सप्तम्यर्थे वति: । व्यक्तिवचने च लिङ्गसंख्ययो पूर्वाचार्य निर्देश: । तदीयमेवेदं सूत्रम् । अत एव तदशिष्यं संज्ञाप्रमाणत्वात् इति पाणिनिनाचार्येण खण्डितमिदं सूत्रम् । एवञ्च पञ्चाल: क्षत्रिया: पुंल्लिङ्गा: बहुवचनविषया: । पञ्चालस्यापत्यानि बहूनीति विवक्षायां जनपदशब्दात् क्षत्रियादञ् इति अञ्, तस्य "तद्राजस्य बहुषु तेनैवास्त्रिया"मिति लुक् । पञ्चालानां निवासो जनपद: तस्य निवास इति अण् । तस्य जनपदे लुप् इति लुप् । लुपि च प्रकृतिवत् व्यक्तिवचने । पञ्चाला इति । एवं मगधा:, मत्स्या:, अङ्गा: इति । तथा चानेन सूत्रेण प्रकृतिवद् व्यक्तिवचने अतिदिश्येते । तत्र हरीतकीशब्दो गौरादिङीषन्त: । तत्र हरीतक्या: विकार: फलमित्यर्थे अनुदात्तादेश्चेत्यञ् तस्य हरीतक्यादिभ्यश्चेति लुप् भवति । लुपि च सति लुपि युक्तवद् व्यक्तिवचने इति सूत्रेण प्रकृतिवत् व्यक्ति-र्वचनञ्च प्राप्येते । इष्यते च व्यक्तिरेव प्रकृतिवद् भवेदिति वार्त्तिकमिदं प्रवृत्तं हरीतक्यादिषु व्यक्तिरिति । अनेनैं वार्त्तिकेन लिङ्गमेवातिदिष्टम् । वचन-ञ्चाभिधेयवद् भवति । हरीतक्य: फलानि ।

एतच्च वार्त्तिकं विभाषाच्छन्दसीति मण्डूकप्लुत्यानुवर्त्य व्यवस्थित-विभाषाश्रयणात् हरीतक्य: फलानीत्यादौ व्यक्तेरेव प्रकृतिवद् भावो भविष्यति ॥

27- खलतिकादिषु वचनम्

इदमपि वार्त्तिकं तत्रैव सूत्रे पठितम् । खलतिकस्य पर्वतस्यादूरभवानि वनानि इति विग्रहे अदूरभवश्चेत्यण् तस्य वरणादिभ्यश्चेति लुप् । लुपि सति लुपि युक्तवद् इति सूत्रेण व्यक्तिवचने प्रकृतिवद् प्राप्नुतः । इष्यते च वचनमेव प्रकृतिवद् इति एवञ्च वार्त्तिकं प्रवृत्तं खलतिकादिषु वचनमेव प्रकृतिवद् भवेत् न व्यक्तिः । सा चाभिधेयवद् । इदमपि वार्त्तिकं न कर्त्तव्यं विभाषापदानुवृत्तेः । व्यवस्थितविभाषाश्रयणात् ।

२

28- मनुष्यलुपि प्रतिषेधो वक्तव्यः

इदमपि वार्त्तिकं तत्रैव सूत्रे पठितम् । विशेषणानां चाजातेरित्यस्य सूत्रस्यायमर्थः । लुबर्थस्य यानि विशेषणानि तेषामपि व्यक्तिवचने भवतः जातिं वर्जयित्वा । पञ्चाला रमणीया इति । लुपि युक्तवदित्यनेन प्रकृत्यर्थगतयोर्लिङ्गसंख्ययोर्लुबर्थेऽतिदेशः कृतो न तु लुबन्ते शब्दे इति तत्र वर्तमानानां विशेषणानां सामानाधिकरण्यानुरोधात् सिद्ध एव युक्तवद् भावः सूत्रमिदं जातिप्रतिषेधार्थम् । गोदौ ग्रामः, पञ्चाला जनपदः इति । जनपदग्रामशब्दौ जातिवचनौ । ताभ्यां जातिनिमित्ताभ्यां स एव लुबर्थो जातिरूपेणोच्यते इति तयोरपि व्यक्तिवचने युक्तवत् स्याताम् । ततो अनेन प्रतिषेधः । न च व्यधिकरणानां विध्यर्थं कस्मान्न भवतीदं सूत्रमिति ब्रह्मदत्तस्य पञ्चाला इति । वाच्यम् तत्पुरुषः समानाधिकरण इत्यतः समानाधिकरणानुवृत्तेः । एवञ्चानेन

सूत्रेण विशेषणानामपि युक्तवद्भाव: क्रियते । तथा च मनुष्यलक्षणे लुबर्थे विशेषणानामपि प्राप्नोतीति तन्निषेधार्थं वार्त्तिकमिदं प्रवर्तते - मनुष्यलुपि प्रतिषेधो वक्तव्य: ।

मनुष्यलक्षणे लुबर्थे विशेषणानां युक्तवद्भाव प्रतिषेधो वक्तव्य: चन्चा अभिरूप:, वध्रिका दर्शनीय इति । चन्चेव मनुष्य: चन्चा इवे प्रतिकृतौ इति कन् । तस्य लुम्मनुष्ये इति लुप् ॥ लुपि युक्तवद्भाव: तद्विशेषणभूताभिरूपस्यापि प्राप्नोतीति अनेन निषिध्यते । ततोऽभिधेयवत् लिङ्गवचने भवत: । एवं वध्रिका दर्शनीय इत्यत्रापि बोध्यम् । इदमपि विभाषाग्रहणानुवृत्तिमाश्रित्य व्यवस्थयागतार्थम् ।

वस्तुतस्तु पूर्वाचार्यमतेन लुपियुक्तवद् इति सूत्रं प्रवृत्तम् । अतस्तन्मतेनैव वार्त्तिकान्यपीमानि व्याख्यातव्यानि । भगवान् पाणिनिस्तु उक्त सूत्रम शिष्यमित्याह । तथाहि तदशिष्यं संज्ञाप्रमाणत्वात् (1/2/53) प्रकृतं लुपियुक्तवद्भाववचनं न वक्तव्यं संज्ञाप्रमाणत्वात् । यस्मात् संज्ञाभूतानां पन्चालादिशब्दानां प्रमाणत्वं स्वार्थप्रत्यायनलक्षणं तस्मात् अशिष्यम् । सर्वेषामेव शब्दानामेवं विधं प्रमाणत्वमस्ति । संज्ञाशब्दा हि नानालिङ्गसंख्या: प्रमाणम् । पन्चाला वारणा इति नैते योगशब्दा: जनपदादीनां संज्ञा एता: । तत्र लिङ्गं वचनं च स्वभावसिद्धमेव । न यत्नप्रतिपाद्यम् । यथा आप: दारा: गृहा इत्यादय: शब्दा: । एवन्च युक्तवद्भावस्याशिष्यत्वात् स्वभावत एव तत् तल्लिङ्गवचना: शब्दा: सिद्धा इति सूत्रवद् वार्त्तिकान्यपि नारम्भणीयानीति दिक् ।

29- संख्याप्रयोगे प्रतिषेधो वक्तव्य:

जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम् (1/2/58) इति सूत्रे भाष्ये काशिकायाञ्चेदं वार्त्तिकं पठितम् । जात्याख्यायामेकस्मिन्नर्थे बहुवचनमन्यतरस्यां भवति । जातेराख्या जात्याख्या । आख्यानमाख्या प्रत्यायनम् । तत्रैकस्मिन्नर्थे एकवचनं प्राप्तं बहुत्वमतिदिश्यते । जात्यर्थो बहुवद् वा भवतीति। सम्पन्नो यव: सम्पन्नायवा: इत्याद्युदाहरणम् । उक्तिर्वचनं बहूनामुक्ति: बहुवचनम् । एकस्मिन्नर्थे बहूनामुक्तिरिति सामर्थ्यात् वत्यर्थो गम्यते ।

उक्तञ्च महाभाष्ये "अर्थातिदेशात् सिद्धम्" अर्थातिदेशोऽयम् । नेदं पारिभाषिकस्य वचनस्य ग्रहणम् । किं तर्हि अन्वर्थग्रहणम् उच्यते वचनम् । बहूनामर्थानां वचनं बहुवचनमिति । यावद् ब्रूयात् एकोऽर्थो बहुवद्भवतीति तावद् एकस्मिन् बहुवचनमिति[1]" ।

अनेन जात्याख्यायामेकस्मिन् बहुत्वातिदेशेन तद्विशेषणानामजातिशब्दानामपि सम्पन्नादीनां बहुवचनमुपपद्यते । सम्पन्ना: यवा इति । यदि तु जातिशब्दात् बहुवचनं जात्यादिर्विधीयेत ततो विशेषणेभ्य: सम्पन्नादिभ्यो न स्यात् तेषामजाति शब्दत्वात् ।

जातिग्रहणात् यदृच्छास्थले देवदत्तादौ न बहुत्वम् एकस्मिन् । आख्यां ग्रहणात् काश्यप प्रतिकृत्ति: काश्यप इत्यादौ न बहुवचनम् । अस्य जातिशब्दत्वेऽपि जात्यख्यापकत्वात् प्रतिकृत्यभिधानात् । कश्यपस्यापत्यमित्यर्थे अनृष्यात्वेऽपि जात्यख्यापकत्वात् प्रतिकृत्यभिधानात् ।

1- महाभाष्यम् - पृ0 66.

नन्तर्थे विदादिभ्योऽञ् इति अञ्प्रत्यये तत इवार्थे इवे प्रतिकृतौ इति कन् । तस्य लुम् मनुष्ये इति लुप भवति । जातिशब्देनात्र लोके जातिशब्दत्वेन प्रतीता एव गृह्यन्ते तदर्था अभिहिता: ।

एवञ्चानेन सूत्रेण एकस्मिन् जात्याख्यायां बहुत्वातिदेश: क्रियमाण: एकोव्रीहि: सम्पन्न: सुभिक्षं करोतीत्यादि प्रयोगेऽपि प्राप्नोति । तन्न स्यादिति वार्त्तिकमारभ्यते संख्याप्रयोगे प्रतिषेधो वक्तव्य: । संख्याप्रयोगे सति जात्याख्यायामेकस्मिन् न बहुवद्भावो भवतीत्यर्थ: । एक: सम्पन्नो व्रीहिरिति।

वस्तुतस्तु इदं वार्त्तिकं न कर्त्तव्यम् । एको व्रीहि इत्यत्रैकशब्द: प्रयुज्यमानो जात्यर्थस्यैकत्वमुद्भावयति तच्च बहुत्वेन विरुध्यते । तस्मात् एकत्व-बहुत्वयोर्विरोधात् बहुवद्भावो नेह भविष्यति । अथवा वार्त्तिके वक्तव्य इत्यस्य व्याख्येय इत्यर्थ: । व्याख्यानञ्च अन्यतरस्यामिति व्यवस्थित-विभाषेयम् । तेन संख्याप्रयोगे न भविष्यति । सूत्रप्रत्याख्यानं कुर्वतां भाष्य-काराणामपि नेदं वार्त्तिकं सम्मतम् । तथाहि -

"अशिष्यं वा बहुवद् पृथक्त्वाभिधानात्" अशिष्यो वा बहुवद्-भाव: । किं कारणं पृथक्त्वाभिधानात् । पृथक्त्वेन हि द्रव्याणि अभिधीयन्ते। बहवस्तेऽर्थास्तत्र युक्तं बहुवचनम् । यदा सामान्याभिधानं तदैकवचनं भविष्यतीति।[1]

एवञ्च एको व्रीहिरित्यादौ एकत्वविरोधादेव न बहुत्वं प्राप्ति: । व्रीहिशब्देन सामान्यमेवाभिधीयते ।

---

1- महाभाष्य० - पृ० 67.

30- सविशेषणस्य प्रतिषेधो वक्तव्यः

युष्मदि गुरावेकेषामिति । इदं वचनद्वयं भाष्यवार्त्तिकयोर्न दृश्यते । शिष्टप्रसिद्धेः काशिकायाम् - अस्मदो द्वयोश्चेति सूत्रे पठितम् । अस्मदो योऽर्थस्तस्यैकत्वे द्वित्वे च बहुवचनमन्यतरस्यां भवति । अहं ब्रवीमि, वयं ब्रूमः । आवां ब्रूमवयं ब्रूमः इति ।

ननु अस्मच्छब्दः प्रत्यगात्मनि वर्तते स चैकस्तस्य कथं द्वित्वयोगः । एकत्वमपि तस्यायुक्तं विशेषणमव्यभिचारात् इति चेन्न यदान्यत्रात्मत्वमध्यारोप्यते, अयं मे द्वितीय आत्मेति । यदा वा त्यदादीनि सर्वैर्नित्यम् इति एकशेषः क्रियते तदा सम्भवत्येवानेकार्थत्वम् । यत्र चास्मच्छब्दो बहुवचनान्तः प्रयुज्यते तत्र द्वित्वैकत्वविशेषाध्यवसायः प्रकरणात् सम्भवति ।

एवन्चानेन सूत्रेणास्मच्छब्दस्यार्थस्य बहुत्वमतिदिश्यते । तत्र सविशेषणस्यापि अस्मच्छब्दस्य प्राप्नोतीति तन्निवृत्त्यर्थमिदं वचनं सविशेषणस्येति अहं देवदत्तो ब्रवीमि, अहं गार्ग्यो ब्रवीमीत्यादौ अस्मदर्थस्य देवदत्तादिभिः सविशेषणत्वात् न बहुत्वम् ।

31- युष्मदि गुरावेकेषामिति

युष्मदर्थस्यापि गुरूपत्वे केषाञ्चिन्मते बहुत्वम् । त्वं मे गुरुः यूयं मे गुरवः । शिष्टप्रयोगादिदं अस्मदो द्वयोश्चेति सूत्रेण प्राप्तौ वचनम् ।

वस्तुत इदं वचनद्वयं न कर्त्तव्यं भवति । जात्याख्यायामित्यस्मात् अन्यतरस्यां ग्रहणमनुवर्तते । तस्य व्यवस्थितविभाषात्वमाश्रित्य व्यवस्था कर्त्तव्या । युष्मदि गुरावेकेषामित्यपि न कर्त्तव्यम् । अस्मदो द्वयोश्चेत्यत्र चकारग्रहणात् युष्मदोऽपि संग्रहात् अन्यतरस्यामित्यस्य व्यवस्थितविभाषाश्रयणाच्च सर्वं समन्जसमिति दिक् । सूत्रन्वेदं भाष्ये प्रत्याख्यातं तथाहि - "अयमपि योग: शक्योऽवक्तुम् । कथम् अहं ब्रवीमि, आवां ब्रूवा, वयं ब्रूम इति । इमानि इन्द्रियाणि कदाचित् स्वातन्त्र्येण विवक्षितानि भवन्ति । तद्यथा इदं मे अक्षि सुष्ठु पश्यति । अयं मे कर्ण: सुष्ठु श्रृणोति कदाचित् पारतन्त्र्येण विवक्षितानि भवन्ति अनेन अक्ष्णा सुष्ठु पश्यामि । अनेन कर्णे न सुष्ठु श्रृणामि । तद्यदा स्वातन्त्र्येण विवक्षा तदा बहुवचनं भविष्यति । यदा पारतन्त्र्येण तदैकवचनद्विवचने भविष्यत:[1]" ।

तत्र कैयट: "एकेनेन्द्रिय प्रवृत्तौ चेतरेन्द्रियान्तराणामौदासीन्येन संनिधातृत्वात् कर्तृत्वविवक्षेति वयं पश्याम इति सिद्धम् । शरीर इवेन्द्रियेष्वप्यहंकारोत्पादात् वयमित्यनेनेन्द्रियाणामभिधानात् । पारतन्त्र्यविवक्षायां तु इन्द्रियाणामहं ब्रवीमीत्येकवचनं सिद्धम् । युष्मदस्मदोश्चैकशेषेऽस्मदोऽर्थद्वयाभिधानात् द्विवचनमिति नार्थो योगेन । सम्प्रत्ययप्रामाण्याच्च युष्मदि गुरौ पक्षे बहुवचनं सिद्धम्[2]"।

अनेन सूत्रप्रत्याख्यानेन उक्तवचनद्वयार्थ: स्वयमेव सिध्यति । तस्मात्

---

2- प्रदीप - पृ0 67.

1- महा0 - पृ0 67.

वचनद्वयमपि न कर्त्तव्यम् । एवञ्च सति आचार्याः कथयन्ति डित्थाः कथयन्तीत्यादि प्रयोगा अपि उपपन्ना बोध्या इति ।

32- त्यदादीनां मिथो यद्यद् परं तत्तच्छिष्यते

इदं, त्यदादीनि सर्वैर्नित्यम् (1/2/72) इति सूत्रे काशिकायामुक्तम् । प्रकृते सूत्रे भाष्येऽप्युक्तम् । त्यदादीनि शब्दरूपाणि सर्वैः सह वचने नित्यं शिष्यन्ते त्यदादिभिरन्यैश्चेति सूत्रार्थः । स च देवदत्तश्च तौ । यश्च देवदत्तश्च यौ ।

त्यदादीनां मिथः सहवचने पूर्वोऽपि शिष्येत अव्यवस्था कस्यादिति वचनम् । परत्वञ्चात्र त्यदादिगणपाठापेक्षया बोध्यम् ।

एवञ्च स च यश्च यौ । यश्च कश्च कौ इति सिद्धम् ।

वस्तुतस्तु इदं वचनं न कर्त्तव्यम् । पूर्वशेषः खल्वपि दृश्यते इति भाष्यवचनात् स च यश्च ताविति । महाभाष्ये चेदं सूत्रं प्रत्याख्यातं त्यदादीनां सामान्यार्थत्वात् । वस्तुमात्रं त्यदादिभिः परामृश्यते । तथा च सरूपाणामित्येव सिद्धेः । परस्य शेषत्वार्थमपि नेदं वचनं परस्योभयवाचित्वात् । पूर्वशेषदर्शनाच्च। सामान्यविशेषवाचिनोर्द्वन्द्वाभावात् द्वन्द्वनिवृत्त्यर्थेनापि नेदं सूत्रमावश्यकमिति । तस्मात् सूत्राभावे वार्त्तिकमपीदं न करणीयं भवति ।

।। इति प्रथमाध्यायस्य द्वितीयः पादः ।।

33- भूवादीनां वकारोऽयं मङ्गलार्थः प्रयुज्यते ।
भुवो वार्थं वदन्तीति भ्वर्था वा वादयः स्मृताः ।।

भूवादयो धातवः ॥1/3/1॥ इति सूत्रे भाष्ये काशिकायान्च दृश्यते । भूवादयो धातव इत्यत्र भूरादौ येषां ते इति विग्रहे भ्वादय इति यणा भवन्ति + भवितव्यम् । असंहितया निर्देशे च भू आदय इति निर्देशः स्यात् भूवादय इति निर्देशोऽनुपपन्नः अत आह भूवादीनां वकारोऽयं मङ्गलार्थ इति भूवादीनां संज्ञिनां निर्देशेऽयं निकारो मङ्लार्थः प्रयुज्यते । मङ्गलमर्थः प्रयोजनं यस्येति । अपूर्वलाभमङ्गलम् दध्यादिलाभ इव । अस्य व शब्दस्य अपूर्वस्य लाभायेत्यर्थः । अथवा धर्मो मङ्गलम् । धर्मार्थो वकारः । साधुशब्दप्रयोगे धर्मः । भूवादिशब्दश्च साधुः । किन्च वकारे सति अविकृतो भूशब्दः व्याहृत्यादिस्मारयतीति धर्मो भवति ।

प्रशस्तार्थो वा मङ्गलम् । तदर्थं वकारः । तथाचोक्तम् - मङ्गलादीनि शास्त्राणि मङ्गलमध्यानि मङ्गलान्तानि प्रथन्ते वीरपुरुषाणि भवन्तीति। एवन्च मङ्गलार्थ एव व शब्दः प्रयुज्यते ।

अथवा भूवादय इति निर्देशे नायमादिशब्दस्य प्रयोगः । नापि मङ्गलार्थस्य वकारस्य । अपि तु औरणादिकस्य वादिशब्दस्य प्रयोगः । वदन्तीति वादयः वाचका इत्यर्थः । वदेर्धातोः वसिवपि यजि राजि व्रजि सदि हनि वाशिवादि वारिभ्य इन् इति कर्तरि इन्प्रत्ययः । बाहुल्कात्

अण्यन्तादपि वदु धातोरिन् भवति । तत्र भवनं भूः । क्रियासामान्यभुवं वदन्तीति व्युत्पत्तिः । न च क्रियासामान्यवाचिनामेव अस्ति विद्यति-प्रभृतीनां धातुत्वं स्यात् न तु विशेषवाचिनां पठिप्रभृतीनामिति वाच्यम् । घञ्विधि तुल्यत्वात् । यथा भावे इति सामान्यक्रियायां विधीयमानो घञ् विशेषवाचिभ्योऽपि भवति पाठः पाकः इत्यादौ । तथेहापि भविष्यति । विशेषेष्वपि सामान्यस्य सम्भवात् ।

अथवा भ्वार्था वा वादयः स्मृता इति । भवनं भूः सोऽर्थो येषां ते भ्वार्थाः । एवं भूता वादयो वात्र संज्ञिनः स्मृता इत्यर्थः । वा गति गन्धनयोः वा आदिर्येषां ते वादयः । वा गतिगन्धनयोरित्यारभ्य चुरादिपर्यन्तः। तथा च भ्वादयो वादयः भूप्रभृतय आ "वा गतिगन्धनयोरित्यस्मात् ।

वादयश्च वादयश्च बहुव्रीहितत्पुरुषयोः सह विवक्षायां स्वर-भिन्नानां यस्योत्तर स्वरविधिरिति बहुव्रीहेः शेषः । तो भुवो वादय इति वाच्य-वाचकसम्बन्धे षष्ठीसमासः । अस्मिन् पक्षे पाठविशेषः अर्थश्चेत्युभयं सूत्राक्षरैरेवोपात्तं भवति ।

अथवा, भूश्च वाच भूवौ आदिश्च आदिश्चेति आदी व्यवस्थ-प्रकारवाचिनोरेकशेषः । भू-प्रभृतयो वा सदृशाः धातव इत्यर्थः । प्रकारश्च सादृश्यम् । तच्च क्रियावाचकत्वेनेति ।

सादृश्यञ्च क्रियावचनत्वेनेति बोध्यम् । ननु एवं सति क्रियावचनो धातुरित्येव स्यात् इति चेत् न भ्वादिपाठाभावे हिस्मादि प्रयोगाणाम् आण-

वयतीत्यापि प्रयोगाणान्च निवृत्यर्थमावश्यकत्वात् । यदि चात्र साध्यत्वेन क्रिया विवक्षिता तदा हिरुगित्यादौ प्राप्तिरेव नास्तीति । आणथयतीत्यादौ शिष्टप्रयोगत्वाभावात् न धातुत्वमिति भ्वादिपाठो न कर्त्तव्यः । तथापि भाववचनो धातुरिति पक्षान्तरस्य सूक्त एव सिद्ध्यर्थं गणबहिर्भूता अपि धातवः सन्तीति ज्ञापनार्थन्च पाठो पेक्षितः । तथा च क्रिया वाचकत्वे सति भ्वादिगणपठितत्वं धातुत्वमिति सिद्धम् । वार्त्तिकोक्तन्यासद्वयं न कर्त्तव्यं भवतीति ।

प्रसङ्गात् अत्र विचार्यते का नाम क्रिया इति - क्रियते इति क्रिया इति चेत् घटादौ अतिव्याप्तिः । क्रियते अनया इति चेत् सर्वं क्रियते इति विवक्षायां असम्भवः । ईश्वरवादिमते ईश्वरे अतिव्याप्तिश्च यत्किन्चिद् साधने साधने दण्डे अतिव्याप्तिश्च । साध्यत्वेन प्रतीयमानत्वं क्रियात्वमिति यदि साध्यत्वन्च उत्पाद्यमानत्वं तदपि घटादौ अतिव्याप्ति । यदि च उत्पाद्यमानत्वं क्रियान्तराकांक्षानुत्थापकतावच्छेदकरूपं साध्यत्वलक्षणे विवक्षितम् इति चेत् तदा साध्यत्वप्रवेशात् आत्माश्रयः यदि च व्यापारः क्रिया इति चेत् तर्हि कः व्यापारः । चेष्टा, ईहा वा इति चेत् तदपि प्रश्नतदवस्थे एव । कालान्वितावच्छेदक विलक्षणरूपवत्वमिति चेत् सर्व एव पदार्थ कालिकसम्बन्धेन कालान्वयो इति महानतिप्रसङ्गः । यदि धातुत्वं क्रियात्वमिति चेत् तर्हि किन्नाम् धातुत्वमिति प्रश्ने क्रियात्वम् इत्युत्तरे क्रियात्वं धातुत्वं, धातुत्वं क्रियात्वमिति अन्योन्याश्रयः । यदि च भूषण रीत्या व्यापारो भावना सैवोत्पादन । सैव च क्रिया इत्युच्यते तदापि शब्दान्तरकरणमेव । न किन्चिद् अर्थजातं निर्दिष्टं

लिङ्गसंख्या अन्वय रहितत्वं तदिति चेत् निपातवादशब्देऽपि अतिव्याप्तिः । न चात्र सिद्धत्वेन प्रतीयमानत्वमेव इति वाच्यम् एतत्सर्वं तु शपथैकमात्र निर्णेयमिति अनुगमाभावात् । यदि क्रियान्तराकांक्षित्यादि साध्यत्वलक्षमुच्येत तदा साधत्व लक्षणे क्रियात्वस्य प्रवेशात् आत्माश्रयापत्तेरिति । द्रव्यभिन्नत्वमिति चेत् गुणादौ अतिव्याप्तिः । उत्क्षेपणादिपद प्रतीति विषयत्वमिति चेत् तदपि उत्क्षेपणादीनां या प्रतीतिः सो केन प्रामाणेन हस्तादीनामपि तद विषयत्वापत्तिः । किन्च क्रिया अवयवसमूहे अव्याप्तिः । अवयवे तावत् क्रियात्वं स्यात् केवलम् । तथा च उत्क्षेपणस्य समग्रस्य प्रत्यक्षत्वाभावात् तदविषयत्वाभावात् क्रियात्व न स्यात् ।

एवन्च यावत् द्रव्य व्यतिरेकेण का नाम क्रिया । ननु कारकातिरिक्तो क्रियानोपलभ्यते । वृक्षः प्रचलतीत्यादौ वृक्षात् पृथक् नोपलभ्यते इति अतः कारकमेव क्रिया इत्यपि न । तर्हि द्रव्यमेव गुण इत्यापत्ते । किन्च कारकस्य क्रियात्वे कारकान्तरस्य तत्रान्वयस्य अनापत्तेः । कारकाणां मिथः सम्बन्धा अयोग्यत्वात् इति चेत् ।

उच्यते कारकान्वयितावच्छेदक विलक्षणरूपत्वं क्रियात्वम् । अथवा पाकादिनिष्ठ कार्यता निरूपिता साधारणकारणतावच्छेकत्वं वा क्रियात्वम् । तज्जन्त्वे सति तज्जन्यजनकत्वं वा क्रियात्वम् इति । अत्र तत्पदेन कारकं गृह्यते । अथवा इतरदेश संयोगादीफलनिष्ठ कार्यतानिरूपित कारणतावच्छेदकत्वं क्रियात्वं तादृशी कारणता च इतरगताबाधिता सती क्रियानिष्ठेव इति गृह्यते । कारक-व्यापारो वा क्रियात्वम् इति यथोक्तम् - "गुणभूतैर-

वयवै: समूह क्रमजन्मनाम्, बुद्ध्या प्रकल्पिता भेद: क्रियेत्यभिधीयते ।। क्रमश: उत्पद्यमानानाम् अधिश्रयणादि रूपाणां व्यापाराणां गुणभूतैरवयवै: स्मृत्या संस्कार जन्यधीया पिण्डीवृत समूह एव क्रिया इत्यर्थ: । अत: सिद्धयति व्यापार एव क्रियेति । अतएव महाभाष्यकार - "[2]यत्तर्हि तन्निमीषतं तदिङ्गितं तच्चेष्टितं स शब्द इति नेत्याह क्रिया नाम सा" भूवादय इति सूत्रे अपि आह - "[3]अथ का नाम क्रिया - इहा, कापुनरीहा, चेष्टा, कापुन: चेष्टाव्यापार इति" व्यापारश्च चेतना चेतनोभय साधारणस्पन्दादिरूप: क्रियेति-त्यादे विभिन्न शब्दप्रतिपाद्य न तु यत्नविशेष: । एवं क्रियमाणेपि क्रियाया: लक्षणं न तावत् सुस्थिरं भवति शब्दान्तर कारणमेव केवलं भवति यथा भगवान् भाष्यकार: तत्रैव पष्यपट्टके सर्वथा भवान् शब्दैरेव शब्दानाचष्टे न किञ्चित् अर्थजाते निदर्शयति इत्येवं जातीयका क्रिया इति । अयं भाव: क्रिया व्यापारो वा अवयवश: प्रत्यक्षसिद्ध एव । किन्तु अवयव एव न धातुवाच्य: शब्द-शक्ति स्वभाव्यात् । नहि अधिश्रयणमेव पच्-धातोरर्थ: अपि तु अधश्रयणादारभ्य अध: श्रयण पर्यन्तो यावात् व्यापार सन्तान समुदाय: सर्व एव पच्धात्वर्थ: । ननु च अधिश्रयणे वर्तमानेऽपि पचतीति प्रयोगो भवति दर्वी परिघट्टनमात्रेपि पचतीति भवति तत्र अवयवे अपि पचति प्रयोग सिद्धौ कुत: समूह एव वाक्य इति वाच्यं तत्रापि समूहारोपात् । यथोक्तं भूवादय इति सूत्रे भाष्ये कैयटे यदापि एकस्मिन् क्षणे पचतीति प्रयोगस्तदा तत्र समूहरूपारोपणं शब्दशक्तिस्वभावात्।

---

1- वाक्यपदीये ।

2- महाभाष्ये पस्पशाह्निके ।

3- महाभाष्य - 1/3/1·

एक: क्षणोनैव बधातुवाच्य इति । तथा च अधिश्रयणादौ अवयवा: प्रत्यक्षत्वे अपि तत्र धातुवाच्यत्वं नास्ति यत्र च धातुवाच्य: तत्समुदाय स च न प्रत्यक्ष: इति किं वा नास्त्येव इति । अथ च अधिश्रयणे तदवयवे अपि अनेकेषां हस्ताकुन्चनादि व्यापाराणां सन्तति सम्भवात् तेष्वपि सूक्ष्मा अवयवनां सम्भवात् मुकुत: प्रत्यक्षत्वम् । अवयवस्यापि समुदायस्यापि इति कारकेभ्यो व्यतिरिक्तत्वेन सा द्रष्टुमशक्या साधनस्यैव प्रत्यक्षत्वात् । ननु कुलस्तेषां तत्समूहस्य वा न न प्रत्यक्षत्व इत्सिम्भव इति चेत् उच्यते - क्षणस्य उत्पत्तिविनाशशालित्वात् यस्मिन् क्षणे अधिश्रयणं तस्मिन् क्षणे अध: श्रयणं नास्ति । यस्मिन्च अध:श्रयण तत्र अधिश्रयणं नास्तीति । किन्च अनेकेषां क्षणानां समुदायस्य प्रत्यक्षत्वे तेषां समेषां अधिकरणं किं स्यात् । कश्चन क्षणश्चेत् तर्हि स एव अधिकरणीभूत: क्षण: नाधेय भूतेषु समागत: इति कथं समुदाय प्रत्यक्षत्वम् । समुदाय भिन्न क्षणस्याधारत्वे तु क्षणानां क्षणान्तराधारत्वस्य अननुभूतत्वात् । अत: समुदायस्य अप्रत्यक्षत्वे सिद्धि अवयवेषु शतश: अवयवान्तराणां सम्भवात् तेषामपि अप्रत्यक्षत्वं सिद्धम् । एवन्च धातुवाच्या: क्रियाया: स्वरूपंनिर्धारणं दुष्करम् । यानि पूर्वलक्षणानि उक्तानि तेष्वपि न तत्वं समुदायस्य अभावात् । अयं भाव: - पृथिव्यादीनां प्रत्यक्षत्वेन ज्ञानमिति लक्षणं सुस्थिरं तेषां सुस्थिररूपत्वात् । विभिन्न क्षणभेदेन वैभिन्ने अपि उत्तरक्षणे सो अयमिति प्रत्यभिज्ञानात् अनुगमस्य सत्वात् । किन्तु क्रियायास्तावत् "पूर्वापरा अवयवानां सहावस्थानाभावात् अस्थिरत्वात् कथन्चित् अवयवस्य प्रत्यक्षत्वे अपि तस्य क्रियात्वा भावात् लक्षणं कर्तुं दुष्करं तथाहि कारकान्विताच्छेदकरूपमिति लक्षणं तत्र कारकाणां परस्परान्वययोग्यता क्रियामादाय भवति । देवदत्त: ओदनं पचतीत्यादौ देवदत्तेन सह ओदनेन सह च अन्वयी पच् व्यापार

स व्यापार समुदायरूप एव वाच्य स च असम्भव: अप्रत्यक्षत्वात् अपिण्डो भूतत्वात् । अत: कालान्वयी, कारकान्वयी वा क इति निर्दिष्ट एव न भवति । एकमेव फलादिनिष्ठकार्यतानिरूपित कारणतावच्छेदकलक्षणे अपि कारणता समुदाये एव । स च उक्तरूपेण असम्भव इति क्रियाया अर्थजातत्वरूपेण निदर्शनं न संभवति । अत एव महाभाष्यकारा: परापरज्ञा: किन्चिद् लक्षणम् अदृष्ट्वा शब्देनैव प्राहु: । अन्यथा कालादिवद् अस्यापि लक्षणं कुर्युरिति । यथा का नाम क्रिया, ईहा, का नाम इहा चेष्टा का पुनश्चेष्टा व्यापार इति । अत एव अग्रे आक्षेपरूपेण प्राहु: सर्वथा भवान् शब्दैरेव शब्दान् आचष्टे इति । अत एव अत्र उत्तरे क्रिया नाम इयं अत्यन्ता अपरिदृष्टा, अशक्या पिण्डीभूतानिदर्शयितुं यथा गर्भी निलुठित: सा असौ अनुमान गम्या इति निदर्शयितुं लक्षयितुम् इत्यर्थ: । प्रत्यक्षतो ज्ञातुं वार्थ: । पिण्डीभूता इति यथा परमाणव: पिण्डीभूता उपलभ्यन्ते न केवला एवं पिण्डी भावाभावात् क्रिया न प्रत्यक्षा इति भाव: । इति कैयट: । अत एव हरिणापि बुद्ध्या प्रकल्पिता भेद: क्रमजन्मनां व्यापाराणां समूहक्रिया इत्युक्तम् । अवयवशो अप्रत्यक्षापि क्रिया यद्यपि पिण्डीभूता नास्ति तथापि स्मृत्या अधिश्रयणादारभ्य अध: श्रयणपर्यन्तानां व्यापाराणां क्रमजन्मना परस्परं अभेद: कल्प्यते तेन च य: समूह: कल्पित: बुद्धिकृत: सा क्रिया इति व्यपदिश्यते । तत्राभेद कल्पने फलमेव नियामकमिति बोध्यम् । विक्लितिरूप फलावच्छेदेन यावन्तो व्यापारा अपेक्षिता तेषु बुद्धिकृता भेद: समूह क्रिया इति कथन्चित् लक्षणं सम्पद्यते। स च आख्यातपदवाच्य: अत: कल्पिता अभेद समूहे क्रियात्वव्यपदेश: ।

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

१- १/३/१·

ननु लक्षणप्रमाणाभ्यां वस्तुसिद्धिरिति कृत्वा तादृश क्रियायां किं प्रमाणम् इति चेत् न । सा असौ अनुमानगम्या इति भाष्यकारेणैव अनुमानं प्रमाणं प्रदर्शितं तथाहि भाष्यम् । इह सर्वेषु साधनेषु कदाचिद् पचति इत्येतत् भवति कदाचिन्न भवति । यस्मिन्न संन्निहिते पचति इत्येतत् भवति सा नूनं क्रिया इति अथवा यया देवदत्त इह भूत्वा पाटलिपुत्रे भवति सा नूनं क्रिया इति । अत्रानुमानद्वय प्रदर्शितं तथाहि विमतं कारकेभ्यो भिद्यते बाधकाभावे कारकसत्ताकाले अव्यवहिमाणत्वात् बाधकाभावे यद् - यत्काले न व्यवह्रियते ततो भिद्यते इति । द्वितीयं यथा संयोगज भिन्नः संयोगः क्रियाजन्यः । कारका जन्यत्वे सति जन्यत्वात् इति । देशान्तरप्राप्ति लक्षणेन कार्येण बाधिते। क्रियारूपं कारणम् अनुमीयते इत्यर्थः । तत्र प्रथमानुमाने मृगतृष्णाविषय जलज्ञानवत् पचति इत्येतत् असत्यविषयमेव ज्ञानम् इत्याशंक्य द्वितीयम् अनुमानं प्रवृत्तम् । एवन्च क्रिया फलानुमेया इत्यागतम् । ननु फलक्रिययोः जन्यजनकभावग्रहे सत्येव हि कार्येण कारणानुमानं भवति यथा वह्नि धूमयोः महानसादौ प्रत्यक्षेणजन्यजनक-भावसम्बन्धग्रहे सति धूमाद् बह्नि ज्ञानं जायते इति । तथा अत्रापि फलव्यापरयोः सम्बन्धग्रह आवश्यक इति स एव तु दुष्टः व्यापारस्य अप्रत्यक्षत्वात् इति चेत् न। धातुवाच्यस्य समूहस्य युगपद् अवस्थानां भावात् अप्रत्यक्षत्वेपि एकैकस्य तु क्षणस्य प्रत्यक्षत्वे बुद्धया तान् क्षणान् संकल्प्य पचति इति प्रयुज्यते । ननु तर्हि क्रिया अनुमानगम्या इति भाष्योक्तेः का गति इति चेत् न । यदापि एकस्मिन्क्षणे-पचतीति प्रयोगः तदा तत्र समूहरूपारोपणं शब्दशक्ति स्वभावात् । क्षणो नैव

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

।- ।/3/।·

धातुवाक्य इति । केचित् तु अधिश्रयणादिरपि नैव एकक्षणात्मक: तत्रापि अनेकक्षः अवयवसम्भवात् सोऽपि समूहरूप एव इति तस्यापि प्रत्यक्षत्वं न सम्भवति । अनुमानं तु न पूर्वोक्तरूपम् अपि तु उत्तरदेश संयोगादिफलं कारणजन्यं कार्यत्वात् इति । तच्च कारणं प्रसिद्धातिरेकि इतर बाधा बलात् क्रियारूपमेव सिद्ध्यति इति सर्वं प्रकृतसूत्रे भाष्यप्रदीपोद्योते स्पष्टं इति दिक् ।

ननु वा ग्रहणेन कथं क्रियावाचकत्वस्य लाभो भवति । न च वा सदृशा इत्यर्थे सादृश्यं क्रियावाचकत्वेन इति वाच्यम् । सादृश्यप्रतियोगितावच्छेदक व्यापकधर्मस्यैव सर्वत्र सादृश्य नियामकत्वात् । प्रकृते सादृश्य प्रतियोगिता अव-च्छेदक वात्वस्य तु अव्यय वा शब्देऽपि सत्वात् । क्रियावाचकत्वस्य च तत्रा असत्वेन अव्यापकत्वात् इति चेत् न परस्पर साहचर्येण क्रियावाचकत्वरूप लाभात् यथा रामलक्ष्मणौ इत्यत्र तथाहि वा शब्दो असत्ववाची उपलभ्यते तत्साहचर्यात् भू-शब्दोऽपि असत्ववाची गृह्यते । असत्ववाची भू-शब्दश्च क्रियावाचक एवेति तत्साहचर्यात् वा शब्दोऽपि क्रियावाचक एवेति क्रियावाचकत्वस्य लाभात् । स च अर्थ: व्यन्जनावृत्त्या इति । नन्वेवमपि अन्योन्याश्रय: इति चेत् न उभयो: युगपदेव साहचर्याश्रयणात् ।

ननु भूवादय इत्यत्र वा शब्देन अव्यय एव कथं न गृह्यते वा इत्य-व्यय: क्रियावाची इति कृत्वा वा गतिगन्धयोरिति वा शब्देन भेदघटितं सादृश्यमपि सुतरां सिद्ध्यति इति । भू-प्रभृतय: वा सदृशा इत्यर्थेऽपि नास्ति क्षति: अन्यथा पूर्वोक्त व्याख्याने वा शब्दस्य वा सादृश्यत्वाभावात् धातुत्वं न स्यात् इति चेत् न विकल्पार्थक शब्दस्य न साध्यत्वेन प्रतीयमानरूप क्रिया वाचक-

त्वम् । अतः सादृश्यमेव न स्यात् कथन्चिद् ग्रहणे अपि साध्यत्वं दुर्लभं स्यात् अपि च साध्यत्वेन प्रतीयमानरूपक्रियो वाचकानां भ्वादीनां धातुत्वमेव संकटापन्नं स्यात् इति तादृशं व्याख्यानं नादरणीयं वा इत्यत्र सादृश्यन्च प्रयोगभेदेन निर्वाह्यम् इति दिक् ।

## 34- प्रतिषेधे हसादीनामुपसंख्यानम्

इदं वार्त्तिकं न गति हिंसार्थेभ्य (1/3/15) इति सूत्रे भाष्ये काशिकायान्च पठितम् । कर्तरि कर्मव्यतिहारे (1/3/14) इति सूत्रेण क्रियाविनिमये वाच्ये च तद्वाचकात् धातोरात्मने पदं भवति । व्यति लुनीते व्यति कुरुते इत्यादौ । तादृशात्मने पदविधेः न गतिहिंसार्थेभ्य इति सूत्रेण निषेधः क्रियते । गत्यर्थेभ्यो हिंसार्थेभ्यश्च धातुभ्यः कर्मव्यतिहारे आत्मने पदं न भवति । व्यतिगच्छन्ति व्यतिसर्पन्ति, व्यतिहिंसन्ति व्यतिघ्नन्ति ।

तत्र आत्मने पद निषेधकसूत्रे गतिहिंसार्थकधातुभ्य एव निषेधः न त्वन्येभ्य इति हसादिभ्यः कर्मव्यतिहारे कर्तरिकर्मव्यतिहारे इति सूत्रेणात्मने पदं प्राप्तम् । तन्निवृत्त्यर्थं वार्त्तिकमिदं प्रवर्त्तते प्रतिषेधे इति । असु आदौ येषां ते हसादयः । हसशब्देन शब्दक्रियार्थधातुर्गृह्यते । आदिशब्दो न व्यवस्थावाची अपि तु प्रकारवाची । एवन्च हसिप्रकाराणां शब्दक्रियाणां धातूनां ग्रहणम् । अन्यथा हसादिशब्देन हसेरुत्तरं धातुपाठपठितानां ग्रहणं स्यात् । तेषां धातूनां हसिप्रकाराणामुपसंख्यानं कर्त्तव्यम् । संख्यायते संक्षिप्य प्रतिपाद्यतेऽनेनार्थ इति संख्यानं सूत्रम् । तस्योपोच्चारितमुपसंख्यानसूत्रम् । समीपे

इदमपि सूत्रे पठितव्यमित्यर्थः । अथवा उपसंख्यानशब्दस्य प्रतिपादनमर्थः । अनेकार्थत्वात् धातूनाम् । तथा च हसिप्रकाराणां शब्दक्रियाणां धातूनामुपसंख्याने आत्मने पदप्रतिषेधः सिध्यति । व्यतिहसन्ति व्यतिजल्पन्ति व्यतिपठन्ति इत्यद्युदाहरणानि ।

वस्तुतस्तु इदमपि वार्त्तिकं न कर्त्तव्यम् । उपसंख्यानं प्रतिपादनम्। तच्चेत्थं भविष्यति । तथाहि न गतिहिंसार्थेभ्य इति योगविभागः क्रियते । नेति एको योगः । पूर्वेण प्राप्तात्मने पदं निषिध्यते । सर्वेषां गतिहिंसा-हसादीनां प्रतिषेधः सिद्धः । ततः गतिहिंसार्थेभ्यः इति द्वितीयो योगः । तत्र नेति वर्तते । अयं योगः नेति योगस्यासर्वविषयत्वज्ञापनार्थम् । तेन नेति योगेन हसादीनामेव प्रतिषेधो भविष्यति नान्येषाम् ।

न्यासग्रन्थे एवंरूपेण वार्त्तिकं प्रत्याख्यातम् । भाष्ये पुनः नायं योगविभागो दृश्यते । न च वार्त्तिकं प्रत्याख्यातम् । पदमञ्जरीकारेणापि वार्त्तिकवचनं स्वीकृतम् ।

वस्तुतो योगविभागकरणं तथाविधार्थकल्पनञ्च गौरवग्रस्तं तदपेक्षया वचनमेव कर्त्तव्यम् ।

किञ्च कर्तरिकर्मव्यतिहारे इति सामान्ये सूत्रमात्मने पदंविधायक-मुक्त्वा पुनर्नेति सूत्रमारचयत आचार्यस्याप्रामाणिकतापत्तिः । स्वयमेव विधाय तन्निषेधात् एकयोगे चोत्सर्गापवादव्यवस्था सिध्यति ।

किञ्च योगविभागे नेति योगेन गतिहिंसार्थकधातुभ्योऽपि निषेधः

सिद्ध इति पुनरारभ्यमाणो द्वितीयो योगः नियमार्थो भविष्यति असर्वविषयत्व-ज्ञापनार्थो वा इति विनिगमकप्रमाणं नास्ति । नियमपक्षे च हसादीनां प्रतिषेधो न सिध्यति । गतिहिंसादिना सह हसादिनां सजातीयत्वाभावात् धातुत्वादिना साजात्ये अन्येषामपि प्रतिषेधः स्यात् । नियमस्य सजातीयविषयत्वात् ।

ज्ञापकपक्षेऽपि प्रत्यासत्त्या गतिहिंसार्थकभ्योऽन्यत्र अविषयत्वमेव ज्ञापितं स्यात् हसादीनां प्रतिषेधो न सिध्येत् । अथ योगविभागस्येष्टसिध्यर्थम्। सामान्येन । सर्वविषयत्वज्ञापनेऽपि व्यवस्थाभावात् अतिप्रसक्तिः स्यात् । प्रयोगानुसारिव्यवस्थापने तु विधिनिषेधयोरुभयोरपि वैयर्थ्यं स्यात् । तस्मात् वार्त्तिकारम्भ एव युक्तः ।

यदि च तथाविधयोगविभागेन वार्त्तिकार्थः उपसंह्रियते तदा वार्त्तिकं न कर्त्तव्यमिति न्यासकाराशयः । एवन्च हरतेरप्रतिषेध इति वार्त्तिकार्थोऽपि संगृहीतो भवति ।

## 35- हरतेरप्रतिषेधः

न गतिहिंसार्थेभ्य इति सूत्रेण हिंसार्थत्वात् हरतेरात्मने पदनिषेधः प्राप्तः । अनेन चाप्रतिषेधः क्रियते । तथा च सम्प्रहरन्ते राजान इत्यादौ न गतिहिंसार्थेभ्य इति निषेधो न प्रवर्तते । ननु कथं "संप्रहरिष्यन्तौ दृष्ट्वा कर्णधसन्जयौ इत्यत्र नात्मने पदमिति चेन्न तत्र हिंसार्थो विवक्षणात् । संप्रहरिष्य-

न्ताविति योत्स्यमानावित्यर्थः ।

भाष्ये च हरिवह्योरप्रतिषेध इति वार्त्तिकस्वरूपम् । तत्र वहेर्गत्यर्थकत्वात् न गतिहिंसेत्यादिना प्रतिषेधः प्राप्तः । तस्य प्रतिप्रसवः क्रियते ।

भाष्यकारैश्च वहेरप्रतिषेधोऽन्यथा साधितः । तथाहि देशान्तरप्रापणं हि वहेरर्थः भारं वहतीति । न गत्यर्थः तस्य नान्तरीयकत्वात् । तस्मात् तस्याप्रतिषेधः । संविवहन्ते गर्गैरिति । कन्याप्रापणमुखेन गर्गैः सम्बध्यन्त इत्यर्थः ।

इदमपि वार्त्तिकं न कर्त्तव्यम् । वेति गतिहिंसार्थेभ्य इति च योगविभागात् सिद्धेः । नेति मन्तिनि आत्मने पदनिषेधार्थकयोगस्यासर्वविषयत्वज्ञापकार्थं द्वितीयो योग आश्रितः । तथा च निषेधोऽसर्वविषयइ इति हरतेरपि अप्रतिषेधः सिध्यति ।

36- परस्परोपपदाच्चेति वक्तव्यम्

इदन्च वार्त्तिकम् इतरेतरान्योपपदाच्च {1/3/16} इति सूत्रे स्थितम् । इतरेतरः अन्योन्यः इत्येवमुपपदाद्धातोः कर्मव्यतिहारे आत्मने पदं न भवतीत्यर्थः । इतरेतरस्य व्यतिलुनन्ति, अन्योन्यस्य व्यतिलुनन्ति । तत्र च वार्त्तिकं न्यूनतादोषपरिहारार्थम् । परस्परशब्द उपपदं यस्य धातोस्तस्मादपि आत्मने पदप्रतिषेधो वक्तव्यः । परस्परस्य व्यतिलुनन्ति ।

अत्रापि वार्त्तिकमिदं न कर्त्तव्यम् । इतरेतरान्योन्योपददाच्चेति सूत्रे चकारग्रहणात् । चकारोऽत्रानुक्त समुच्चयार्थः । तथा च परस्परोपपदात् धातोरपि प्रतिषेधो गम्यते । न च तर्हि अन्योन्यग्रहणमपि सूत्रे न कर्त्तव्यमिति वाच्यम् आचार्या कृत्वा न निवर्तयन्तीति न्यायात् ।

37- आस्य विहरणसमानक्रियादपि प्रतिषेधो वक्तव्यः

इदं च वार्त्तिकम् "आङ्ो दोऽनास्य विहरणे (1/3/20) इति सूत्रे पठितम् । आङ्पूर्वकात् ददातेरनास्य विहरणे वर्तमानादात्मनेपदं भवति । विद्यामादत्ते । अनास्य विहरणे इति किम् अस्य व्याददाति । अत्र नात्मने पदमास्यविहरणात् ।

अत्र ददातेरेवास्य विहरणे वृत्तिः सम्भवति नान्येषां दारूपाणां धातूनाम् । अतस्तेषां न ग्रहणम् । तत्र भाष्ये "आङो दोऽव्यसनक्रियस्य" इति वार्त्तिकम् । आङो दोऽव्यसनक्रियस्येति वक्तव्यम् इहापि यथा स्यात् विपादिकां व्याददाति, कूलं व्याददाति । सूत्रन्यासं परित्यज्यैवं विधो न्यासः कर्त्तव्य इति भावः । तत्र व्यसनं विभागः विकासनमित्यर्थः । केवले विहरणशब्द उपादीयमानः पादविहरणं गमयतीति सूत्रे आस्यग्रहणं कृतम् । केवलो व्यसनशब्दो दुःखादिषु वर्तते इति वार्त्तिके क्रियाग्रहणं कृतम् । व्यसनं विपदिभ्रंशौ दोषे कामजकोपजे इति कोशः । क्रियाग्रहणे तु व्यसनरूप क्रियावाचकस्यैव ग्रहणात् विभागार्थकत्व लाभः । स्वरूपतो दुःखादिकं न क्रिया नापि धातुवाच्यम् । विपादिकां व्याददातीत्यस्य, विपादिकावृत्तिविभागानुकूलो

व्यापार एककर्तृक इति बोध: । विपादिका पादस्फोट: ।

एवञ्च सति तादृश न्यासेनैव सिद्धे स एव कर्त्तव्य: न तु सूत्रन्यास:। भाष्ये पुनरस्य वार्त्तिककारन्यासार्थस्य सूत्रादेव संग्रहात् खण्डनं कृतम् । तथाहि "तत्तर्हि वक्तव्यम् । न वक्तव्यम् । इह आङो दोऽनास्य इतीयता सिद्धम् । सोऽयमेवं सिद्धे सति यद् विहरणग्रहणं करोति तस्यैतत् प्रयोजनम् । आस्यविहरणसमानक्रियादपि यथा स्यात् । यथाजातीयका चास्य विहरणक्रिया तथाजातीयकात्रापी"ति ।

अयं भाव: - सूत्रे विहरणग्रहणं न कर्त्तव्यम् । आङो दोऽनास्येत्येतद्वक्तव्यम् । तत्र आस्ये दानो वृत्तिर्न सम्भवतीति सामर्थ्यात् आस्यसमवायिन्यां क्रियायां वृत्तिर्विज्ञास्यते । तत्रैव प्रतिषेध: । तत् किं विहरणग्रहणेन । न च स्वं मुखमादत्ते देवदत्त इत्यत्रापि प्रतिषेध: स्यात् इति वाच्यम् । दोषाभावात् तथाहि याहि आस्यविषयैव क्रिया तस्यां वर्तमानो ददातिरास्य वृत्तिर्भवति विहरणमेवास्य विषयम् । ग्रहणान्तु आस्यविषयं ग्रहीतृविषयञ्च । अनास्येति पर्युदास: । आस्यानास्यसमुदायश्चास्यादन्य इति विधिरेव भविष्यति । तदेवं विहरणमन्तरेणापि सिद्धे यद्विहरणग्रहणं करोति तस्यैतत् प्रयोजनम् । आस्यविहरणसमानक्रियादपि प्रतिषेधो यथा स्यात् । विहरणग्रहणं विहरणविशेषोपलक्षार्थं तेनासत्यपि आस्ये तादृशे विहरणे भविष्यति यादृशमास्य विहरणमास्य व्यादानमिति । विहरणविशेषोविकासनम् । तेन विपादिकां व्याददातीत्यादौ आत्मने पदप्रतिषेध: सिध्यति । वार्त्तिकं न कर्त्तव्यम् ।

अथवा पूर्वसूत्रात् इतरेतरान्योन्योपपदाच्चेत्यस्मात् चकारोऽत्रानु-

वर्त्तते । तेनानुक्तसमुच्चायकेन आस्यविहरणसमानक्रियादपि प्रतिषेधः सिध्यति । नेदं वार्त्तिकं कर्त्तव्यम् ।

38- स्वाङ्गकर्मकाच्चेति वक्तव्यम्

इदमपि वार्त्तिकमत्रैव सूत्रे पठितम् । स्वमङ्गं स्वाङ्गम् । नात्र अद्रवमूर्त्तिमल्लक्षणं स्वाङ्गं विवक्षितम् । स्वमङ्गं स्वाङ्गं तत्कर्म यस्य स स्वाङ्गकर्मकः तस्मात् प्रतिषेधो भवतीत्यर्थः । व्याददते पिपीलिका पतङ्गस्य मुखम् । इह परसम्बन्धिना मुखेन सकर्मकत्वात् भवत्येवात्मने पदम् ।

एतदपि वार्त्तिकं न्यायसिद्धमेव । न कर्त्तव्यं भवति । तथाहि कर्तरिकर्मव्यतिहारे इत्यस्मात् कर्तरीति वर्त्तते । आस्यमिति च सम्बन्धिशब्दः। तत्रैवं विज्ञायते यस्मिन् कर्त्तर्येवात्मने पदं भवति तस्य चेदास्यम् इति तेन परकीयास्यग्रहणे विधिरेव भवति न प्रतिषेधः ।

आङ इति योगविभागः कर्त्तव्यः । आगमयस्वतावन्माणवकम् । आनुते भृगालः । आपृच्छते गुरून् इत्यादिप्रयोगाः सिद्धाः । एतेन "आगमेः क्षमायाम्" आङिनुप्रच्छ्योरिति च वार्त्तिकद्वयं न कर्त्तव्यम् इति दिक् ।

39- समोऽकूजने इति वक्तव्यम्

क्रीडोऽनुसंपरिभ्यश्च (1/3/21) इति सूत्रे पठितमिदम् ।

अनुसंपरिपूर्वात् आङ्‌पूर्वाच्च क्रीडो धातोरात्मने पदं भवति अनुक्रीडते संक्रीडते आक्रीडते इति प्रयोगाः । तत्र संपूर्वकात् धातोः क्रीडो अकूजने एवात्मने पदमनेनवार्त्तिके न भवति । कूजने तु नैवात्मने पदं भवति । संक्रीडन्ति शकटानि इत्यादौ । एतच्च वार्त्तिकं केवलमर्थविशेषप्रदर्शनपरम् । सूत्रे चकारग्रहणादेव सिद्धेः।

## 40- आगमेः क्षमायामात्मनेपदं वक्तव्यम्

इदमपि वार्त्तिकं तत्रैव सूत्रे आत्मने पदविधानार्थं पठितम् । इदं न्यूनतादोषपरिहारार्थम् । आङ्‌पूर्वस्य गमे पर्यन्तस्य ग्रहणम् । क्षमा उपेक्षा, कालकरणमिति यावत् । प्रतीक्षणमित्यर्थः । आङ्‌पूर्वकात् गमेरात्मने पदं वक्तव्यम् । आगमयस्व तावन्माणवकमित्याद्युदाहरणम् । आगमयस्वेत्यजात्मने पदं भवति । सहस्व कञ्चित् कालं मा त्वरिष्ठा इत्यर्थः । जनीजृष्क्नसुरञ्जोऽमन्ताश्चेति मित्संज्ञायाम् । मितां ह्रस्व इति ह्रस्वत्वम् । लोण्मध्यमपुरुषैकवचनम् । थासः से, सवाभ्यां वामौ इति वादेशः ।

एतदपि चकारग्रहणादेव गतार्थम् । आङो दोऽनास्येति आङ इति योगविभागात् आत्मने पदं सिध्यति । वार्त्तिकं तु तद् व्याख्यानरूपमिति ।

## 41- शिक्षेर्जिज्ञासायाम्

शिक्षिरिति शकिः सन्नन्तो गृह्यते । न तु शिक्षविद्योपादाने इति तस्यानुदात्तेत्त्वादेव सिद्धेः । ज्ञातुमिच्छाजिज्ञासा तदर्थवाचकत्वे इति भावः । इदमपि वार्त्तिकं क्रीडोऽनुसम्परिभ्यश्चेति सूत्रे पठितम् । विद्यासु शिक्षते

इत्याद्युदाहरणम् । विद्यां जिज्ञासितुं घटते इत्यर्थः । सिषते इति शके: सन् सनि मीमाघुरभलम इत्यादिना इस् । स्कोरिति स लोपः । अत्र लोपोऽभ्यासस्येति अभ्यासलोपः । लटिरूपम् ।

एतदपि वार्त्तिकम् अनुक्तसमुच्चयार्थकसूत्रघटकीभूत चकारस्य व्याख्यानरूपमेव ।

42- आशिषिनाथः

एतदपि तत्रैव सूत्रे पठितम् । नाथृधातुरनुदात्तेत् तथा च तस्मादेवात्मने पदे सिद्धे नियमार्थं वचनम् । आशिष्येव यथास्यात् यान्वादिषु माभूत् । सर्पिषो नाथते । मधुनो नाथते एवम् उदाहरणानि । सर्पिष इत्यादौ आशिषि नाथ इति कर्मणि षष्ठी ।

एतदपि चकारसाध्यव्याख्यानरूपमेव ।

43- हरतेर्गति ताच्छील्ये

एतदपि तत्रैव पठितम् । गति ताच्छील्येऽर्थे हृधातोरात्मने पदं भवति । गतिः प्रकारः । गतेस्ताच्छील्यं गति ताच्छील्यम् । तस्मिन् गम्ये इति भावः । ताच्छील्यं तत्स्वभावता । पैतृकमश्वा अनुहरन्ते । कमातृकं गावोऽनुहरन्ते इत्याद्युदाहरणम् । पितुरागतं मातुरागतं प्रकारं सततमनुशीलयन्ति इत्यर्थः । इदमपि चकारव्याख्यानरूपमेव । सूत्रसिद्धस्याप्यर्थस्य वार्त्तिकेन विशेषतो

निदर्शनं क्रियते ।

44- किरतेर्हर्षजीविकाकुलायकरणेष्विति वक्तव्यम्

एतच्चापि तत्रैव सूत्रे पठितम् । कृ विक्षेपे इत्यस्मात् धातोर्हर्षादिष्वर्थेषु आत्मने पदं भवति । धतोर्विक्षेप एवार्थः हर्षादयश्च तद्विषयभूताः । अपस्किरते वृषभो दृष्टः । अपाच्च तुष्पाच्छकुनिष्वालेखने इति सुट् । जीविकायाम् अपस्किरते कुक्कुटो भक्षार्थी । कुलायकरणे अपस्किरते श्वाश्रयार्थी । हर्षादिष्वेवार्थेषु भवति । तेनेह न अपकिरति कुसुमम् ।

एतदपि अनुक्तसमुच्चायकचकारव्याख्यानभूतमेव ।

45- आङि नुप्रच्छ्योरुपसंख्यानम्

एतदपि तत्रैव सूत्रे पठितम् । आङ्पूर्वकात् नु धातोः प्रच्छ्धातोश्चात्मने पदं विधीयते । आनुते शृगालः उत्कण्ठापूर्वकं शब्दं करोतीत्यर्थः । णु स्तुतौ अदादिः । आपृच्छते गुरूम् । प्रच्छ्ज्ञीप्सायाम् तुदादिः । ग्रहिज्येति सम्प्रसारणम् । एतदपि पूर्ववत् चकारव्याख्यानभूतमेव । एतच्च आङो दोत्यत्र आङ इति योविभागात् सिद्धम् ।

46- शप उपलम्भन इति वक्तव्यम्

एतदपि तत्रैव पठितम् । शप्धातोरूपलम्भनेऽर्थे आत्मने पदं वक्तव्यम् ।

वाचा शरीरस्पर्शनमुपलम्भः शपथकुर्वाणः देवदत्तस्य शपत इति प्रथ शपथा क्रोष: । तथाहि देवदत्तस्य शरीरं स्पृशामीति शपथं कुर्वाणः देवदत्ताय शपत इति प्रयुज्यते । देवदत्ताय शपते इत्याद्युदाहरणम् ।

एतदपि चकारस्यैव व्याख्यानभूतमिति बोध्यम् ।

47- <u>आङः स्थः प्रतिज्ञान इति वक्तव्यम्</u>

समवप्रविभ्यः स्थ (1/3/22) इति सूत्रे महाभाष्ये काशिकायान्च इदं वार्त्तिकं पठितम् । प्रतिज्ञानेऽर्थे आङुपसर्गकात् स्थाधातोरात्मने पदं वक्तव्यमिति वार्त्तिकार्थः । प्रतिज्ञानं प्रतिज्ञा । अस्ति सकारमात्रमातिष्ठते । आगमौ गुणवृद्धी आतिष्ठते । विकारौ गुणवृद्धी आतिष्ठते । इत्याद्युदाहरणानि आपिशलिराचार्यः सकारमात्रमस्तिं धातुं प्रतिजानीते आतिष्ठते इत्यस्य प्रतिजानीते इत्यर्थः । आपिशलव्याकरणे गणपाठे न पाणिनीयधातुपाठ इव अस भुवि इति पाठः अपि तु स भुवि इति । अस्ति आसीत् इत्यादौ तु स आचार्य अडाटावागमौ प्रतिजानीते एतदपि वार्तिकम् आङो योऽनास्येतित्यत्र आङ इति योगविभागात् सिद्धम् । लक्ष्यानुसारात् व्याख्यानात् ।

यदि तादृश योगविभागे नास्ति प्रमाणं तदा वार्त्तिकभनन्यमास्थेयमेव । सिद्धान्तकौद्यां शब्दं नित्यमातिष्ठते इत्युदाहरणं प्रदर्शितम् ।

48- उद ईहायामिति वक्तव्यम्

उदोऽनूर्ध्वकर्मणि {1/3/14} इति सूत्रे पठितम् ।

उत्पूर्वात् तिष्ठतेरनूर्ध्व कर्मणि वर्तमानादात्मने पदं भवति । कर्मशब्दः क्रियावाची । अनूर्ध्वकर्मविशिष्टात् क्रियावचनात् तिष्ठतेरात्मने पदं भवतीति सूत्रार्थः । गेहे उत्तिष्ठते कुटुम्बे उत्तिष्ठते । तदर्थं यतते इति भावः ।

तत्र अनूर्ध्वकर्मणि ईहारूपे एवात्मने पदं भवतीति वार्त्तिकाभिप्रायः । तेनेह न भवति उत्तिष्ठतिसेना । शतमुत्तिष्ठति । उत्तिष्ठति जायते उत्पद्यते। ईहा चात्र विशिष्टाचेष्टा कायपरिस्पन्दादिका गृह्यते न तु इच्छामात्रम् ।

अत्रापि वक्तव्यमित्यस्य व्याख्येयमित्यर्थः । व्याख्यानन्चेत्थम् । अन्तरेणापि कर्मग्रहणं क्रियामात्रवृत्तित्वे तिष्ठतेः सिद्धे यत् कर्मग्रहणमाचार्यः करोति तज्ज्ञापयति कर्मशब्देन लोकप्रसिद्धपरिस्पन्दनात्मकं क्रिया गृह्यते । लोके च घटनभ्रमणादिकां क्रियां कुर्वाणः सक्रिय इत्युच्यते स्थानासनादिकां तु अपरिस्पन्दात्मिकां कुर्वाणोऽपि निष्क्रिय इत्युच्यते । तस्मात् कर्मग्रहणादेव ईहायामेवात्मने पदमिदं सिध्यति । वार्त्तिकार्थः गतार्थः सूत्रेणैव । ईहा ग्रहणमनूर्ध्वकर्मणो विशेषणं नापवादः ।

49- उपाद्देव पूजा-संगतिकरण-मित्रकरण पथिष्विति वाच्यम्

उपान्मन्त्रकरणे इति {1/3/25} इति सूत्रे पठितम् । इदन्वामन्त्र-

करणार्थमारब्धम् । मन्त्रः करणं साधकतमं यस्य धात्वर्थस्य स तथोक्तः तस्मिन् विद्यमानात् तिष्ठते रूपपूर्वकात् आत्मने पदं भवतीति सूत्रार्थः । ऐन्द्र्या गार्हपत्यमुपतिष्ठते । देवपूजादिष्वर्थेषु उपपूर्वात् तिष्ठतेरात्मने पदं भवतीति वार्त्तिकार्थः । देवपूजायाम् - आदित्यमुपतिष्ठते । संगतिकरणे रथिकानुपतिष्ठते । मित्रकरणे अश्वारोहानुपतिष्ठते । महामात्रानुपतिष्ठते । पथिषु - अयं पन्थाः स्रुघ्नमुपतिष्ठते ।

संगतिकरणमुपश्लेषः यथा गङ्गा-यमुनामुपतिष्ठते मित्रकरणं तु विनाप्युपश्लेषेण मैत्री-सम्बन्धः ।

इदं वार्त्तिकं न कर्त्तव्यम्, तथाहि उत्तरसूत्रे अकर्मकाच्च इत्यत्र उपादिति वर्तते । तत्र चकार पठितः । एवन्च चकारस्यानुक्तसमुच्चायकत्वात् पूर्वोक्तेष्वपि अर्थेषु उपपूर्वात् तिष्ठतेरात्मने पदं भविष्यति । तादृशानुक्तप्रदर्शनार्थं वार्त्तिकम् ।

50- वा लिप्सायामिति वक्तव्यम्

अत्रैव सूत्रे इदमपि पठितम् । लब्धुमिच्छा लिप्सा । तस्यां गम्यमानायां उपपूर्वात् तिष्ठतेरात्मने पदं वा भवति । भिक्षुको ब्राह्मणकुलमुपतिष्ठेत, उपतिष्ठतीति वा । लिप्सया हेतुभूतया ब्राह्मणकुलमुपगच्छतीत्यर्थः ।

51- स्वाङ्गकर्मकाच्चेति वक्तव्यम्

उद्विभ्यां तपः (1/3/27) इति सूत्रे पठितम् । उद्वि इत्येवं पूर्वात् तपतेरकर्मकक्रियावचनात् आत्मने पदं भवतीति सूत्रार्थः । उत्तपते वितपते । दीप्यते इत्यर्थः । एवन्च सूत्रेणाप्राप्तत्वात् स्वाङ्गकर्मकात् आत्मने पद विधानार्थं वार्त्तिकमिदम् । स्वाङ्गकर्म यस्य तस्मात् धातोरात्मने पदमित्यर्थः । उत्तपते पाणिं वितपते पृष्टमित्यादि प्रयोगाः ।

अत्रापि वक्तव्यमित्यस्य व्याख्येयमित्यर्थः । व्याख्यानन्च पूर्वसूत्रात् चकारोऽत्रानुवर्तते तस्यानुक्तसमुच्चयार्थकत्वात् स्वाङ्गकर्मकादपि सिद्धं भवति । स्वाङ्गमत्र नाद्रवादिरूपं पारिभाषिकमपि तु आत्मीमङ्गमित्यर्थः ।

52- स्वाङ्गकर्मकाच्चेति वक्तव्यम्

इदन्च आङो यमहनः (1/3/28) इति सूत्रे पठितं यम् उपरमे हन हिंसागत्योरिति पठ्यते । ताभ्यां धातुभ्यां अकर्मकक्रियावचनाभ्यामाङ्-पूर्वाभ्यामात्मने पदं भवति।आयच्छते । आहते ।

तत्र स्वाङ्गकर्मकादप्राप्तौ वचनम् । आयच्छते पाणिम् आहते शिर इति । ननु कथमाजघ्ने विषमविलोचनस्य वक्षः इति चेन्न तत्रापि गाण्डीवी विषमविलोचनमेत्य स्ववक्ष एवाजघ्ने । मल्लोऽप्युत्साहवर्धनाय स्ववक्ष आस्फालयति ।

एतदपि पूर्ववत् चकारबलादेव सिद्धमिति दिक् ।

53- दृशेश्चेति वक्तव्यम्

समः समो गम्यृच्छिप्रच्छिस्वरत्यर्त्तिश्रुविदिभ्यः ॥1/3/29॥ इति सूत्रे पठितम् । तेन सूत्रेण संपूर्वेभ्यो गमि ऋच्छि प्रच्छि स्वरत्यर्त्तिश्रुविदीत्येतेभ्यो धातुभ्योऽकर्मकेभ्य आत्मने पदं भवति । संगच्छते संपृच्छते संस्वरते, समरन्त । इत्यादिप्रयोगाः ।

तत्र सूत्रेण दृशेरप्राप्तौ वार्त्तिकमिदमारभ्यते । सम्पूर्वात् दृशेरात्मने पदं वक्तव्यम् अकर्मकादित्येव सम्पश्यते । सकर्मकात्तु न भवति ग्रामं सम्पश्यति । एतदपि वार्त्तिकं पूर्वोक्त प्रकारेण अनुक्तसमुच्चायकचकारवतेन सिद्धमिति न कर्त्तव्यम् ।

54- उपसर्गादस्यत्यत्यूह्योर्वा वचनम्

निसमुपविभ्यो ह्वः ॥1/3/30॥ इति सूत्रे पठितम् । निसमुपवि-पूर्वकात् ह्वयतेर्धातोरात्मने पदं भवति । अत्र सूत्रे अकर्मकादिति नानुवर्तते । यद्यपि ह्वेयोञ्त्वात् सिद्धमात्मने पदं तथापि अकर्तृगेऽपि फले तद्विधानार्थ-मारभ्यः । निह्वयते, संह्वयते उपह्वयते विह्वयते इति प्रयोगाः । तत्र सूत्रेण वार्त्तिकार्थस्यासिद्धत्वात् आरम्भः । उपसर्गपूर्वकात् अस्यते ऊहेश्च विकल्पेनात्मने पदं भवति । निरस्यति निरस्यते, समूहति समूहते । अस्यतीति श्यनानिर्देशात् असु क्षेपणे इति दैवादिकस्य ग्रहणम् । इदपि पूर्ववत् सिद्धम् ।

55- ज्योतिरुद्गमन इति वक्तव्यम्

आङ• उद्गमने ॥1/3/40॥ इति सूत्रे भाष्ये काशिकायान्च इदं पठितम् । आङ्•पूर्वात् क्रमते उद्गमने वर्तमानात् आत्मने पदं भवतीति सूत्रार्थः । आक्रमते आदित्यः आक्रमते चन्द्रमाः इति ।

तत्र नियमार्थं वार्त्तिकमिदम् । ज्योतिषामुद्गमने एवात्मने पदं भवति । नान्यस्योद्गमने । तेन आक्रामति धूमो हर्म्यतलात् इत्यत्र नात्मने पदम् । ज्योतिर्ग्रहनक्षत्रादि । उद्गमनमुत्क्रमणम् । उद्गमने क्रमिरकर्मकः । अत्र वक्तव्यमित्यस्य व्याख्येयमित्यर्थः । व्याख्यानन्चेत्थम् । अनुपसर्गाद्वा इत्यतो वा ग्रहणमनुवर्तते सिंहावलोकनन्यायेन । सा च व्यवस्थितविभाषा । तेन ज्योतिरुद्गमने एव भविष्यति नान्यत्रेति । अनुवर्तनन्च मण्डूकप्लुत्या बोध्यम् । तच्चापकर्षः उत्तरसूत्रात् एतच्च न्यासकारमतम् । अन्ये च वार्त्तिकमेव स्वीकुर्वन्ति लाघवात् ।

56- अशिष्टव्यवहारे तृतीया चतुर्थ्यर्थे भवतीति वक्तव्यम्

दाणश्च सा चेच्चतुर्थ्यर्थे ॥1/3/55॥ इति सूत्रे पठितम् । दाण् दाने इति परस्मैपदम् । तस्मात् संपूर्वात् तृतीया युक्तात् आत्मने पदं भवति । सा चेत्तृतीया चतुर्थ्यर्थे भवति । इति सूत्रार्थः ।

ननु चतुर्थ्यर्थे कथं तृतीया भविष्यति तद्विधायकशास्त्राभावादिति चेत्तर्हि तदर्थमेवेदं वार्त्तिकं वक्तव्यम् अशिष्टव्यवहारे तृतीया चतुर्थ्यर्थे भवतीति

वक्तव्यम् । दाण् प्रयोगे । दास्या मालां संप्रयच्छते । कामुकः सन् दास्यैददातीत्यर्थः । अशिष्टव्यवहारः संकीर्णाचारव्यवहारः । एवञ्चात्र चतुर्थ्यर्थे तृतीयाविधाने जाते सूत्रेणात्मने पदं भवति ।

महाभाष्ये वार्त्तिके चकारोऽपि पठितः । अशिष्टव्यवहारे तृतीया चतुर्थ्यर्थे चेति । तत्र चकारेणात्मने पदं संगृहीतम् । तत्र वार्त्तिकाराभिप्रायः । अशिष्टव्यवाहे अनेनैव सूत्रेण तृतीया आत्मने पदमपि विधीयते । तच्चेत्थम् । सूत्रे चेत् इति निपातश्चार्थे निपातानामनेकार्थत्वात् । तथा चात्मने पदं तृतीया चेत्युभयं सूत्रेणैव विधीयते । यद्यपि वार्त्तिकार्थः सूत्रेण गतार्थस्तथापि अशिष्टव्यवहारे इति वार्त्तिकांशः कर्त्तव्य एव ।

न्यासकारमते तु सम्पूर्णमेव वार्त्तिकं न कर्त्तव्यम् । सूत्रेणैव गतार्थत्वात् तथाहि वार्त्तिके वक्तव्यमित्यस्य व्याख्येयमित्यर्थः । व्याख्यानञ्चेत्थम्। यदा तदेव सम्प्रदानं एसाधकतमत्वेन विवक्ष्यते तदा चतुर्थ्यर्थेऽपि तृतीया भवति । विवक्षातः कारकाणि भवन्ति न तु स्वभावतः । विवक्षा च लौकिकी आश्रियते न प्रायोगिकी । लोके चाशिष्टव्यवहारे एव सा सम्भवति नान्यत्र । लौकिकीनि विवक्षा गृह्यते इत्यत्र मानं सूत्रे चेद् ग्रहणमेव । तदर्थ द्योतनायैव चेच्छब्दप्रयोगः । एवञ्चाशिष्टव्यवहारे तृतीया आत्मने पदमुभयमपि सिध्यति ।

सूत्रप्रत्याख्यान तु भगवता भाष्यकारेण सह युक्ते इत्यनेन तृतीयां, कर्त्तरिकर्म व्यतिहारे इति सूत्रेण आत्मने पदमादाय कृतम् । एवञ्च सहयुक्तेऽप्रधाने इति सूत्रेण अन्यत्र इवाशिष्ट व्यवहारेऽपि तृतीया सिध्यति । अतः सूत्रं वार्त्तिकञ्चोभयं न कर्त्तव्यम् । दास्या माला प्रयच्छते इत्यस्य दास्यै मालां

विश्राण्य तया सह तद्दत्तं स्वयम् उपभुङ्क्ते । इत्यर्थः । दास्यभिलसितं धूर्त्तः करोति तदभिलसितञ्च दासीति व्यतिहारसिद्धिः । एतच्च कैयटादिमतम् । तन्मते अशिष्टांशोऽपि न कर्त्तव्यः । भाष्यकारेण सूत्रवार्त्तिकप्रत्याख्यानपरेण नाशिष्टा व्यवहारांशो रक्षितः ।

अत्र नागेशभट्टाः प्रदीपोद्योतो प्राहुः - "अत्र वदन्ति यद्यनेनेति पूर्वपक्षयुक्तिरिति उक्तप्रत्युक्तिस्वारस्येन प्रतीयते । तया सहोपभुङ्क्ते इत्येतन्मात्रेण व्यतिहाराप्रतीतेः । विश्राणनमादाय तु न सः । अन्ययोग्यैकजातीयक्रियाणामन्येन करणं हि सः । तस्यै विश्राण्य तामुपभुङ्क्ते इत्यर्थे कर्मव्यतिहाराप्रतीतावपि अशिष्टत्व प्रतीत्या तत्रेष्टात्मने पदासिद्धेश्च । उपपदविभक्तेरिति न्यायेन तत्र विश्राणननिरूपित चतुर्थ्या एवापत्तेश्च । धातोर्व्यतिहारे वृत्तावपि कर्तरीति सूत्रे तद्धात्वर्थ कर्तृमात्रे तङो विधानौचित्येन तिङो कृत्वात् तेनैव न्यायेन प्रथमापत्तेश्च । अत एव क्रियायोगे कर्तरीत्येव तृतीयायां सिद्धायामक्रियायोगार्थं सूत्रमिति तेन सहेति सूत्रे भाष्यकृद् वक्ष्यतीत्यलम्" ।

एवञ्चोद्योतकारमते सूत्रप्रत्याख्यानं पूर्वपक्षयुक्तिः वार्त्तिकं चाशिष्टव्यवहारे इति वक्तव्यमेवेति दिक् ।

57- स्वराद्यन्तोपसृष्टादिति वक्तव्यम्

प्रोपाभ्यां युजेरयज्ञपात्रेषु (1/3/64) इसूत्रे भाष्ये काशिकायाञ्च

---

1- महाभा० - पृ० 166.

पठितमिदं वार्त्तिकम् । तत्र हि "स्वराद्युपसृष्टात्" इति वक्तव्यम् उद्युङ्क्ते अनुयुंक्ते इति । अपर आह स्वराद्यन्तोपसृष्टादिति वक्तव्यम् । प्रयुङ्क्ते, नियुङ्क्ते, विनियुङ्क्ते" इति ।

प्र उप इत्येवं पूर्वात् युजेरयज्ञपात्रप्रयोगविषयादात्मने पदं भवतीति सूत्रार्थः । प्रयुङ्क्ते उपयुङ्क्ते । युजिरयोगे स्वरितेत् । तस्य कर्त्रभिप्राये क्रियाफले सिद्धमेवात्मने पदम् । अकर्त्रभिप्रायार्थोऽयमारम्भः ।

अयज्ञपात्रेष्विति किम् ? द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति स्वरोऽच् आदिरन्तो वा यस्य स स्वराद्यन्तः, तदुपसृष्टात् तत्सम्बन्धात् युजेरात्मनेपदं भवतीति वार्त्तिकार्थः । एतेन सम् निस् दुस् इत्यादीन् वर्जयित्वा सर्व एवोपसर्गाः संगृहीताः ।

एतदपि व्याख्यानात् सिद्धम् । तथाहि प्रोपाभ्यामिति सूत्रे प्रशब्दोऽजन्तोपसर्गलक्षणार्थः । उपशब्दश्च अजाद्युपसर्गलक्षणार्थः । तेन सर्वेण अजन्तेनाजादिना चोपसर्गेण च युक्तात् युजेरात्मने पदं भवतीति सिद्धम् । वार्त्तिकं तु तादृशं व्याख्यानं कर्त्तव्यमित्यर्थकम् ।

58- अदेः प्रतिषेधो वक्तव्यः

निगरणचलनार्थेभ्यश्च ﴾1/3/87﴿ इति सूत्रे काशिकायां पठितम् ।

---

1- महाभाष्यम् - पृ० 176.

निगरणार्थेभ्यश्च चलनार्थेभ्यश्च धातुभ्यः ण्यन्तेभ्यः परस्मैपदं भवति । अत्र सूत्रे णेरिति वर्तते । कर्त्रभिप्रायक्रियाफलविवक्षायामात्मनेपदापवादः परस्मैपदं भवति । निगरणमभ्यवहारः । चलनं कम्पनम् । निगारयति, आशयति, भोजयति, चलयति, चोदयति, कम्पयति इत्युदाहरणानि । अयं योगः सकर्मकार्थः अचित्तवत् कर्तृकार्थश्च ।

तत्र अदेरपि ण्यन्तात् निगरणार्थात् परस्मैपदं प्राप्तं वार्त्तिकेन निषिध्यते । आदयते देवदत्तेनेति । इदमपि वार्त्तिकं शक्यमकर्त्तुम् । तथाहि विभाषाकर्मकादित्यतो विभाषापदमनुवर्त्य मण्डूकप्लुत्या तस्याव्यवस्थितविभाषात्वं स्वीकृत्य परस्मैपद प्रतिषेधः । अदेरन्यस्य च नित्यं परस्मैपदं भवतीति । देवदत्तेन इत्यत्र गतिबुद्धीति न कर्मसंज्ञा आदिखाद्योर्न इति निषेधात् ।

59- पादिषु धेट् उपसंख्यानम्

न नादभ्याङ्यमाङ्यस परिमुहरुचि नृतिवदवसः ॥1/3/89॥ इति सूत्रे भाष्ये काशिकायाञ्च पठितमिदम् । पा,दमि, आङ्यम, आङ्यस, परि-मुह, रुचि, नृति, वद, वस इत्येतेभ्यो ण्यन्तेभ्यः परस्मैपदं भवति । पूर्वेण योगद्वयेन कर्त्रभिप्रायक्रियाफलविवक्षायामात्मनेपदापवादः परस्मैपदं विहितं तस्य प्रतिषेधोऽयमारम्भः । तत्र पा पाने इत्यस्यैव ग्रहणं न पा रक्षणे इत्यस्य, लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहणमिति न्यायात् । उमु उपशमे, यम उपरमे यसु प्रयत्ने, इमौ द्वौ आङ्पूर्वौ । मुह वैचित्ये, परिपूर्वः । रुच दीप्तौ, नृती गात्रविक्षेपे, वद व्यक्तायां वाचि । वस निवासे ।

पाययते, दमयते, आयामयते, आयासयते, परिमोहयते, रोचयते, नर्त्तयते, वादयते, वासयते तत्र पादिषु धेत उपसंख्यानं कर्त्तव्यम् । धापयते शिशुमेकं समीचीति उदाहरणम् । सूत्रेणाप्राप्तौ वार्त्तिकारम्भः । धेतःपादिविषयस्य परस्मैपदप्रतिषेधः वक्तव्यः ।

इदमपि वार्त्तिकं न कर्त्तव्यम् । व्याख्यानात् सिद्धम् । तथाहि नेति योगविभागः क्रियते तेन धेटोऽपि प्रतिषेधः सिध्यति । पादानीनाञ्च ग्रहणमुत्तरयोगे नेति योगस्यासर्वविषयत्वं ज्ञापयिष्यति । तेन नातिप्रसक्ति-रिति । इति न्यासग्रन्थे उपपादितम् । किन्तु एतस्मात् वरं वार्त्तिक-करणमेव भाष्ये योगविभागस्यादर्शनात् ।

।। इति प्रथमाध्यायस्य तृतीयः पादः ।।



60- तदादिवचनं स्यादिनुमर्थम्

यस्मात् प्रत्ययविधिस्तदादिप्रत्ययेऽङ्गम् (1/4/13) इति सूत्रे भाष्ये काशिकायान्च पठितमिदं वार्त्तिकम् । इदन्च न उपसंख्यानवार्त्तिकमपि तु तदादिग्रहणप्रयोजनप्रदर्शनपरं वार्त्तिकम् । न चैतद् वाक्यमपूर्वं कर्त्तव्यमिति वार्त्तिककारस्याभिप्रायः ।

यस्मात् प्रत्ययो विधीयते धातोर्वा प्रातिपदिकाद्वा तदादिशब्दरूपं प्रत्यये परतोऽङ्गसंज्ञं भवति । इति सूत्रार्थः कर्ता, हर्ता, करिष्यति, हरिष्यति, औपगवः इत्यादि ।

तत्र प्रत्ययग्रहणं सोपसर्गस्याङ्गसंज्ञानिषेधार्थम् । न्यविशत, व्यवक्रीणीत इत्यादौ निर्विशः, परिव्यवेभ्यः क्रियः इत्यादिविधिरस्ति तदादेरङ्गसंज्ञास्यात् । तथा च उपसर्गात् प्रागडागमः स्यात् । यद्यपि निरत्रधातुविशेषणं नेः परो यो विशिरिति । धातोस्तङ्विधानात् । नियमविधिरपि धातोरिव नोपसर्गात् तथापि उपसर्गस्यापि तत्रान्वयोऽस्तीति मत्वा एवमुक्तम्।

विधिग्रहणं प्रत्ययपरत्वे मात्रे अङ्गसंज्ञा प्रतिषेधार्थम् । स्त्री इयतीति इदं परिमाणमस्या इति किमिदंभ्यां वो घ इति वतुप् । वस्यघत्वम् । इयादेशः। इदं किमोरीश्की इतीदम ईश् । यस्येति चेति इकारलोपः । उगितश्चेति ङीप् । इयतीति । स्त्रीशब्दात् सुः तस्य हल्ङ्यादिना लोपः । स्त्री इयतीति स्थिते यदि विधिग्रहणं न क्रियते तदा इयच्छब्दे प्रत्यये परे स्त्री-

शब्दस्याङ्गसंज्ञा स्यात् ततश्च यस्येति चेति ईकारलोपः प्रसज्येत ।

ननु च असिद्धवदत्राभात् इत्यसिद्धत्वात् ईकारलोप एवासिद्धः । तत् कुतोऽयं लोपप्रसङ्गः इति चेन्न प्राग्भाधिकारात् असिद्धत्वमित्यभिप्रायात् । यदि च असिद्धवदित्यधिकारः आ अध्यायपरिसमाप्तेरिति मतम् । वक्ष्यति च वृत्तिकारः स्वयमेव तथा, तदा एतेन विधिग्रहणेन ज्ञाप्यते भाधिकारीयमसिद्धत्वमनित्यमिति तेन वुग्युटा वुवङ्यणोः सिद्धौ वाच्यौ इत्येतन्न वक्तव्यं भवति । बभूव, उपदिदीये इति ।

न चात्रः परस्मिन्पूर्वविधाविति इकारलोपस्य स्थानिवत्त्वात् स्त्रीशब्दस्येकारलोपाप्रसङ्ग एवेति वाच्यम् । पदान्तरनिरपेक्षे हीयतीशब्दे व्युत्पाद्यमाने स्त्रीशब्दोऽनादिष्टादचः पूर्वः ।

न च विधिग्रहणे सत्यपि स्त्री इयतीत्यादौ स्त्रीशब्दात् विभक्तेः प्रत्ययस्य विधिरस्ति प्रत्ययोऽपि इयत् शब्दः परोऽस्तीति अङ्गसंज्ञा स्यादेवेति वाच्यम् । विधिग्रहणात् प्रत्यासत्त्या यस्मात् प्रत्ययो विधीयते तस्मिन् परे तस्यैवाङ्गसंज्ञा विज्ञानात् ।

नन्वेवं यस्मात् प्रत्ययविधिः प्रत्ययेऽङ्गमित्येव सूत्रं कर्त्तव्यम् । यत्तदोर्नित्यसम्बन्धात् यस्मात् प्रत्ययोविधीयते तत्प्रत्यये तस्याङ्गसंज्ञा भवतीत्यर्थे लब्धे सति तदादिग्रहणं व्यर्थमिति चेन्न तदादिवचनं स्यादिनुमर्थम् । स्यादयो विकरणाः । प्रकृतिप्रत्यययोर्मध्ये यः पतति स विकरणः । आदिपदेन शब्देर्ग्रहणम् । असति तदादिग्रहणे यस्मादेव प्रत्ययोविधीयते तस्यैवाङ्गत्वं स्यात्

न तु सर्वस्य स्यादिसहितस्य सनुम्कस्य समुदायस्य ततः प्रत्ययस्याविहितत्वात् ततश्च करिष्यावः, पयावः कुण्डानीत्यादौ समुदायस्याङ्गत्वाभावात् दीर्घो न स्यात् ।

तदादिग्रहणे सति यस्मात् प्रत्ययो विधीयते सा आदिर्यस्य शब्दरूपस्य तत् तदादिरिति बहुव्रीहिराश्रितो भवति । तेन करिष्यावः कुण्डानीत्यादौ सर्वस्य स्यादिसहितस्य सनुम्कस्य समुदायस्याङ्गत्वे दीर्घः सिध्यति । अत्रेदं विचार्यते नुमर्थं तदादिग्रहणं सम्भवति न वेति तथाहि कुण्डानीत्यादौ नपुंसकस्य झलचः इति नुम् भवति । तत्र त्रयः पक्षाः पूर्वान्तः परादिः अभक्तो वा नुम् इति । तत्र यदा नुम् परादिः, परस्याद्यावयवो भवति तदा सुपि चेति दीर्घः सिध्यत्येव नास्ति नान्तेऽङ्गत्वापेक्षा । दधीनीत्यादौ अनकारान्तत्वात् न सिध्यति । पूर्वान्तपक्षे च अङ्गस्यैकदेशत्वात् नोपधाया इत्यनु वर्तमाने सर्वनामस्थाने इति दीर्घः सिध्यति । यदा त्वभक्तपक्षस्तदा अङ्गस्यानेकदेशत्वात् न सिध्यतीति अत्र पक्षे तदादिग्रहणमावश्यकम् । किन्तु पूर्वान्तपक्ष एव सिद्धान्तस्थित इति नुमर्थं तदादिग्रहणं न कार्यम् । ननु प्रातिपदिकान्तनुम्विभक्तिषु चेति सूत्रे नुम् ग्रहणं कुर्वतः सूत्रकारस्याभक्तो नुम् इति पक्ष एव सम्मतः। अन्यथा माषवापणीत्यत्र प्रातिपदिकान्तत्वात् विभक्तिनकारान्तत्वात् वा णत्वसिद्धेरनर्थकं तत्स्यात् इति चेन्न तत्र हि समास प्रातिपदिकान्तो न गृह्यते अपि तु पूर्वपदादित्यनुवृत्ते स्तदाक्षिप्तस्योत्तरपदप्रातिपदिकस्यान्तो गृह्यते । ततश्च यथागर्गाणां समुदायभक्तश्च नुम् उत्तरपदप्रातिपदिकान्तो न भवति । ततश्च यथागर्गाणां भगिनी गर्गभगिनीत्यत्र णत्वं न भवति तथा नुमोऽपि न स्यात् । गर्गाणां भगो भगिनी गर्गभगिनीत्यत्र णत्वं न भवति तथा नुमोऽपि न स्यात् । गर्गाणां भगो गर्गभगः सोऽस्यास्तीति विग्रहे गर्गभगिणीति णत्वं भवतीत्यन्यदे तत् । तत्र हि

अनुत्तरपदस्थत्वात् पूर्वपदात् संज्ञायामेवेतिनियमाभाव: । तद्यथा मातृभोगाय हितो मातृभोगीण इति । एवमपि मायान् वर्त्तुं शीमस्या भाषवापिणीत्यत्र न प्राप्नोति ङ•ीब् अत्र उत्तरपदस्यान्तो न तु नकार: । नकार एवात्रान्त: । कथम् ? गतिकारकोपपादानां कृद्भि: सहसमासवचनं प्राक् सुबुत्पत्ते: । अत: स्याद्यर्थं क्रियमाणं तदादिग्रहणं नुम्यपि अभीष्टं साधयतीति मत्वा नुम् ग्रहणं कृतम् ।

ननु तदादेरङ्•गत्वे उच्यमाने कर्त्ता इत्यादौ अङ्•गत्वं न स्यात् न हि तदादि किन्चिदस्ति अपितु तदेवेति चेन्न व्यपदेशिवद्भावात् भविष्यति तदेव तस्यादि भविष्यति । वाक्यभेदात् वा केवलस्याङ्•गत्वं सिध्यति तथाहि यस्मात् प्रत्ययविधिस्तदङ्•गम्, तदादि च न च वाक्यभेदे मानाभाव इति वचनात् प्रकृत्यादिप्रत्ययेऽङ्•गमिति लघुन्यासेन सिद्धे गुरुनिर्देशस्यैव मानत्वात् ।

ननु भिनत्ति संवस्करतुरित्यत्र श्नन्कस्य ससुट्कस्य च समुदायस्याङ्•गसंज्ञा न स्यात् । सूत्रे तस्य तदादेर्वा ग्रहणात् । न चेदं तत् न तदादि इति चेन्न नैवं विज्ञायते स आदिरस्य तदादि इति । अपि तु तस्यादिस्तदादिस्तदादिरस्येति विज्ञायमानेऽदोषात् तथाहि भिनत्तीत्यत्र यस्मात् प्रत्ययविधिभिदे: तस्यादिर्भकार: स आदिश्नमन्तस्य समुदायस्येति सिध्यति अङ्•गत्वम् । एवं संचस्करतुरित्यादावपि तन्मध्यपतितन्यायेन संज्ञासिध्यति। न च श्नम: पूर्वस्य भिशब्दस्याङ्•गत्वापत्ति: स्यात् इति वाच्यम् । तस्याङ्•गत्वेऽपि दोषाभावात् । ङि•त्वादेव गुणाभाव: । न च अनक्ति-मनक्ति इत्यादौ अतो वर्तत दीर्घो यञीति दीर्घ: स्यादिति वाच्यम् । तत्र तिङ•ीति वर्तते तिङ्•परत्वाभावादेव

न दीर्घः । अथवा यस्मात् प्रत्ययविधिरिति वचनात् यस्मिन् प्रत्यये विधीयमाने यत् पञ्चम्या निर्दिष्टं तत्र तदेवाङ्गम् । श्नमि च विधीयमाने ये पञ्चम्या निर्दिष्टाह्रुधिरादयो न ते तत्र परत: । येऽत्र श्नमि परतोभिप्रभृतयस्तेन पञ्चम्या निर्दिष्टा इति संज्ञा भाव इति दिक् ।

## 6।- नभोऽङ्गिरो मनुषां वत्युपसंख्यानम्

यदि भम् ‖1/4/18‖ इति सूत्रे भाष्ये काशिकायाञ्च पठितमिदम् यकारादौ अजादौ च स्वादौ सर्वनामस्थानवर्जिते प्रत्यये परत: पूर्वं भसंज्ञा भवतीति सूत्रार्थ: । यकारादौ गार्ग्यः आजादौ दाक्षिरित्याद्युदाहरणम् ।

तत्र नभोऽङ्गिरोमनुषां वति परे भसंज्ञा वक्तव्येति वार्त्तिकार्थ:। कृतायां भसंज्ञायां पदसंज्ञा निवर्तते । भत्वेन पदत्वस्य बाधात् परत्वात् अपवादत्वाच्चेति। नभ इव नभस्वत् अङ्गिरसा इवाङ्गिरस्वत् मनुरिव मनुष्वत् इत्युदाहरणानि । तत्र नभ इव इति तुल्यार्थतो पदर्शनमात्रम् । न तु वत्यर्थं विग्रहवाक्यम् । तृतीयासमर्थात् वतिस्मरणात् । तस्मात् नभसा तुल्यं वर्तते इति तेन तुल्यं क्रिया चेद् वतिरिति वतिः । अत्र भत्वोपसंख्यानात् पदत्वबाधात् रुत्वाभाव: । एवमङ्गिरसा तुल्यमङ्गिरस्वत् इत्यत्रापि भत्वात् अपदत्वात् षत्वाभाव: तथैव मनुषातुल्यं मनुष्वत् इत्यत्रापि भत्वेन पदत्वबाधात् रुत्वाषत्वाभाव: । यदि अत्र पदसंज्ञास्यात् तदा रुत्वं स्यात् । न च षत्वमेव स्यादिति भाव: । यदि अत्र पदसंज्ञास्यात् तदा रुत्वं स्यात् । न च षत्वमेव स्यादिति वाच्यम् अपदान्तस्येति वचनात् षत्वाभावात् । तस्मात् पदत्वे षत्वस्यासिद्धत्वात् रुत्वमेव स्यात् अतः भत्वोपसंख्यानं कर्त्तव्यम् ।

अत्रापि उपसंख्यानशब्दस्य प्रतिपादनमर्थः । तच्चेत्थम् । सिति चेति सूत्रात् अत्र सूत्रे चकारोऽनुवर्तते स चानुक्तसमुच्चयार्थः । तेन नभोऽङ्गिरोमनुषां वतौ मत्वं सिध्यति ।

एवं व्याख्यानं यद्यपि न्यासग्रन्थे कृतम् । तच्च न शोभनम् । विशेषतः प्रत्ययविशेषे भसंज्ञायाः आवश्यकत्वे वार्त्तिकस्य कर्त्तव्यत्वात् । तस्मात् वार्तिकमारब्धव्यमेवेति दिक् ।

62- वृषण्वस्वश्वयोः

एतदपि वार्त्तिकं यचि भम् (1/4/18) इति सूत्रे महाभाष्ये पठितम्। वृषन् इत्येतत् वस्वश्वयोः परतो भसंज्ञं भवति छन्दसि विषये इति वार्त्तिकार्थः । सूत्रेणाप्राप्तौ वचनम् । वृषण्वसुः वृषणश्वस्य मेने इत्युदाहरणम् । वृष्णो वसुः वृषण्वसुः, अत्र मत्वात् पदत्वबाधः । पदत्वे सति पदान्तस्येति निषेधात् णत्वं न स्यात् । न लोपश्च स्यात् । भत्वेऽपि अल्लोपो न भवति अनङ्गत्वात्। इदमपि भसंज्ञासूत्रेऽनुवृत्तानुक्तसमुच्चयार्थकचकारबलादेवसिद्धं वार्त्तिकं न कर्त्तव्यम् । अथवा दृष्टानुविधिश्छन्दसीति स्मरणात् वार्त्तिकमिदं न कर्त्तव्यम् ।

63- जुगुप्सा विरामप्रमादार्थानामुपसंख्यानम्

इदम् (ध्रुवमपायेऽपादानम् 1/4/24) इति सूत्रे पठितमिदम् । ध्रुवं यदपाय-युक्तमपाये साध्ये यदवधिभूतं तत् कारकमपादानसंज्ञं भवति । ग्रामादागच्छति,

पर्वतादवरोहति, सार्थाद्धीनः रथात् पतित इत्यादीनि उदाहरणानि । तत्र अपायो विश्लेषो विभागो वा । स च कायसम्प्राप्तिपूर्वकः ।

एवञ्च अधर्माज्जुगुप्सते धर्मात् प्रमाद्यति अधर्मात् विरमतीत्यादौ अपादानसंज्ञा न स्यात् । अतः वार्त्तिककारः पठति - जुगुप्साविरामप्रमादार्थानामुपसंख्यानम् । जुगुप्साद्यर्थानां धातूनां प्रयोगे अपादानसंज्ञाया उपसंख्यानं कर्त्तव्यमित्यर्थः ।

प्रश्लेषपूर्वकोऽपायः स चात्र नास्ति । न च बुद्धिपरिकल्पितस्त्वस्तीति वाच्यं तस्य गौणत्वात् । मुख्ये सम्भवति गौणस्य ग्रहणायोगात् । अत एव भीत्रार्थानां भयहेतुरिति आरभ्यते । तस्मात् अधर्माज्जुगुप्सते इत्यादौ सूत्रस्याप्राप्तेरुपसंख्यानं कर्त्तव्यमिति वार्त्तिकाभिप्रायः । वार्त्तिकानारम्भे तु कारकशेषत्वात् षष्ठी प्राप्नोति नटस्य गाथां श्रृणोतीतिवत् ।

महाभाष्ये तावदिदं वार्त्तिकं प्रत्याख्यातम् । तथाहि - "तत्तर्हि इदं बहुवक्तव्यम्, न वक्तव्यम् । इह तावत् अधर्माज्जुगुप्सते, अधर्माद्बीभत्सते इति। य एष मनुष्यः प्रेक्षापूर्वकारी भवति स पश्यति दुःखोऽधर्मो नानेन कृत्यमस्ति । स बुद्ध्या संप्राप्य निवर्तते । तत्र ध्रुवमपायेऽपादानमित्येव सिद्धम्"[1]। एवमेवान्यत्रापि प्रयोगे बोध्यम् ।

तत्र साधकतमं करणमिति सूत्रे तमब् ग्रहणात् कारकप्रकरणे गौणमुख्यन्यायस्याप्रवृत्तिज्ञापनात् गौणस्यापि अपायस्य ग्रहणम् । अथवा स्वरितेनाधिकार

1- महाभाष्यम् - पृ० 248.

इत्यत्र अधिक: कार: अधिकार इत्यर्थस्याश्रयणात् गौणस्यापि अपायस्य ग्रहणम् । तथा च बुद्धिव्यवस्थितापायसद्भावोऽपि अपादानसंज्ञाप्रवर्तते इति भाष्यकाराणां तात्पर्यम् ।

तच्चापादानं त्रिविधम् - निर्दिष्टविषयमुपात्तविषयमपेक्षित क्रियन्चेति । तदुक्तं हरिणा -

"निर्दिष्टविषयं किन्चिदुपात्तविषयं तथा ।
अपेक्षितक्रियन्चेति त्रिधा पादानमुच्यते ।।"

यत्र धातुनापायलक्षण: संज्ञाविषयो निर्दिश्यते तत् प्रथमम् । यथा ग्रामादागच्छति । यत्र धातुर्धात्वन्तरार्थाङ्गमाह तत्र द्वितीयम् । यथा बलाहकाद् विद्योतते विद्युत् इति । अत्र हि नि:सरणाङ्गविद्योतने विद्युतिर्वर्तते बलाहकाद् नि:सृत्य विद्योतते इति । यथा वा कुसूलात् पचति । अत्र आदानाङ्गे पाके पचिर्वर्तते । कुसूलादादाय पचतीति ।

यत्र क्रिया न श्रूयते प्रमाणान्तरेण तु प्रतीयते तत् तृतीयम् । यथा आगच्छन्तं पुरुषं प्रत्यक्षेण पश्यन्नाह कुतो भवानिति । सोऽपि तदेव प्रत्यक्षसिद्धमागमनमुपजीवन्नाह पाटलिपुत्रादिति । यथा वा सांकाश्येभ्य: पाटलिपुत्रा अभिरूपतरा इति ।

अत: वार्त्तिके उपसंख्यानशब्दस्य प्रतिपादनमर्थ: तच्च महत्या: संज्ञाया: करणरूपम् । तथा च महाविषयेयं संज्ञा । सूत्रोपात्तात् संज्ञिनोऽन्योप्यस्याविषयो भवतीति जुगुप्सादीनां प्रयोगेऽपादानत्वं सिद्धम् । अथवा चित्त-

सम्प्राप्तिपूर्वकोऽपायोऽत्रास्त्येवेति सिद्धमपादानत्वम् इति वार्त्तिकं न वक्तव्यम् ।

अथेह किञ्चित् प्रस्तूयते – ध्रुवमापाये इति सूत्रेण अपाये यद्ध्रुवं तद् अपादानमुच्यते । अपायो विश्लेषः ।विश्लेषश्च तज्जनकक्रियापदः । एवञ्च विभागजनकक्रियायां यद् ध्रुवमवधिभूतं तदपादानमित्यर्थः । गतिर्विना त्वधिना नापाय इति कथ्यते इति हर्युक्तेः ।

अवधित्वञ्चात्र प्रकृतधात्वर्थविभागजनक तत् क्रिया नाश्रयत्वे सति प्रकृतधात्वर्थजन्यविभागाश्रयत्वम् । करणादावति व्याप्ति वारणाय विशेष्यम् । यत् किञ्चित् क्रियाजन्यविभागस्य तत्रापि सत्त्वादतिप्रसङ्गतादवश्यमिति तद्विशेषणं प्रकृतेति । एवञ्च वृक्षात् पततीत्यादौ विभागजनकक्रियापतत्यर्थः ।

नागेशमते च अपाये गतिविशेषे सति यद् ध्रुवम् । अवधिभावोपगमाश्रयत्वे सति तदतिरिक्तावधित्वोपयोगिव्यापारानाश्रयत्वं ध्रुवत्वम् । अत एव गतियुक्तेष्वपादानसंज्ञा नोपपद्यते रथात् प्रवीतात् पतितः, अश्वात् त्रस्तात् पतितः सार्थात् गच्छतो हीनः । किं कारणम् । अध्रुवत्वात् । न वा ध्रौव्यस्याविवक्षितत्वात् न वा एष दोषः किं कारणम् अध्रौव्यस्याविवक्षितत्वात् । धात्वर्थनात्राध्रौव्यं विवक्षितम् किं तर्हि ध्रौव्यम् ॥ इति भाष्यं सङ्गच्छते । धात्वर्थव्यापाराश्रयत्वरूपस्य व्यापारानाश्रयत्वस्य ध्रुवत्वे तु तदसङ्गतं स्यात् । धात्वर्थव्यापाराश्रयत्वरूपस्य त्वदभिमताध्रुवत्वस्य रथादिष्वभावेन सतोऽध्रौव्यस्याविवक्षाइति भाष्यासङ्गत्यापत्तेः उक्तञ्च वाक्यपदीये –

अपाये यदुदासीनं चलं वा यदि वाचलम् ।
ध्रुवमेवातदावेशात् तदपादानमुच्यते ।

अतदावेशात् = तत् क्रियानाश्रयत्वात् क्रिया च प्रकृतधात्वर्थः नागेशमते अवधित्वोपयोगि व्यापारस्याविवक्षितत्वात् इत्यर्थः । उदासीनमनाश्रयः । एवञ्च विश्लेषहेतुक्रियानाश्रयत्वे सति विश्लेषाश्रयत्वमिति फलितं वृक्षात् पर्णं पततीत्यादौ पर्णस्यापादानत्व वारणाय सत्यन्तम् ।

पततो ध्रुव एवाश्वो यस्मादश्वात् पतत्यसौ ।
तस्याप्यश्वस्य पतने कुड्यादि ध्रुवमुच्यते ।।

अभावप्यध्रुवौ मेषौ यद्यप्युभयकर्मके ।
विभागे प्रविभक्तेतु क्रिये तत्र विवक्षिते ।।

मेषान्तरक्रियापेक्षमवधित्वं पृथक् पृथक् ।
मेषयोः स्वक्रियापेक्षं कर्तृत्वञ्च पृथक् पृथक् ।।" इति

धावतोऽश्वात् इत्यत्राश्वस्य क्रियाश्रयत्वात् विश्लेषहेतुरिति । कुड्यात् पततोऽश्वात् पततीत्यादौ अश्वस्य विश्लेषजनकक्रियाश्रयत्वेऽपि तन्नविरूद्धम् । एवमश्वनिष्ठक्रियानाश्रयत्वात् कुड्यादेपि ध्रुवत्वमक्षतम् ।

उभयकर्मजविभागस्थले विभागस्यैक्यात् तद्विश्लेषजनकक्रियानाश्रयत्वाभावात् परस्परान्मेषावपसरत इति न स्यात् । अतः हरिकारिकायामुक्तम् उभावपीति । अयं भावः यथा निश्चलमेषादपसरद् द्वितीयमेषस्थले निश्चलमेषस्य अपसन्मेष क्रियामादाय ध्रुवत्वम् । तथात्रापि विभागैक्येऽपि क्रियाभेदात् एकक्रियामादाय परस्य ध्रुवत्वमिति तथा च विश्लेषाश्रयत्वे सति तज्जनक तत् क्रियानाश्रयत्वं तत् क्रियायामपादानत्वमिति निश्चितम् । इति प्राचां कैयटादीनां मतम् ।

नव्यास्तु शेखरकारादयः - पूर्वोक्तभाष्यानुरोधात् - अवधिभावोपगमाश्रयत्वे सति तदतिरिक्तावधित्वोपयोगिव्यापारानाश्रयत्वं ध्रुवत्वम् प्राहुः । अपाये यदुदासीनमित्यादि हरिकारिकाव्याख्या चेत्थमेतेषां मते तथाहि अतदावेशात् अध्रुवत्वाविवक्षणात् इत्यर्थः चलनादेरविवक्षणात् इति यावत् । एवञ्च नागेशलक्षणे अवधिभावोपगमाश्रयत्वे सतीत्यस्य अवधित्वेन विवक्षिते सति तदतिरिक्तस्य अवधित्वेनाविवक्षितस्य अवधित्वोपयोगिव्यापारस्य = अवधिताप्रयोजकप्रकृतधात्वर्थव्यापारस्य चलनत्रासादेराश्रयः तत्त्वं ध्रुवत्वमित्यर्थः । तथा च भाष्ये त्रस्ताद् अश्वात् पतति इत्यादौ त्रासादेरवधित्वोपयोगित्वाश्रयत्वेन शङ्का । विद्यमानस्यापि तस्याविवक्षितत्वात् न तदुपयोगित्वमित्युत्तरञ्च संगच्छते । अपायग्रहणं सूत्रे वृक्षस्य पर्णं पततीत्यादौ वस्तुतस्तस्यैव पर्णद्वारा पातजनकत्वात् प्राप्तापादानत्ववारणाय । एवञ्चापाये इति कारके इत्यस्य क्रियाजनकत्वेन विवक्षिते इत्यर्थे तात्पर्यग्राहकं बोध्यम् । ध्रुवग्रहणं तु कारकान्तराणामिवापादानस्यावधिभावोपगमातिरिक्तव्यापाराभावबोधनाय ।

अपादानत्वशक्तिश्च प्रकृतधात्वर्थविभागाश्रयत्वसमानाधिकरणेति अपादानसमभिव्याहारे विभागोऽपि धात्वर्थः इति बोध्यम् । एवञ्च वृक्षात् पततीत्यादौ तदपादानकविभागपूर्वकः संयोगः पर्णवृत्तिरिति बोधः । वृक्षात् भूमिं पततीत्यादौ वृक्षापादानकविभागपूर्वकसंयोगानुकूलो व्यापार इति बोधः ।

परस्परस्मात् मेषावपसरत इत्यादौ मेषपदोपात्तयोरेव क्रियाश्रयत्वात् कर्तृत्वम् । परस्परपदोपात्तयोरेव विभागाश्रयत्वात् अपादानत्वम् । मेषपदोपात्ते तदविवक्षणात् । प्रयोगानुसारित्वात् विवक्षायाः । विभागपूर्वकं

पृष्टतो गमनमपसरणम् । आत्मानमात्मनेत्यादावन्त:करणाद्युपाधिकृतभेदवत् शब्द-रूपोपाधिकृतभेदाग्रहणे मानाभावात् । शब्दालिङ्गगतार्थभानस्यैव सत्त्वकाच्ये-त्यादिलघुशब्देन्दुशेखरे निरूपितम् (पृ0 730) एवञ्च ध्रुवपदार्थो लोकसिद्ध एव ग्राह्य धावतोऽश्वात् इत्यादौ अध्रौव्यस्याविवक्षणात् ध्रुवत्वमादाय । पादान-त्वमिति शेखराशय: ।

अत्र प्राचीना उक्तभाष्यस्याशयं वर्णयन्ति - सतोऽध्रौव्यस्याविवक्षित-त्वमिति भाष्यस्यायमर्थ: । अविवक्षितत्त्वम् = ध्रुवपदव्यावर्त्यत्वेनाविवक्षितत्वम् । प्रकृतधात्वर्थव्यापाराश्रयत्वरूपाध्रौव्यस्यैव ध्रुवपदव्यावर्त्यत्वात् । यद्यपि ध्रुवपदस्य सामान्यतो व्यापारानाश्रये शक्ति: । तथापि अपायपदसन्निधानात् प्रकृतधात्वर्थ व्यापारानाश्रयपरं ध्रुवपदम् ।

शेखरकारस्यापि मतं प्राचीनैरालोचितम् । तथाहि तदावेशाविवक्षणा-दित्युक्तम् तथा सति त्रस्तादिपदप्रयोगानापत्ते: । अर्थविवक्षया हि शब्दप्रयोग: । विभागोपयोगित्वेनाविवक्षणात् इत्यर्थे तु लोकसिद्धातिरिक्तेऽर्थे इत्युत्तरग्रन्था-संगति: । पर्णद्वारेत्यप्युक्तम् । एवमेव ब्राह्मणस्य पितरं पन्थानं पृच्छति इत्यादौ ब्राह्मणस्यापि कारकत्वापत्ते: । तात्पर्यग्राहकं विनापि सर्वत्र कारकमित्यस्य क्रियाजनकत्वेनविवक्षितमित्यर्थकत्वात् । तात्पर्यग्राहकमित्यप्ययुक्तम् । अपाये अन्यस्यावश्यकत्वात् । अपाये इत्युक्तौ अपाये धात्वर्थे सत्येव अपादानसंज्ञेति न कश्चिद् दोष: । किन्च स्यन्दियोगे अपादानत्वाभावाय अपाये इति । विभागो - -न धात्वर्थ: । व्यापाराभावबोधनायेत्यप्ययुक्तम् । धावतोऽश्वात् पतित: इत्यादौ व्यापारे सत्यपि ध्रुवत्वस्य भवताङ्गीकारेण तदभाव बोधनासम्भव इति ।

एवञ्चोक्तभाष्याविरोधात् कैयटादिमतमेव ज्याय इति दिक् ।

64- क्रियाग्रहणमपि कर्त्तव्यम्

इदं वार्त्तिकं कर्मणा यमभिप्रैति स सम्प्रदानम् {1/4/32} इति सूत्रे भाष्ये काशिकायाञ्च पठितम् । कर्मणा करणभूतेन कर्त्ता यमभिप्रैति तत्कारकं सम्प्रदानसंज्ञं भवतीति सूत्रार्थः एकस्यापि युगपत् क्रियाभेदसम्बन्धात् कर्मत्वं करणत्वञ्चाविरुद्धम् । ददाति क्रियया प्तुमिष्टतमत्वात् कर्मत्वम् अभिप्रायण-क्रियां प्रतिसाधकतमत्वात् करणत्वमिति । अभिप्रैतिरभि अभिसम्बध्नातीत्यर्थः । उपाध्यायः गां ददाति । माणवकायभिक्षां ददातीत्यादीनि उदाहरणानि ।

अत्र अन्वर्थसंज्ञाविज्ञानात् ददाति कर्मणेति विज्ञायते । सम्यक्* प्रदीयते यस्मै तत् सम्प्रदानमिति । एवञ्च बालकस्य जलं नयतीत्यादौ न सम्प्रदानत्वम् ।

ननु रजकस्य वस्त्रं ददाति, हन्तः पृष्ठं ददातीत्यादौ सम्प्रदानत्वं कुतोनेति चेत् न दानाभावात् । दानं नाम किञ्चिदुद्दिश्यापुनर्ग्रहणाय स्व-द्रव्यत्यागः । तच्चात्र नास्तीति ।

ननु दानकर्मोद्देश्यं सम्प्रदानमित्यर्थे अकर्मकक्रियोद्देश्यं सम्प्रदानं न स्यात् तथा च पत्ये शेते इत्यादि प्रयोगा उपपन्ना न स्युरिति चेन्न - क्रिया-ग्रहणमपि कर्त्तव्यमिति वार्त्तिकप्रवृत्तेः । तथा च क्रियया यमभिप्रैति स सम्प्रदान-मिति वक्तव्यम् । पत्येशेते श्राद्धाय निगल्हते, युद्धाय सन्नह्यते इत्यादीनि

उदाहरणानि ।

एतच्च वार्त्तिकभाष्ये प्रत्याख्यातम् । तथाहि कर्मणायमिति सूत्रे कर्मपदेनोभयं गृह्यते । क्रियामपि लोके कर्मेत्युपचरन्ति । किं कर्म करिष्यसि कां क्रियामिति । न च कर्मपदेन दानक्रियाकर्मैव ग्रहीतव्यम् इति वाच्यम् । कर्मपदेन ददाति कर्मण एवानाश्रयणात् । एवञ्च अर्यम्णे चरुं निर्वपेत्, देवेभ्यो ब्रह्मौदनमपक्षत देवेभ्यो हव्यं वहन्तः, छन्दांसि वै देवेभ्यो हव्यमूढ्वा । यदङ्गमाशुषेत्वम्, इत्यादिप्रयोगेषु अपि सम्प्रदानत्वं सिद्धम् ।

कर्मपदेन क्रियाग्रहणात् पत्ये शेते इत्यादि प्रयोगा अपि संगताः ।

ननु कृत्रिमाकृत्रिमयोः कृत्रिमस्यैव ग्रहणमिति न्यायात् कर्मसंज्ञाया एव कृत्रिमत्वात् तस्यैव ग्रहणमुचितं न क्रियाया इति तद्ग्रहणार्थं वार्त्तिकं कर्त्तव्यमेवेति चेन्न क्रियाया अपि कृत्रिमकर्मत्वात् । न च कर्तुरीप्सिततमं कर्मेत्युच्यते । कथञ्च क्रियाया क्रियये प्सिततमत्वमिति वाच्यम् । सन्दर्शन प्रार्थनादिक्रियया क्रियाया अपि ईप्सिततमत्वात् । तथाहि य इह मनुष्यः प्रेक्षापूर्वकारो भवति स बुद्ध्या तावत् कञ्चिदर्थं पश्यति । संदृष्टे प्रार्थना, प्रार्थनायामध्यवसायः, अध्यवसाये आरम्भः, आरम्भे निर्वृत्तिः, निर्वृत्तौ फलावाप्तिः । एवं क्रियापि कृत्रिमं कर्म भवति ।

प्रतीयमान क्रियापेक्षः कारकभावः प्रविश पिण्डीमित्यादाविवात्रापि बोध्यः । यदा तु संदर्शनादयो धात्वर्थाद् भेदेन विवक्ष्यन्ते तदा सम्प्रदानसंज्ञा । अन्यदा तु कर्मसंज्ञैव यथा कटं करोतीति । सा च भेदाभेदविवक्षा प्रयोगदर्शनवशेन

नियतविषयैवाश्रियते इति सर्वलक्ष्यसंस्कारः । गत्यर्थेषु चोभयं विवक्ष्यते भेदोऽभेदश्चेति । तत्र भेदविवक्षायां ग्रामाय गच्छति, अभेदविवक्षायान्च ग्रामं गच्छतीति प्रयोगाः अनेनैवोपपन्ना इति गत्यर्थकर्मणीति सूत्रमपि न कर्त्तव्यम् । तेनैव प्रकारेण भाष्ये प्रत्याख्यातत्वात् । तथा च सूत्रेणैव गतार्थत्वात् वार्त्तिकं न करणीयम् । सूत्रे च ददातिकर्मैव न ग्राह्यम् ।

65- कर्मणः करणसंज्ञावक्तव्या सम्प्रदानस्य च कर्मसंज्ञा

एतदपि वार्त्तिकं कर्मणायमभिप्रैति स सम्प्रदानम् इति सूत्रे पठितम् । एकस्मिन् वाक्ये कर्मणः करणसंज्ञा-सम्प्रदानस्य च कर्मसंज्ञा वक्तव्या । पशुना रुद्रं यजते इत्यादिप्रयोगाः । पशुं रुद्राय ददातीत्यर्थः।

एतदपि वार्त्तिकं न कर्त्तव्यम् । अस्य छन्दोविषयत्वात् । छन्दसि सर्वे विधयो विकल्प्यन्ते । व्यत्ययो बहुलमिति स्मरणात् । अतो यथा प्राप्तमपि प्रयोगो भवतीति दिक् ।

इदमत्रावधेयं ब्राह्मणाय गां ददातीत्यादौ सम्प्रदानचतुर्थ्यां ब्राह्मणादि सम्प्रदानकत्वं दानादौ बोध्यते । सम्प्रदानत्वञ्च मुख्यभाक्तसाधारणं क्रियाकर्मसम्बन्धितया कर्त्रभिप्रेतत्वम् - - - क्रियाकर्मत्वञ्च - क्रियाजन्यफलशालित्वत्वम् । तद्वत्ता सम्बन्धश्च - तन्निष्ठफलभागित्वमेव, तथा च दानादिक्रियाजन्यफलभागितया कर्तुरिच्छाविषयत्वन्तत्त्वमिति पर्यवसन्नम् । कर्मणायमभिप्रैतीति सूत्रस्याप्ययमेवार्थः कर्मणा यमभिप्रैतीत्यस्य कर्मणायमभिसम्बन्द्धुमिच्छतीति शाब्दिकै-

विवरणात्. निरूक्तस्थले च त्यागरूपक्रियाजन्यगोनिष्ठस्वत्वभागितया दातुरिच्छा-विषयो ब्राह्मण इति तस्य सम्प्रदानत्वं सिद्ध्यति ।

अथ निरूक्तस्य सम्प्रदानत्वस्य कर्मत्वाऽविशेषः कर्तुरीप्सितेति सूत्रेण कर्तुः क्रियया व्याप्तुमिष्टस्य कर्मसंज्ञा विधानात् क्रियया व्याप्तुमिष्टत्वमपि हि - क्रियाजन्यफलभागितयेच्छाविषयत्वमेव । न च तथायुक्तंचानीप्सितमित्यनेन क्रियाजन्यफलभागितयाऽनभिप्रेतस्यापि क्रियाजन्यफलाश्रयस्य कर्मसंज्ञाविधानात् कर्मत्वं क्रियाजन्यफलशालित्वमेव न त्विच्छागर्भं, सम्प्रदानत्वं त्विच्छागर्भमतो भेद इति वाच्यम् कर्मत्वस्येच्छयाऽघटितत्वे सूत्रभेद वैयर्थ्यापत्तेः ।

न च फलाश्रयत्वेनाभिप्रेतस्यापि कर्मत्वेतत् साधारणक्रियाजन्यफलाश्रयत-येष्टस्यापि ग्रामादेः कर्मत्वोपपत्ताविच्छाघटितत्वात्सूत्रवैयर्थ्यं दुर्वारमेवेति वाच्यम् इच्छाघटितस्य निरूक्तरूपस्य यत्र वाधस्तत्र कर्मप्रत्ययेन तादृशमपि रूपं बोध्यते । इत्येतत्प्रातिपादनाय सूत्रद्वय प्रणयनात् ।

अत एव यत्रौदनस्य गलाधसंयोगेच्छया यो व्यापारस्ततो विषादेरपि गलाधसंयोगस्तत्र विषादौ क्रियाजन्यफलशालित्वाभाववाधेऽपि तेनरूपेणेच्छाविषयत्व भावोऽवाधितस्तत्र विषमनेन न भुज्यते इति प्रयोगोपपत्तिः । इच्छाघटित-कर्मत्व तात्पर्येण च दैवाद्विषं भुज्यते इति प्रयोगस्थने चोपपत्तिः ।

न च धात्वर्थतावच्छेदकफलशालित्वेनोद्देश्यत्वं । कर्मत्वं तदनवच्छेदक-फलशालित्वेनोद्देश्यत्वं सम्प्रदानत्वमिति विशेषः स्वस्वत्वध्वंसावच्छिन्नत्याग एव ददात्यर्थो न तु परस्वत्वरूपफलावच्छिन्नोऽपीति वाच्यम् उपेक्षाया अपि

विर्वरणात्. निरूक्तस्थले च त्यागरूपक्रियाजन्यगोनिष्ठस्वत्वभागितया दातुरिच्छाविषयो ब्राह्मण इति तस्य सम्प्रदानत्वं सिद्ध्यति ।

अथ निरूक्तस्य सम्प्रदानत्वस्य कर्मत्वाऽविशेषः कर्तुरीप्सिततेति सूत्रेण कर्तुः क्रियया व्याप्तुमिष्टस्य कर्मसंज्ञा विधानात् क्रियया व्याप्तुमिष्टत्वमपि हि - क्रियाजन्यफलभागितयेच्छाविषयत्वमेव । न च तथायुक्तंचानीप्सितमित्यनेन क्रियाजन्यफलभागितयाऽनभिप्रेतस्यापि क्रियाजन्यफलाश्रयस्य कर्मसंज्ञाविधानात् कर्मत्वं क्रियाजन्यफलशालित्वमेव न त्विच्छागर्भं, सम्प्रदानत्वं त्विच्छागर्भमतो भेद इति वाच्यम् कर्मत्वस्येच्छयाऽघटितत्वे सूत्रभेद वैयर्थ्यापत्तेः ।

न च फलाश्रयत्वेनाभिप्रेतस्यापि कर्मत्वेतत् साधारणक्रियाजन्यफलाश्रयत्वेष्टस्यापि ग्रामादेः कर्मत्वोपपत्ताविच्छाघटितत्वात्सूत्रवैयर्थ्यं दुर्वारमेवेति वाच्यम् इच्छाघटितस्य निरूक्तरूपस्य यत्र वाधस्तत्र कर्मप्रत्ययेन तादृशमपि रूपं बोध्यते । इत्येतत्प्रतिपादनाय सूत्रद्वय प्रणयनात् ।

अत एव यत्रौदनस्य गलाधसंयोगेच्छया यो व्यापारस्ततो विषादेरपि गलाधसंयोगस्तत्र विषादौ क्रियाजन्यफलशालित्वाभाववाधेऽपि तेनरूपेणेच्छाविषयत्व भावोऽवाधितस्तत्र विषमनेन न भुज्यते इति प्रयोगोपपत्तिः । इच्छाघटितकर्मत्व तात्पर्येण च दैवाद्विषं भुज्यते इति प्रयोगस्थले चोपपत्तिः ।

न च धात्वर्थतावच्छेदकफलशालित्वेनोद्देश्यत्वं । कर्मत्वं तदनवच्छेदकफलशालित्वेनोद्देश्यत्वं सम्प्रदानत्वमिति विशेषः स्वस्वत्वध्वंसावच्छिन्नत्याग एव ददात्यर्थो न तु परस्वत्वरूपफलावच्छिन्नोऽपीति वाच्यम् उपेक्षाया अपि

ददातेर्मुख्यार्थतापत्तेरिति चेत् -

नैवम् - फलाश्रयतयेष्टमेव हि कर्मत्वं फलसम्बन्धितयेष्टत्वन्तु सम्प्रदानत्वम् । ब्राह्मणादिश्च न त्यागजन्य स्वत्वाश्रयतया दातुरिष्टः अपि तु तन्निरूपकतयैवाऽतो न तस्य कर्मता । न चाश्रयत्वमपि सम्बन्धविशेष इति भवादेरपि सम्बन्धत्वं दुर्वारम् आश्रयत्वेनाभिप्रायस्थले कर्मसंज्ञया वाधादन्य एव हि सम्बन्धः सम्प्रदानता घटक इति यद्युच्येत् । तदा वृक्षायोदकमासिन्चति पत्येशेते इत्यादौ शेकजन्यसंयोगशयनजन्यप्रीत्याद्याश्रयतयाऽभिप्रेतस्य वृक्षपत्यादेः सम्प्रदानत्वानुपपत्तिरिति वाच्यं धात्वर्थतावच्छेदकफलाश्रयत्वभिन्नफलसम्बन्धस्य सम्प्रदानत्वशरीरे निवेशेन सामन्जस्यात् । वृक्षायोदकमा सिन्चतीत्यादौ द्रवद्रव्यक्रियानुकूलव्यापारो धात्वर्थः सम्प्रदानतानिर्वाहकसंयोगश्च न तादृशधात्वर्थतावच्छेदक इति तदाश्रयत्वं निरूक्ताश्रयताभिन्नमेवेति तत्प्रकारकाभिप्रायविषयवृक्षादेः सम्प्रदानतानिर्वाहात् ।

न च पत्येशेते इत्यादौ धात्वर्थतावच्छेदकफलाऽप्रसिद्ध्या तदनुपपत्तिः भेदप्रतियोगिप्रविष्टे धात्वर्थतावच्छेदके फलत्वानिवेशेन प्रसिद्धिसम्भवात् । एवन्च तार्किकमते ब्राह्मणाय गां ददातीत्यादौ ब्राह्मणनिरूपितत्वेच्छाविषयगोनिष्ठस्वत्वजनकत्यागकर्त्तेति बोधः । निरूपितत्वेन कर्तुरिच्छा विषयत्वं द्वितीयान्तार्थगोवृत्तित्वान्वयिधात्वर्थतावच्छेकस्वत्वान्वयि चतुर्थ्यर्थः स्वत्वजनकत्यागश्च ददात्यर्थः ।

अत्र केचित् ददाति यो गे धात्वर्थतावच्छेकस्वत्वनिरूपकत्वमेव सम्प्रदानत्वं तदेव मुख्यं तथा च तत्र निरूपितत्वमात्रं चतुर्थ्यर्थो धात्वर्थतावच्छेदकस्वत्वेऽ-

न्वेति, अत एव श्राद्धस्य पित्रपेक्षया यागत्वमेव दानत्वं तु ब्राह्मणापेक्षयेति शूलपाणिः तत्र त्यज्यमानेऽन्ने पितृणां स्वत्वानुपपत्त्यासम्प्रदानत्वासम्भवात् स्वत्वभागित्वेनोद्देश्यत्वं यदि सम्प्रदानत्वं स्यात्तदा पितृणामपि तथात्वाऽक्षतेः पित्रपेक्षयापिदानत्वं स्यात् न हि श्राद्धे पितृणां स्वत्वभागित्वेन नोद्देश्यत्वम् पितर एतत्तेऽन्नं स्वधेत्यादिश्राद्धरूपत्यागाभिलापस्वधार्थे त्याबे चतुर्थ्याः स्वत्वभागित्वेन पित्रादेरुद्देश्यत्वबोधकत्वात् । स्वत्वभागित्वेनोद्देश्यभूतस्यापि पित्रादेः स्वीकाराभान्न स्वत्वम् । ब्राह्मणानां तत्रानुद्देश्यत्वेऽपि स्वत्व - प्रतिपत्तितो जायते । अनुद्देश्यत्वेऽपि च सम्प्रदानत्वमुपपादितमेव । पितृणामिव ब्राह्मणानामपि च स्वत्वभागित्वेनोद्देश्यत्वमप्यविरुद्धम् ।

धात्वर्थतावच्छेदकफलभागितया तत्र सम्प्रदानत्वं वृक्षायोदकं सिन्चति "पत्येशेते" इत्यादौ तत्रोद्देश्यत्वांशनिवेश आवश्यकः यत्रान्योद्देशेनक्षिप्तजलस्य दैवाद् वृक्ष संयोगोऽन्योद्देशेन शयनादितश्च पत्यादेः फलसम्बन्धस्तत्र तथा प्रयोग विरहात् । अत एव तत्र चतुर्थ्यां स्वनिष्ठतया कर्त्रभिप्रेतत्फलं प्रतिजनकत्वं तच्च सेकादिक्रियायामन्वेतिभाक्तं च तत्र सम्प्रदानत्वम् उद्देश्यत्वागर्भसम्प्रदानत्वे एव लाघवाच्छक्तेः इतरत्र लक्षणाया अभ्युपगमात् । पितृभ्यो ददात् इत्यादावनिर्धारित कर्तृक सम्प्रदाने चतुर्थी तत्त्वं च तत्रत्यागजन्यस्वत्वभागितयोद्देश्यत्वमेव ।

अथ यत्र जनान्तरस्य वृक्षादिनिष्ठसंयोगादिरिच्छा विषयोऽन्येन च जनेनाऽन्योद्देश्येन । क्षिप्तजलैर्देर्वृक्षादिसंयोगस्तत्रापि वृक्षनयादयकमासिन्चति जनः इत्यादिप्रनयोगापत्ति तत्तद् व्यक्तित्वस्य पदेनानुपस्थानात् तेनरूपेण विशेष्यभूतकर्तृकव्यक्तीनामिच्छाशी भानासम्भवात् उपस्थिति जनत्वावच्छिन्न-

विषयत्वस्य च वृक्षसंयोगादावबाधात् एवं कालान्तरीणेच्छामादायातिप्रसंगतादवश्यमिति चेन्न वृक्षादिनिष्ठत्वेनैच्छैव हि चतुर्थ्यर्थः तस्याश्च स्वविषयसंयोगादिजनकत्व स्वजन्यत्वोभयसम्बन्धेन सेकादिक्रियायामन्वयः उक्तस्थले च यत् क्रियाव्यक्त्याजनसंयोगादिर्वृक्षादौ जन्यते तत्र कालान्तरीणपुरुषान्तरीणेच्छायाः स्वविषयसंयोगादिजनकत्व सम्बन्धसत्वेऽपि स्वजन्यत्वाभावान्नोभयसम्बन्धेनेच्छा वैशिष्ट्यमित्ययोग्यतैवेति वदन्ति ।

अत्रेदमपि बोध्यम् - उद्देश्यत्वगर्भस्यैव त्यागजन्यस्वत्व भागित्वस्य ददाति स प्रदानतारूपत्वे चैत्रमात्रोद्देशेन यद्दत्तं तत्र तादृश दानेन दमपत्यार्मध्यगं धनमित्यतस्तत्पत्न्या अपि स्वत्वस्य प्रामाणिकतया सम्प्रदानत्वेन चैत्रपत्न्यै दत्तमिति व्यवहारापत्तेः । न च पत्युः स्वत्वमेव पत्नी स्वत्वं जनयति न तु तत्सामग्रीवाच्यं स्वत्ववति स्वत्वान्तरानुपपत्तेः तथा च सर्वत्रैवोद्देश्यत्वान्तर्भावं भवतु च पितृभ्यो दद्यादित्यत्रापि मुख्यमेव सम्प्रदानत्वं चतुर्थ्यर्थः ।

अस्तु वा स्वत्वेच्छाधीनता मुख्यं दानक्रियासम्प्रदानत्वं पितृस्वत्वाप्रसिद्ध्या न तेषां सम्प्रदानत्वम् । चतुर्थ्यां धात्वर्थतावच्छेदस्वत्वान्वयि निरूपितत्वं स्वत्वस्य च स्वस्वत्वध्वंसेच्छारूपेत्यागे स्वजनकत्व स्वेच्छाधीनत्वोभयसम्बन्ध । तल्लाभश्च विशिष्टस्य धातुशक्यतामते शक्त एव तदन्तर्भावेनैव शक्युपगमात् । फलव्यापारयोः पृथक् धात्वर्थतामते तु आकांक्षाबलादेव तादृश सम्बन्धलाभः । पितृभ्यो दद्यादित्यत्र च धात्वर्थान्तर्गतस्वत्वे चतुर्थीपित्राद्यन्वयी निरूपितत्वरूपो मुख्योऽर्थे बाधितत्वान्न प्रत्याय्यते अपितु निरूपितत्वेनेच्छा विषयत्वरूपो लक्ष्यार्थ एव ददातिस्तु तत्र मुख्य एव श्राद्धस्यापि ब्राह्मणापेक्षयादानत्वात्

श्राद्धे ब्राह्मणस्य सम्प्रदानता निर्वाहायाऽस्ति चोद्देश्यतापि ब्राह्मणस्येत्यादिकमभिधानस्य शूलपाणेरपि सम्प्रदानत्वशरीरे उद्देश्यत्वांशपरित्यागे निर्भरोऽवगम्यते, कर्मणायमभिप्रैतीति प्रणयतो महर्षेः पाणिनेरपि सम्मतोऽयमर्थः ।

66- वसेरश्यर्थस्य प्रतिषेधो वक्तव्यः

इदं वार्त्तिकम् उपान्वध्याङ्वसः (1/4/48) इति सूत्रे भाष्ये काशिकायाञ्चोक्तम् । उप अनु अधि आङ् इत्येवं पूर्वस्य वसतेराधारो यस्तत् कारकं कर्मसंज्ञं स्यात् इति सूत्रार्थः । ग्राममुपवसति, पर्वतमनुवसति, अधिवसति आवसतीत्यादि उदाहरणम् ।

तत्र अश्यर्थकस्यापि वसतेराधारस्य कर्मत्वं प्राप्नोतीति वार्त्तिकं प्रवृत्तम् । तत्र अर्थशब्दोनिवृत्तिवचनः । व्यधिकरणे षष्ठ्यौ अश्यर्थस्य वाचको यो वसिस्तस्येत्यर्थः । भोजननिवृत्तिवाचिन इति यावत् । अथवा शीङोऽर्थः श्यर्थः न श्यर्थः अश्यर्थः । तस्य अस्थानार्थस्येत्यर्थः । स्थाने हि शीङ् वर्तते यथा जलाशय इति । तेन ग्रामे तिष्ठतीत्यत्रार्थे ग्राममुपवसतीति प्रयोगः । अस्थानार्थत्वे तु ग्रामे वसती-ऽवमति प्रयोगः इति कैयटः (पृ0 260)

इदमपि वार्त्तिकं भाष्ये प्रत्याख्यातम् । तथाहि "स तर्हि वक्तव्यः न वक्तव्यः । नात्रोपपूर्वस्य वसेर्ग्रामोऽधिकरणम् । कस्य तर्हि ? अनुपसर्गस्य । ग्रामेऽसौ वसंस्त्रिरात्रमुपवसतीति"[1]

---

1- महाभाष्यम् - पृ0 260.

अस्य भाष्यस्याशयं प्रदीपकारा वर्णयामासु । तथाहि विशिष्टाधारावस्थितत्वेन निश्चिते देवदत्ते भोजननिवृत्तिं विशिष्टकालां प्रत्याययितुमिदं प्रयुज्यते ग्राम उपवसतीति । तत्रान्तरङ्गत्वात् प्रतीयमानवसिक्रियापेक्षो ग्रामस्याधिकरणभावः । उपवसनं तु स्वरूपेणैव कालमपेक्षते इति कालेनैवास्यान्तरङ्गसम्बन्धः । ग्रामादिना तु वहिरङ्ग इत्यर्थः ।

अथवा परिक्रमणे सम्प्रदानमन्यतरस्यामिति सूत्रात् अन्यतरस्यामिति अनुवर्तमानस्य व्यवस्थितविभाषाश्रयणात् ग्रामे उपवसतीति प्रयोगसाधुत्वमुपपादनीयम् इति न्यासग्रन्थे उक्तम् ।

एवन्चेदं वार्त्तिकं न कर्त्तव्यमेवेति स्थितम् । स्पष्टार्थं तु ग्रन्थे उपात्तम् ।

67- जल्पतिप्रभृतीनामुपसंख्यानम् ।
दृशेश्च ।
68- गत्यर्थेषु नीवह्योः प्रतिषेधो वक्तव्यः ।
69- वहेरनियन्तृकर्तृकस्येति वक्तव्यम्
70- आदिखाद्योः प्रतिषेधो वक्तव्यः
71- भक्षेरहिंसार्थस्य प्रतिषेधो वक्तव्यः

इमानि वार्त्तिकानि गति बुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता सा णौ {1/4/52} इति सूत्रे भाष्ये काशिकायान्च पठितानि । गत्यर्थानां बुद्ध्यर्थानां प्रत्यवसानार्थानां च धातूनां तथा शब्दकर्मकाणामकर्मकाणान्च अण्यन्तानां

यः कर्त्ता स ण्यन्तानां कर्मसंज्ञो भवतीति सूत्रार्थः । गच्छति माणको ग्रामम्, गमयति माणकं ग्रामम् इत्यादीनि उदाहरणानि । जल्पत्यादीनामपि ग्रहणं कर्त्तव्यं तेन जल्पयति भाषयति । धर्मं पुत्रं देवदत्त इत्यादिसिद्धम् । अन्ये तु वचनेन बोधयतीत्यर्थः । तथा च बुद्ध्यर्थत्वादेव सिद्धम् । वार्त्तिकं न कर्त्तव्यम् । दृशेश्चोपसंख्यानं कर्तव्यम् । यद्यपि बुद्ध्यर्थत्वादेव सिद्धिः तथापि सूत्रे ज्ञान-सामान्यार्थकानामेव ग्रहणं न तद्विशेषार्थानामिति अनेन ज्ञाप्यते । तदर्थं वार्त्तिकं कर्त्तव्यम् । दृशेर्ज्ञानसामान्यार्थकत्वे तु सूत्रेणैव सिद्धिरिति । तत्र गत्यर्थत्वात् नीवह्योरपि अणिकर्त्तार्णौ कर्मसंज्ञो भवेदिति अनिष्टं प्रसज्येतेति गत्यर्थेषु नीवह्योः प्रतिषेधो वक्तव्य इति वार्त्तिकारम्भः । नीवह्योरणि कर्त्ता णौ कर्मसंज्ञो न भवतीति वाक्यार्थः । नयतिभारं देवदत्तः नाययति भारं देवदत्तेन वाह्यतिभारं देवदत्तेनेत्याद्युदाहरणानि । देवदत्तेनेत्यत्र कर्तृकरणयो-स्तृतीयेति तृतीया ।

अत्र वक्तव्य इत्यस्य व्याख्येयः इत्यर्थः । व्याख्यानन्वेत्थम् । उत्तरसूत्रेऽन्यतरस्यां ग्रहणमुभयोः सूत्रयोः शेषभूतो विज्ञायते सा च व्यवस्थित-विभाषा तेन नीवह्योर्न भविष्यति । व्यवस्थितविभाषत्वमाश्रित्यैव सर्वत्र व्यवस्थासिद्धेरन्यानि अपि त्रीणि वार्त्तिकानि न कर्त्तव्यानि ।

तत्र वहेः यः प्रतिषेध उक्तः सः अनियन्तृकर्तृकस्येति वक्तव्यम् । नियच्छति विशिष्टे विषयेऽवस्थापयतीति नियन्ता सारथिः । अविद्यमानो नियन्ता कर्त्ता यस्य स तथोक्तः तस्येत्यर्थः । इह प्रतिषेधो माभूत् । वहन्ति यवान् बलीवर्दाः वाहयति यवान् बलीवर्दानिति । इह गति बुद्धीत्यादिना

अणौ कर्तुर्बलीवर्दस्य णौ कर्मत्वं भवत्येव । कर्मणि द्वितीया । एतदपि वार्त्तिक-मन्यतरस्यामित्यस्य व्यवस्थितविभाषात्वमाश्रित्य प्रत्याख्येयम् ।

सूत्रे प्रत्यवसानमभ्यवहारः । भुङ्क्ते माणवक ओदनम् । भोजयति-माणवकमोदनम् इत्यादीनि उदाहरणानि । तत्र भोजनार्थत्वात् आदिखाद्योरपि कर्तुः कर्मत्वं प्राप्नोतीति प्रतिषेधार्थम् आदिखाद्योर्नेति वार्त्तिकं प्रवृत्तम् । खादति माणवकः, खादयति माणवकेन । अत्ति माणवकः । आदयति माणवकेनौ-दनमित्याद्युदाहरणानि । अत्रेदं बोध्यं सर्वमेव प्रत्यवसानकार्यमेतयोर्न भवतीति केचित् । तथा च निगरण चलनार्थेभ्यश्च इति पदमपि न भवति । इदमेकमिष्यते क्वोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः, इदमेषां जग्धमिति ।

सूत्रेण भक्षेश्चुरादिण्यन्तस्य णे कर्त्ताकर्मसंज्ञो भवति । तत्र अहिंसा-र्थस्य भक्षेः प्रतिषेधो वक्तव्यः । भक्षयति पिण्डीं देवदत्तः । भक्षयति पिण्डीं देवदत्तेनेति । अत्र कर्तरि तृतीया । अहिंसार्थस्य किं भक्षयन्ति बलीवर्दाः सस्यम् । भक्षयन्ति बलीवर्दान् सस्यमित्यत्र कर्मत्वमेव । सर्वे सचेतना भावा इत्य-स्मिन् दर्शने हिंसितं शस्यमिति शस्यस्य भक्षणेन हिंसा द्रष्टव्या । यद्वा शस्यानां भक्षणेन स्वामिनः हिंसा द्रष्टव्या । यद्वा शस्यानां भक्षणेन स्वामिनः हिंसा द्रष्टव्या । हिंसात्राप्रधानः ।

72- अभिवादिदृशोरात्मनेपद उपसंख्यानम्

इदन्च वार्त्तिकं हृक्रोरन्यतरस्याम् (1/4/53) इति सूत्रे भाष्ये

काशिकायामुक्तम् । अणि कर्त्ता स णौ इति वर्तते । हरतेः करोतेश्चाण्यन्तयोर्यः कर्त्ता स ण्यन्तयोरन्यतरस्यां कर्मसंज्ञो भवति । हरति भारं माणवकः हारयति भारं माणवकं माणवकेन वा । करोति कटं देवदत्तः । कारयति कटं देवदत्तः देवदत्तेनेति वा इत्यादीनि उदाहरणानि । अत्र सूत्रे गत्यर्थादयो निवृत्ताः । तेनोभयत्र विभाषेयम् । यदा हरतिर्गतौ वर्तते अभ्यवहारे वा करोतिश्चाकर्मको भवति तदा पूर्वेण प्राप्ते यदा तु हरतिः स्तेयादौ वर्तते करोतिश्च सकर्मको भवति तदाप्राप्ते इव बोध्यम् ।

वार्त्तिकार्थस्तु अभिपूर्वकवादेः दृशेश्च ण्यन्तस्य अणि कर्त्ता आत्मनेपदे कर्म कर्मसंज्ञो भवतीति । अभिवदति गुरुं देवदत्तः अभिवादयते गुरुं देवदत्तम्। देवदत्तेन वेति । पश्यन्ति भृत्या राजानम्, दर्शयते भृत्यान् भृत्यैः राजानमित्यादीनि उदाहरणानि । णिचश्चेत्यात्मनेपदम् । परस्मैपदे तु अभिवादयति गुरुं देवदत्तेनेति ।

तत्राभिवादयतेरप्राप्तौ अप्राप्तविभाषा । दृशेश्च बुद्ध्यर्थत्वात् । दृशेः सर्वत्रेति वा प्राप्तौ विभाषा आरभ्यते ।

इदमपि वार्त्तिकं न कर्त्तव्यम् । अकथितञ्चेति चकारोऽत्रानुवर्तते । तस्य चानुक्तसमुच्चयार्थकत्वात् अभिवादि दृशोरण्यात्मने पदे कर्मत्वं सिध्यतीति दिक् ।

73- नीवह्योर्हरतेश्चापि गत्यर्थानां तथैव च ।
द्विकर्मकेषु ग्रहणं द्रष्टव्यमिति निश्चयः ।।

श्लोकभाष्यवार्त्तिकमिदं अकथितञ्च (1/4/51) इति सूत्रे पठितम् अपादानादिविशेषैरविवक्षितं कारकं कर्मसंज्ञं भवतीति सूत्रार्थः । तत्र नटस्य शृणोति इत्यादौ धात्वन्तरप्रयोगे माभूत् कर्मत्वमिति परिगणनं कर्त्तव्यम् ।
तथा च-दुहियाचिरुधिप्रच्छिभिक्षिचित्रामुपयोगनिमित्तमपूर्वविधौ ।
ब्रुविशासि गुणेन च यत् सचते तदकीर्त्तितमाचरितं कविना।।

उपयुज्यते इति उपयोगः पयः प्रभृति तस्य निमित्तं गवादि तस्योपयुज्यमानपयः प्रभृतिनिमित्तस्य गवादेः कर्मसंज्ञा विधीयते । तत्र गां दोग्धि पय इत्याद्युदाहरणानि । तत्रान्येषामपि द्विकर्मकानां धातूनां ग्रहणार्थं भाष्यवार्त्तिकमिदं प्रोक्तम् । अजां नयति ग्रामम् । वहति भारं ग्रामम् । हरति भारं ग्रामम् । चकारेण जयत्यादीनां समुच्चयः । शतं जयति देवदत्तम् । शतं मुष्णाति देवदत्तम् । शतं दण्डयति देवदत्तम् । कर्षति ग्रामं शाखाम् इत्यादीनि उदाहरणानि । एतदभिप्रेत्य सिद्धान्तकौमुद्यामुक्तं दीक्षितेन -

दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम् ।
कर्मयुक् स्यादकथितं तथा स्यान्नीहृकृष्वहाम् ।।" इति

एतच्च भाष्यवचनम् ।

इदमत्र विचार्यते द्विकर्मकेभ्यो धातुभ्यः कर्मणि लादय उत्पद्यमानाः किमीप्सिततमे कर्मणि प्रधाने उत्पद्यन्ते आहोस्वित् अनेन यस्य कर्मत्वं तस्मिन् गुणकर्मणि । इति जिज्ञासायामिदं भाष्ये वचनम् ।

74- प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् ।
अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मण: ।।

अयमर्थ: । ये द्वि कर्मका धातव: तेषां प्रधाने ईप्सिततमे कर्मणि लादीन् आहु: । लादय = लकृत्यक्तखलरर्था: । प्रधानाप्रधानयोर्युगपदभिधानासम्भवे प्रधानस्यैवाभिधानं न्य्याय्यं प्रधानत्वादेव । नीयते ग्राममजा, नेया नीता सुनया । उह्यते भारो ग्रामम्, बोढव्य:, ऊढ:, सुवह: इत्यादीनि उदाहरणानि ।

अप्रधाने दुहादीनामिति । अत्र दण्डिप्रभृतयोऽपि गृह्यन्ते न तु दुह्याचीति श्लोकपठिता एव । एतदपि न्यायसिद्धम् । यत: पयोऽर्थी पूर्वं गवि प्रवर्तते अत: शुद्धस्य दुहेर्गवाभिसम्बन्धक: गोदोहेन तु पयस: । इत्यन्तरङ्गत्वात् अकथितकर्मण: तत्रैव लादयो भवन्ति । यथा गौर्दुह्यते पय:, दुग्धा दोह्या सुदोहा । पौरवो गां याच्यते याच्य: याचित: सुयाच: । इत्यादीनि उदाहरणानि ।

ण्यन्ते कर्तुश्च कर्मण इति अण्यन्तावस्थायां कर्तु: ण्यन्तावस्थायां कर्मण: सतोऽभिधाने लादीनाहु: । एतदुक्तं भवति । ये गत्यर्थादयो अण्यन्तावस्थायामपि सकर्मका ण्यन्तावस्थायामुत्तरसूत्रेण द्विकर्मकाजाता:, तेषु ण्यन्तावस्थायां यदुत्तरसूत्रेण जातं कर्म तत्र लादयो भवन्ति । गमयति ग्रामं देवदत्तम् । गम्यते ग्रामं देवदत्त: गमयितव्य: गमित: सुगम: बोध्यते माणवको धर्मम् बोधितव्य:, बोधित:, सुबोध: । इत्यादीनि उदाहरणानि ।

बुद्धिप्रत्यवसानार्थशब्दकर्मकेषु गुणकर्मणि लादय इति मतान्तरम् । बोध्यते माणवकं धर्मः, भोज्यते माणवकमोदनः । पाठ्यते माणवकं वेद इत्यादि ।

तदयमत्र निर्णयः । म नीहृकृष्वहिभ्यः प्रधानकर्मणि लादयः । दुह्यादिभ्यः जिदण्डमुषिभ्यश्चाप्रधाने । बुद्धिप्रत्यवसानार्थशब्दकर्मकेषु गुणकर्मणि प्रधाने वा । गत्यर्थाकर्मकयोः हृक्रोश्च णयन्तयोः प्रयोज्ये कर्मणि । प्रयोज्यस्य प्राधान्येनाभिधीयमानाप्रयोजकव्यापारेणाप्यमानत्वात् प्राधान्यम् । गुणभूत-प्रयोज्यव्यापारकर्मणस्तु गुणभाव आर्थेन न्यायेन प्रयोज्यव्यापारप्राधान्यम् । तदर्थत्वात् प्रयोजकव्यापारस्य तत्प्रधानत्वाच्च तत्कर्मणोऽपि प्राधान्यमित्य-न्ये । सर्वथा लादयः प्रयोज्यकर्मणीति स्थितम् । अतः एवोक्तम् -

गौणो कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम् ।
बुद्धिभक्षार्थयोः शब्दकर्मकाणां निजेच्छया ॥
प्रयोज्यकर्मण्यन्येषां ण्यन्तानां लादयो मताः ।
हृक्रोर्निजेच्छया किं वा प्रयोज्ये बहुदर्शिभिः ॥
लक्ष्यं दृष्ट्वा निर्णयोऽत्र कर्त्तव्यो भाष्यपारगैः ।
कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम् ॥ इति

## 75- देशश्च

इदं वार्त्तिकम् अकथितञ्चेति सूत्रे पठितम् । अकर्मकधातुयोगे काला-दीनां कर्मसंज्ञा वक्तव्या इत्यर्थः । मासमास्ते गोदोहमास्ते, क्रोशमास्ते इत्या-द्युदाहरणानि । देशश्चाकर्मकधातुयोगे कर्मसंज्ञो भवति । कुरून् स्वपिति

पान्चालान् स्वपिति इत्युदाहरणानि ।

अध्वगन्तव्येति गन्तव्योऽध्वा, अध्वा गन्तव्यः कडारादिष्व-ध्वशब्दो द्रष्टव्यः । गन्तव्यत्वेन प्रसिद्धस्य नियतपरिमाणस्य क्रोशादेर्ग्रहणार्थं गन्तव्यग्रहणम् । तेनाध्वानं स्वपिति इति न भवति ।

ननु कालाध्वनोरिति सिद्धा द्वितीया किं कर्मसंज्ञया ? देशस्य भावस्य तावद् वक्तव्या इति चेन्न कालाध्वनोरपि लादिविधानार्थं कर्मत्व-मेषितव्यम् । आस्यते मासः आसितः आसितव्यः स्वासः इत्यादि । काला-ध्वनोरिति तु सूत्रमक्रियात्यन्तसंयोगार्थं मासं गुडधानाः सर्वरात्रं कल्याणी, क्रोशं कुटिलानदी।

यदा तु अङ्गीकृत सकर्मकधात्वन्तरार्थे आसनादौ आस्यादयो वर्तन्ते तदा पूर्वेणैव कर्तुरित्यनेनैव कर्मत्वं सिद्धम् । तथाहि मासमास्ते इत्यस्या-यमर्थः । मासमासनेन व्याप्नोति । अत्र दर्शने न केवलमकर्मकाणां कालादयः कर्मत्वं प्रतिपद्यन्ते अपितु सकर्मकाणामपि । न्यायस्य तुल्यत्वात् ।

अथ कर्तृकर्मणो कृति इति षष्ठी द्विकर्मकेषु किं प्रधाने कर्मणि आहो-स्वित् गुणे भवति अथवा उभयोरिति । उभयोरिति प्राप्तं द्वितीयावद् भाष्य-कारवचनात्तु गुणकर्मणि विकल्पेन षष्ठी । प्रधानकर्मणि नित्या । नेताश्वस्य स्रुघ्नस्य, स्रुघ्नम् इति वा इति दिक् ।

76- रीश्वराद् वीश्वराद् माभूत् कृन्मेजन्तः परोऽपि सः ।
समासेष्वव्ययीभावो लौकिकन्चाति वर्तते ॥

एतच्च श्लोकवार्त्तिकं प्राग्रीश्वरान्निपाताः ॥1/4/56॥ इति सूत्रे भाष्ये पठितम् । अधिरीश्वरे इति वक्ष्यति । प्रागेतस्मात् अवधेयान्नित उर्ध्वमनुक्रमिष्याम, निपातसंज्ञास्ते वेदितव्याः । वक्ष्यति चादयोऽसत्त्वे इति च वाह, अह इत्यादयः प्राग्वचनं संज्ञासमावेशार्थम् । गत्युपसर्गादिसंज्ञाभिः समावेशोऽस्याः । तत्र सूत्रे रीश्वरादिति सह रेफेणानुकरणे किं प्रयोजनमिति जिज्ञासायामिदं वार्त्तिकं प्रवृत्तम् । अस्यायमर्थः । रेफसहित ईश्वरोरीश्वर इति शाकपार्थिवत्वात् मयूरव्यंसकादित्वाद् वा समासः । रीश्वरादित्युच्यमाने वीश्वरान् माभूत् अधिरीश्वरे इत्यस्यैवेश्वरशब्दस्य ग्रहणं यथा स्यात् । ईश्वरे तोसुन्कसुनावित्यत्र यो वीश्वरशब्दस्तस्य ग्रहणं माभूत् यदा सूत्राणि संहितया पठ्यन्ते तदा शकि णमुल्कमुलावीश्वरे तोसुन् कसुनौ इति भवति तत्र वीश्वरशब्दः ।

ननु ज्ञापकात् अनन्तरस्यैवेश्वर शब्दस्य ग्रहणं भविष्यति न परस्य ज्ञापकन्च कृन्मेजन्त इति । तत्र कृतो मान्तस्यैजन्तस्याव्ययसंज्ञा शास्ति तज्ज्ञापयति आचार्यः । अनन्तरस्येश्वरशब्दस्य ग्रहणमिति । अन्यथा णमुलादीनां निपातत्वादेवाव्ययसंज्ञा सिद्धेति कृन्मेजन्तवचनं व्यर्थं स्यात् इति चेन्न ईश्वरे तोसुन्कसुनौ इत्यस्मात् परस्यापि भान्तस्य एजन्तस्य च सम्भवात् । कृत्यार्थे तवैकेन् केन्यत्वनः । अभीक्ष्ण्ये णमुल् इति । वत् कथमुक्त सूत्रं ज्ञापकं भविष्यति । ननु एवं तर्हि यदयमव्ययीभावस्याव्ययसंज्ञां शास्ति तज्ज्ञापयति अनन्तरस्येश्वरशब्दस्य ग्रहणं न परस्येति । अन्यथा हि अव्ययीभावश्चेत्ययार्थकं स्यात् ।

निपातत्वादेवा व्ययीभावस्याव्ययसंज्ञाया: सिद्धत्वात् इति चेन्न सर्वेषां समासानां निपातत्वात् अव्ययसंज्ञायां प्राप्तायामव्ययीभावश्चेति सूत्रं नियमार्थत्वात् । समासेषु तत्पुरुषादिषु अव्ययीभाव एवाव्ययसंज्ञा: स्यात् नान्य इति ।

ननु एवं तर्हि लौकिकन्यायात् अनन्तरस्यैवेश्वरशब्दस्य ग्रहणं भविष्यति । लोके हि औदकान्तं प्रियं प्रोथमनुव्रजेत् इति य एवानन्तर उदकान्तं तमेव गत्वा तत एव बान्धवा निवर्तन्ते न व्यवहितात् इति चेन्न लौकिकस्यापि अतिवर्तनात् । लौकिकमपि न्यायं लोकोऽतिवर्त्य वर्तते । यतो द्वितीयमपि उदकान्तं स्नेहात् कथाप्रसङ्गात् वा गत्वा निवर्तन्ते बान्धावा इति । तदेवं रेफादिरीश्वरशब्दो गृह्यते तेन वीश्वरान्माभूदिति स्थितम् ।

77- मरूच्छब्दस्योपसंख्यानं कर्त्तव्यम्

78- श्रच्छब्दस्योपसंख्यानम् कर्त्तव्यम्

इदं वार्त्तिकद्वयं प्रादय उपसर्गा: क्रियायोगे (1/4/58) इति सूत्रे भाष्ये पठितम् । प्रादय: क्रियायोगे उपसर्गसंज्ञा भवन्ति । प्र-परेत्यादय: प्रादय: प्रणयति परिणयति । उपसर्गत्वात् उपसर्गादसमासेऽपीति णत्वं सिध्यति । क्रियायोगे किं प्रगतो नायकोऽस्माद्देशात् प्रनायकोदेश: । यत् क्रियायुक्ता: प्रादयस्तां प्रत्येवोपसर्गत्वम् । अत्र गमिक्रियां प्रति प्रत्यस्योपसर्गत्वेऽपि नयति क्रियां प्रतिनोपसर्गत्वम् । तेन न णत्वमिति भाव: ।

सूत्रे प्रादीनामेवोपसर्गत्वं नान्यस्येति मरूत् शब्दस्योपसर्गत्वाप्राप्तौ उपसंख्यान वार्त्तिकम् ।

मरुद्भिर्दत्तः मरुद्दत्त इति प्रयोगः । अत्रोपसर्गसंज्ञेष्यते न निपातसंज्ञा । तस्यां हि सत्यां निपाता आद्युदात्ता इति आद्युदात्तत्वं प्रसज्येत । तथा च तृतीया कर्मणि इति पूर्वपदप्रकृतिस्वरो स्यात् । अन्तोदात्तश्च मरुच्छब्द इष्यते । ननूपसर्गसंज्ञायामपि उपसर्गाश्चाभिवर्जमिति आद्युदात्तत्वं स्यात् इति चेन्न नानेनापूर्वमाद्युदात्तत्वं विधीयते । किं तर्हि निपाता इत्येव सिद्धे अभेः प्रतिषेधार्थमेतत् । किन्च निपातसंज्ञायामव्ययसंज्ञा स्यात् । न च उपसर्गसंज्ञायां सत्यामुपसर्गे धोः किः, आतश्चोपसर्गे इति विधिः स्यादिति वाच्यम् अनभिधानात् ।

इयं चोपसर्गसंज्ञा तत्वविद्यावेष्यते । अन्यथा आद्युदात्तत्वमपि प्रसज्येत । संज्ञाविधानसामर्थ्यात् अनजन्तत्वेऽपि अच-उपसर्गात्त इति तत्वं भवति। मरुन्नयतीत्यादौ तकारव्यवायेऽपि उपसर्गसंज्ञाविधानसामर्थ्यात् णत्वं प्राप्नोति । अत तत्वविधावेष्यते ।

न्यासकारस्तु अस्य वार्त्तिकस्य अर्थस्य प्रतिपादनं सूत्रविभागेन कृतम् । तथाहि उपसर्गा इति योगविभागः क्रियते प्रादय इति न सम्बन्ध्यते तेन मरुच्छब्दस्योपसर्गत्वं सिध्यति । व्यवस्थितत्वात् च नातिप्रसङ्गः योगविभागादेव श्रच्छब्दस्य अङ्विधौ अन्तःशब्दस्य अङ्कविधिणत्वेषूपसर्गत्वं सिध्यति । योगविभागस्य च प्रज्ञाश्रद्धार्चावृत्तिभ्यो णः; तिरोऽन्तर्धौ इति च निर्देशो लिङ्गम् ।

ततः क्रियायोगे इति अत्र च प्रादय इति सम्बध्यते । पूर्वेणैव सिद्धे पूर्वयोगस्यासार्वत्रिकत्वज्ञापनार्थमिदम् । प्रादीनामक्रियायोगे उपसर्गत्वं

माभूत् इत्येवमर्थञ्चेति । एवमेव श्रच्छब्दस्यापि उपसंख्यानं कर्त्तव्यम् । इदञ्च अङ्‌विधावेवेष्यते । सत्युपसर्गत्वे श्रदुपपदधाधातो आतश्चोपसर्गे इति अङ्‌भवति। श्रद्धा इति प्रयोगः एतदपि वार्त्तिकं न कर्त्तव्यं पूर्ववत् योगविभागादेव सिद्धेः । अथवा भिदादिगणे पाठादेव सिद्धमिति वार्त्तिकं न कर्त्तव्यम् । उपसंख्याने तेन रूपेण प्रतिपादे तु भिदादिगणे श्रच्छब्दो न पाठ्य इति दिक् ।

## 79- कारिका शब्दस्योपसंख्यानं कर्त्तव्यम्

गतिश्च (1/4/60) इति सूत्रे भाष्ये दृश्यते इदं वार्त्तिकम् क्रियायोगे प्रादयो गतिसंज्ञाः स्युरिति सूत्रार्थः प्रकृत्यप्रकृतमिति प्रयोगः । गतित्वात् कृत्स्वरः । प्रकृतमित्यादौ गतिरनन्तर इति पूर्वपदप्रकृतिस्वरः । कुगतिप्रादय इति गतित्वात् समासः समासे च ल्यप् इति । अथवा प्रादित्वादेव समासः सिद्धः ।

तत्र प्रादिषु कारिकाशब्दस्यापाठात् गतित्वाप्राप्तौ वार्त्तिकवचनम् । कारिकाशब्दस्य गतित्वे कारिकाकृत्य कारिकाकृतमित्यादौ गतित्वात् कुगतिप्रादय इति समास समासे ल्यप् सिध्यति । तथा कारिकाकृतमित्यादौ गतिसमासे ल्यप् सिध्यति । तथा कारिकाकृतमित्यादौ गतिसमासे ल्यप् सिध्यति । तथा कारिकाकृतमित्यादौ गतिरनन्तर इति पूर्वपदप्रकृतिस्वरः ।

कारिकाशब्दश्चात्र क्रियावाची मर्यादास्थितिवाची च । यस्तु कर्त्तरि कारिकाशब्दः दासीवाची श्लोकवाची वेति न तेषां ग्रहणम् । क्रिया-

योगग्रहणेन कारिकाशब्दस्य विशेषणात् क्रियावृत्तेर्ग्रहणात् ।

एतदपि वार्त्तिकं न कर्त्तव्यम् । उत्तरसूत्रे ऊर्यादिच्विडाचश्चेति सूत्रे अनुक्तसमुच्चायकचकारग्रहणात् । तेनैव सिद्धे वार्त्तिकं व्यर्थमिति दिक् ।

४०- पुनश्चनसौ छन्दसिगतिसंज्ञौ भवत इति वक्तव्यम्

तत्रैव सूत्रे इदमपि पठितम् । पुनश्च नसौ शब्दौ छन्दसिगति- संज्ञौ भवतः । पुनरुत्स्यूतं वासो देयम् इत्यत्र पुनःशब्दस्य गतित्वे गतिर्गता- विति निघातो भवति । च नोहित इत्यादौ गतिरनन्तर इति पूर्वपदप्रकृति- स्वरः आद्युदात्तः । चनः शब्दो हि निपातत्वात् आद्युदात्तः । एतदपि वार्त्तिकं न कर्त्तव्यम् । उत्तरसूत्रे चकारबलादेव संग्रहात् । छन्दसि वा दृष्टानु- विधित्वात् । बाहुलकाद् वा सिद्धम् इति दिक् ।

४१- अन्तःशब्दस्याङ्• कि विधिणत्वेषूपसर्गसंज्ञा वक्तव्या

इदं वार्त्तिकम् "अन्तरपरिग्रहे" ॥1/4/65॥ इति सूत्रे भाष्ये उक्तम्। अन्तःशब्दोऽपरिग्रहेऽर्थे गतिसंज्ञा भवतीति सूत्रार्थः । परिग्रहः स्वीकरणम् । अन्तर्हत्य, अन्तर्हतम्, यदन्तर्हन्ति इत्याद्युदाहरणानि । गतित्वे समासल्यपूस्वादि- फलम् । अन्तश्शब्दोऽयं मध्येऽधिकरणभूते परिग्रहे च वर्तते ।

अङ्•किविधयादिषु अन्तःशब्दस्योपसर्गत्वासिद्धा वार्त्तिकवचनम् ।

अङ्‌विधौ अन्तर्धा, आतश्चोपसर्गे इति अङ्‌ सिध्यति । किविधौ अन्तर्धिः । उपसर्गत्वात् उपसर्गे धोः किरिति किः भवति । अन्तर्णयति । उपसर्गत्वात् णत्वं सिध्यति ।

इदमपि वार्त्तिकम् उपसर्गा इति योगविभागात् सिद्धमिति पूर्वमेवोक्तम् । अतः वार्त्तिकं न कर्त्तव्यम् । तदर्थस्य संग्रहात् सूत्रेणेति दिक् ।

82- साक्षात्प्रभृतिषु च्व्यर्थवचनम्

एतच्च साक्षात् प्रभृतीनि च (1/4/74) इति सूत्रे भाष्ये उक्तम् । साक्षात् प्रभृतीनि शब्दरूपाणि कृनिविभाषा गतिसंज्ञानि भवन्तीति सूत्रार्थः ।

तत्र च्व्यर्थवचनं कर्त्तव्यम् । असाक्षात्भूतं यदा साक्षात् क्रियते तदा यथास्यात् यदा यत्तु साक्षात् भूतमेव रूपान्तरेण क्रियते तदा माभूदिति । असाक्षात् साक्षात् कृत्यसाक्षात् कृत्वा इति गतित्वे समासः समासे ल्यप् । गतित्वविकल्प तु न समासो न ल्यप् इति ।

एवन्च मिथ्याप्रभृतीनामपि वक्तव्यम् । अमिथ्याभूतानां मिथ्याभावो यदा क्रियते तदा यथास्यात् अन्यदा माभूत अत एव वार्त्तिकेऽपि प्रभृति ग्रहणं कृतम् ।

अयमपि वार्त्तिकार्थोऽन्तरङ्‌गत्वाल्लभ्यते । तथाहि साक्षात् कृतमित्युक्ते श्रुतस्य तस्यैव रूपस्य करणं प्रतीयते न तु अश्रुत रूपान्तरस्य ।

अथवा ऊर्यादिच्विडाचश्चेत्यत्र च्विग्रहणम्, अच्छगत्यर्थवदेषुवति अर्थग्रहणं मण्डूकप्लुत्या इहानुवर्तते । तेन च्व्यर्थे विद्यमानानां साक्षात् प्रभृतीनां गतिसंज्ञा विधीयते । व्यवस्थितविभाषा विज्ञानाद्वा च्व्यर्थे एवं विद्यमानानां तेषां गतित्वं भविष्यति । च्व्यर्थता चोभयथा भविष्यति । च्व्यन्तानाम् अच्व्यन्तानाञ्च । तत्र यदा च्व्यन्तता भवति तदा ऊर्यादीत्यनेन नित्यं गतिसंज्ञा । अन्यदा तु अनने विभाषा गतिसंज्ञा भविष्यति । व्यवस्थितविभाषया चास्य सूत्रस्य च्व्यर्थेऽेव प्रवृत्तेः ।

मकारान्तत्वनिपातनमपि लवणादीनामच्व्यन्तानां न भवति । विभाषितगतिसंज्ञा सन्नियोगेन हि तेषां मकारान्तत्व निपातनम् । एतच्च मकारान्तत्वञ्च गतिसंज्ञा संनियुक्तमिति वार्त्तिकेन सूचितम् इति दिक् ।

।। इति प्रथमाध्याये चतुर्थपादः ।।

।। इति प्रथमाध्याये वार्त्तिकसमीक्षा समाप्ता ।।



1- सुबन्तस्य पराङ्गवद्भावे सामानाधिकरणस्योपसंख्यानमनन्तरत्वात्

इदन्च वार्त्तिकम्, सुबामन्त्रिते पराङ्गवत्स्वरे [2/1/2] इति सूत्रे भाष्ये काशिकायान्द पठितम्। सुबन्तमामन्त्रिते परतः परस्याङ्गवद्भवति स्वरे कर्त्तव्ये इति सूत्रार्थः । तादात्म्यातिदेशोऽनेन विज्ञायते । सुबन्तमामन्त्रितमनुप्रविशति अन्तर्भवतीति यावत् । आमन्त्रितस्य चेति आमन्त्रितस्यादिरुदात्तो भवति । स ससुप्कस्य यथा स्यात् । कुण्डे नाहन्, परशुना वृश्चन्, मद्राणां राजन् इत्यादीन्युदाहरणानि ।

कुण्डशब्दोकार आमन्त्रितस्वरः । एवमन्यत्रापि ससुप्कस्यामन्त्रित स्वरो वेदितव्यः ।

तत्र तस्मिन्निति निर्दिष्टे पूर्वस्येति अव्यवहितत्वलाभात् समानाधिकरणस्य पराङ्गवद्भावो न प्राप्नोतीति वार्त्तिकारम्भः । सुबन्तस्य पराङ्गवत्भावे समानाधिकरणस्योपसंख्यानं कर्त्तव्यमिति । तीक्ष्णया सूच्या सीव्यन् तीक्ष्णेन परशुना वृश्चन् इति उदाहरणानि । अत्र सीव्यन्नित्यादि परतः तीक्ष्णयेत्यादेरपि व्यवहितस्य पराङ्गवद्भावात् आद्युदात्तत्वं सिध्यति । "ननु च परस्य पराङ्गवद्भावे कृते पूर्वस्यापि भविष्यति इति चेन्न स्वरेऽवधारणाच्च न सिध्यति । स्वरेऽवधारणं क्रियते नानन्तर्ये ।"

- - - - - - - - - - - - - - - - - - - - - - - - - -

1- महाभाष्यम् - पृ० 352·

अयं भावः । प्रसिद्धे हि लौकिके आनन्तर्ये स्वरे विधीयमाने पराङ्गवद्भावो विधीयते न तु पराङ्वद्-भाव एव कर्त्तव्ये पराङ्गवदभावेनैवानन्तर्यं सम्पाद्यते । स्वात्मनि क्रियाविरोधात् अतिदेशान्तराभावाच्च । असति तु स्वरग्रहणे विषयभेदात् लक्षणं भिद्यते इति परस्यानन्तर्य व्यपदेशे कर्त्तव्ये पराङ्गवद्भावे कृते पूर्वस्यापि पराङ्गवद्भावो लभ्यते । न च स्वरार्थमानन्तर्यं स्वरशब्देनेहोच्यते । मुख्यार्थ सम्भवे गौणार्थग्रहणायोगात् । न च तस्मिन्निति परिभाषा आदेशविधावेवोपतिष्ठते, गोतोणिद् इत्यादावपि उपस्थानदर्शनात् ।

तर्हि स्वरग्रहणमेव किमर्थमिति चेत् ।

स्वरेऽवधारणं सुबलोपार्थम् । परशुना वृश्चन् इति । अत्र वृश्चन्निति प्रातिपदिकम् । न चाप्रत्यय इति प्रत्ययलक्षणेन प्रातिपदिकसंज्ञा निषेधो न ङिसम्बुद्ध्योरिति न लोपप्रतिषेधान्ज्ञापकात् । तत्रासति स्वरेग्रहणे पराङ्गवद्भावेन प्रातिपदिकानुप्रवेशात् सुपोधातुप्रातिपदिकयोरिति सुपो लुक् प्रसज्येत । स्वरग्रहणे तु सति सुब्लुकि कर्त्तव्ये पराङ्गवद्भावाभावः ।

न च सुबन्तैकान्तः पराङ्गवद्भाव इति न सुब्लुक् तथाहि पराङ्गवद्भावविषयत्वात् पराङ्गवदुच्यते । पराङ्गवदित्यत्र संनिधानात् आमन्त्रितं परशब्देन गृह्यते तच्च सुबन्तमेवेति सुबन्तकार्ये एव पराङ्गवद्भावोऽन्तरङ्गत्वात् न तु प्रातिपदिककार्ये इति न सुब्लुक् इति वाच्यम् । सुब्लोपे सति पराङ्गवद्भावस्य प्रातिपदिकैकान्तत्वात् । आमन्त्रिते परतो यत् सुबन्तं तत् पराङ्गवद् भवति । परन्त्वात्र सुब्लोपे कृते प्रातिपदिकमेवेति तदङ्गत्वात्

सुब्लोपः प्राप्नोत्येव ।

एवं तर्हि प्रत्ययलक्षणेन सुबन्तैकान्ततैव वक्तव्या । तेन प्रातिपदिककार्ये न पराङ्गवद्भाव इति न सुपो लुक् प्रसज्येत । स्वरग्रहणं व्यर्थम् ।

नच कूपे सिञ्चन्, चर्मनमन्नित्यादौ षत्वणत्वेमा भूतामित्येतदर्थं स्वरग्रहणं कर्त्तव्यम् । परावद्भावे सति ऐकपद्यात् सकारस्य पदादित्वाभावात् सात्पदाद्योरिति प्रतिषेधाभावात् समानपदत्वात् णत्वं स्यात् । स्वरग्रहणे तु नात्र पराङ्गवद्भावः इति वाच्यम् ।

स्वाश्रितं पदादित्वमाश्रित्य षत्वनिषेधसिद्धेः विरोधाभावात् अतिदेशेन स्वाश्रयं पदादित्वं न बाध्यते । यच्चेहामन्त्रितस्य कार्यं तत् पूर्वस्य पराङ्गवद् भावात् तत्सहितस्य भवतु । सकारस्य यत् स्वाश्रयं पदादित्वं तत् केन व्याहन्यते । न चात्रातिदेशिकं कार्यमस्ति । अतः स्वाश्रयं भवत्येव । यथा नमते दण्डः स्वयमेवेत्यत्र शप् । अत्र अन्तर्भावितण्यर्थो नमिः । न दुहेति कर्मवत्त्वाश्रययकि प्रतिषिद्धे कर्त्राश्रयः शप् तत्र निषेधादतिदेशाश्रया प्रवृत्तिः । चर्म नमन् इत्यादौ तु पूर्वपदात् संज्ञायामग इत्येतस्मान्नियमान्न भविष्यति । न च समासे एव नियम इति वाच्यम् अविशेषेणैव तस्य प्रवृत्तेः ।

एवञ्च स्वरग्रहणस्य प्रयोजनं नास्ति । प्रत्याख्यातञ्चोक्त प्रकारेण भाष्ये । तथा सति सुबन्तस्य पराङ्गवद्भावे समानाधिकरणस्योपसंख्यानं न कर्त्तव्यम् । परस्य पराङ्गवद्भावे कृतेऽपि विषयभेदात् लक्षणस्यावृत्तौ पूर्वस्यापि पराङ्गवद्भावस्य सिद्धत्वात् ।

2- अव्ययानां प्रतिषेधो वक्तव्यः

इदमपि वार्त्तिकं तत्रैव सूत्रे भाष्ये पठितम् । अव्ययानां पराङ्गवद्भाव प्रतिषेधो वक्तव्य इति वार्त्तिकार्थः । उच्चैरधीयान, नीच्चैरधीयान इत्यादिप्रयोगाः । उच्चैरित्यादिशब्दानां पराङ्गवद्भावाभावात् आमन्त्रितनिबन्धनमाद्युदात्तत्वं न भवति । अपि तु अन्तोदात्तत्वमेव भवति । स्वरादिषु तथा पाठात् । इति दिक् ।

3- श्रितादिषु गमिगाम्यादीनामुपसंख्यानम्

द्वितीया श्रितातीतपतितगतात्यस्त प्राप्तापन्नैः {2/1/24} इति सूत्रे भाष्ये काशिकायान्च पठितमिदम् । द्वितीयान्तं सुबन्तं श्रितादिभिः सह समस्यते तत्पुरुषश्च समासो भवति । कष्टं श्रितः कष्टश्रितः, कान्तारमतीतः कान्तारातीतः इत्यादिप्रयोगाः । तत्र गम्यादीनामप्राप्तौ वचनम् । गम्यादिभिः सुबन्तं समस्यते इति वक्तव्यमित्यर्थः । ग्रामं गमी ग्रामगमी, ग्रामं गामी ग्रामगामीत्यादीनि उदाहरणानि ।

उणादीनामन्येषां च संग्रहार्थमुभयोरुपादानम् । गमेरिनिरिति इनिः भविष्यति गम्यादय इति भविष्यत्काले । गमीत्यत्र आवश्यके णिनिः । ओदनं बुभुक्षुरोदन बुभुक्षुरित्यपि उदाहरणम् । न लोकेति षष्ठीनिषेधः ।

गत्यर्थकर्मणीत्यत्र द्वितीया ग्रहणमपवादविषयेऽपि विधानार्थमिति कृत्प्रयोगे द्वितीयैव भवति इति षष्ठ्याः प्राप्तिरेव नास्तीति ग्रामं गमीत्यादौ

ये अकेनोभविष्यत् इति षष्ठी निषेधं वदन्ति ते परास्ताः । तत् सूत्रप्रत्याख्यान-पक्षे च कृत्प्रयोगे षष्ठ्येव भविष्यतीति दर्शने सौत्रः षष्ठीनिषेधो बोध्यम् । उपपादितन्च प्रकृते सूत्रे भाष्ये कैयटे ।

इदमपि वार्त्तिकं न कर्त्तव्यम् । द्वितीयेति योगविभागः क्रियते । द्वितीयान्तं सुबन्तं समर्थैः सह समस्यते इति ग्रामगमिः ग्रामगमिः, ओदनबुभुक्षु-रित्यादिप्रयोगाः सिद्धाः । श्रितातीतेत्यादि द्वितीययोगेन च पूर्वयोगस्या-सार्वत्रिकत्वं द्योत्यते तेन नातिप्रसक्तिरिति दिक् ।

## 4- पूर्वादिष्वरस्योपसंख्यानम्

पूर्व सदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः (2/1/30) इति सूत्रे भाष्ये पठितमिदम् । पूर्वादिभिः सह तृतीयान्तं समस्यते स च तत्पुरुषो भवति । अस्मा-देव वचनात् पूर्वादिभिर्योगे तृतीया भवति । हेतौ वा तृतीया । मासेन पूर्वः मासपूर्वः, मात्रा सदृशः मातृसदृशः इत्यादीनि उदाहरणानि । तत्र सूत्रे अवर-शब्दस्याग्रहणात् तेन समासाभावे प्राप्ते वचनम् । अपरशब्देनापि तृतीयान्तं समस्यते इति वार्त्तिकार्थः । मासेनावरः मासावरः, सम्वत्सरावरः ।

इदमपि वार्त्तिकं न कर्त्तव्यम् । उत्तरसूत्रे कर्तृकरणे कृता बहुल-मिति बाहुलकादेव समासे सिद्धे । तत्र बाहुलकग्रहणं सर्वोपाधिव्यभिचारार्थम् इत्युक्तत्वात् । इति दिक् ।

5- कृत्यग्रहणे यण्यतोर्ग्रहणं कर्त्तव्यम्

इदन्च वार्त्तिकं कृत्यैरधिकार्थवचने (2/1/32) इति सूत्रे काशिकायां दृश्यते । भाष्ये तु प्रकृतसूत्रे न पठितम् । स्तुतिनिन्दा प्रयुक्तमध्यारोपितार्थवचनमधिकार्थवचनम् । कर्तृकरणे: कृत्यै सहसमस्येते अधिकार्थवचने गम्यमाने विभाषा तत्पुरुषश्च समसो भवति । कर्ता-काकपेया नदी, करणम्- वाष्पच्छेधानि तृणानि । तत्र तव्यत्प्रत्ययान्तेनापि प्राप्नोतीति वचनारम्भ: । कृत्यग्रहणे यण्यतोर्ग्रहणं कर्त्तव्यम् । तेन काकै: पातव्या इत्यत्र न समास: । न्यासपदमन्जर्योश्च अस्य व्याख्यानं दृश्यते ।

6- अर्थेन नित्यसमासवचनं सर्वलिङ्गता च वक्तव्या

इदन्च वार्त्तिकं भाष्ये काशिकायान्च चतुर्थी तदर्थार्थबलिहितसुखरक्षितै: (2/1/35) सूत्रे पठितम् । तदर्थादिभि: सह चतुर्थ्यन्तं सुबन्तं समस्यते तत्पुरुषश्च भवति । तदर्थेन प्रकृतिविकृतिभावे समास इष्यते । यूपायदारु यूपदारु, कुण्डलहिरण्यम् इत्यादिप्रयोगा: । इह न भवतिरन्धनाय स्थाली । चतुर्थी च अस्मादेव ज्ञापकात् तादर्थ्ये भवति ।

तत्र महाविभाषाधिकारात् ब्राह्मणार्थं पय इत्यादौ विकल्पे न ब्राह्मणायार्थमिति वाक्यमपि स्यात् । इष्यते तु नित्यसमास इति । एव परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरिति सूत्रात् परस्यैव लिङ्गं स्यादिति प्राप्ते वार्त्तिकारम्भ: । अर्थेन नित्यसमासो वक्तव्य:, सर्वलिङ्गता च वक्तव्येति

वार्त्तिकार्थः । तथा च ब्राह्मणार्थं पयः, ब्राह्मणार्थः सूपः, इत्यादिप्रयोगाः सिद्धाः ।

इदं वार्त्तिकं महाभाष्ये प्रत्याख्यातम् । तथाहि चतुर्थी तदर्थमात्रेण चेत् सर्वप्रसङ्गोऽविशेषात् । इहापि प्राप्नोति रन्धनाय स्थालीति । बलिरक्षिताभ्यान्च समासवचनं व्यर्थं स्यात् तदर्थत्वेनैव महाराजबलिरित्यादौ समासे सिद्धे ।

एतद्दोषनिवृत्त्यर्थं यदि च विकृतिश्चतुर्थ्यन्ता प्रकृत्या सह समस्यते इत्येतल्लक्षणं करिष्यते तदा अश्वघासादीनामुपसंख्यानं कर्त्तव्यम् । अश्वघासः, श्वश्रूसुरं हस्तिविधेति । तादर्थ्यमत्रास्ति न तु प्रकृतिविकृतिभावः । अर्थेन नित्यसमासवचनं कर्त्तव्यम् । ब्राह्मणार्थं पयः सर्वलिङ्गता च वक्तव्या । इत्येव बहुविधं वार्त्तिकं विमृश्यभाष्ये प्रत्याख्यानं कृतम् । विकृतिः प्रकृत्या इति न वक्तव्यं बलिरक्षितग्रहणाज्ज्ञापकात् विकृतिश्चतुर्थ्यन्ता प्रकृत्या सह समस्यते इति सिद्धम् । यदि तदर्थमात्रेण चतुर्थीसमास इष्टः स्यात् तदा बहिन-रक्षितग्रहणं न कुर्यात् तदर्थेनैव सिद्धेः । अतः यथाजातीयकानां समासे बलि-रक्षितग्रहणेनार्थः तथा जातीयकानां समासः । यदि च विकृतिश्चतुर्थ्यन्ता प्रकृत्या सह समस्यते न तदर्थमात्रेण ततो बलिरक्षितग्रहणमर्थवद् भवति ।

अश्वघासादीनामुपसंख्यानमपि न कर्त्तव्यम् अश्वस्य घासः इति षष्ठीसमासेनापि सिद्धेः । तादर्थ्यं सम्बन्धविशेषः विशेषे च सामान्यं सम्भवतीति तन्मात्रविवक्षायां षष्ठी प्रवर्तत एव । अथवा अश्वानां घास इति योग्यतामात्रं विवक्ष्यते न तादर्थ्यम् । न च स्वरे भेदः । चतुर्थीसमासे पूर्वपदप्रकृतिस्वरः ।

षष्ठीसमासे चान्तोदात्तता स्यादिति वाच्यम् । ज्ञापकात् चतुर्थीसमासेऽपि अन्तोदात्ततया एव सत्त्वात् । ज्ञापकन्त्वेत्थम् । आचार्यप्रवृत्तिर्ज्ञापयति विकृतिश्चतुर्थ्यन्ता प्रकृतिस्वरा भवति न चतुर्थीमात्रम् । यदयं चतुर्थी तदर्थे अर्थे क्ते च इत्यर्थग्रहणं करोति । तत्र यथाजातीयकानां प्रकृतिस्वरत्वेऽर्थग्रहणेन कृ-ग्रहणेन चार्थं तथाजातीयकानां प्रकृतिस्वरत्वम् । यदि च विकृतिश्चतुर्थ्यन्ता प्रकृत्या भवति न चतुर्थीमात्रम् । ततोऽर्थग्रहणं कृग्रहणञ्च अर्थवद्भवति ।

अत्रेदं विचार्यते – अथ रन्धनाय स्थालीत्यत्र षष्ठीसमासः कस्मान्न भवति । कश्चिदाह भवत्येव तद्यथा गोग्रासः, लीलाम्बुजम्, क्रीडा-सरः, वासभवनम्, नाट्यशालेति । अपर आह रन्धनाय स्थाल्यादयोऽनभिधा-नात् षष्ठीसमासा न भवन्ति । उभावपि प्रतिब्रूमः । येषु षष्ठीसमास इष्यते तेषु चतुर्थीसमास एवास्तु । येषु तु नेष्यते तेषु तु चतुर्थीसमास एवानभिधानान्ने-ष्यताम् । माकारि ज्ञापनार्थं बलिरक्षितग्रहणम् । स्वरस्तु चतुर्थीसमासेऽपि पूर्वोक्तेन प्रकारेण । प्रकृतिविकारभाव एव व्यवस्थास्यते । किन्चैवं सति सूत्र-मेवैतदनर्थम् । यूपदर्वादावपि षष्ठीसमास एवास्तु । चतुर्थी तदर्थे इति तु षष्ठी तदर्थे इति क्रियताम् । ज्ञापकाच्च स्वरस्य व्यवस्था भविष्यति । नन्वर्थभेदो भवति । षष्ठीसमासे सम्बन्धमात्रं गम्यते, चतुर्थीसमासे तु तादर्थ्यं सम्बन्ध-विशेष इति । नैषेऽस्ति विशेषः । आरभ्यमाणेऽपि चतुर्थीसमासे न दण्डवारितः षष्ठीसमासः । तत्रार्थप्रकरणादिना विशेषोऽवसेयः । यद्येवं केवलेऽपि षष्ठीसमासे तथा विशेषोऽवगंस्यते । किन्च सिद्धान्तेऽश्वघासादिषु तावदर्थप्रकरणादिना तादर्थ्यविशेषः, सर्वत्रैव तथास्तु नार्थोऽनेन सूत्रेणेति उच्यते हितशब्देन तावत्

षष्ठीसमासो न भवति । तद्योगे चतुर्थ्या नित्यत्वात् इति चतुर्थीसमास एव वक्तव्यः । ततश्च क्ते च इत्यत्रापि चतुर्थीग्रहणं कर्त्तव्यम् । गोहितमित्याद्यर्थम् एवञ्च गोरक्षितमित्यत्र न स्यात् । चतुर्थ्या असम्भवात् । षष्ठी तदर्थे इत्यस्य चाप्रसङ्गः, प्रकृतिविकाराभावात् । इति रक्षितेनापि चतुर्थी समास एव विधेयः अर्थशब्देनापि योगे तादर्थ्यसम्बन्धविशेषस्य नियमेन प्रतीयमानत्वाचतुर्थ्या सम्भावितव्यमिति तेनापि चतुर्थीसमास एव कर्त्तव्यः । बलिसुखग्रहणमपि कर्त्तव्यम्। तादर्थ्यस्य समासे नियमेन प्रतीतिर्यथा स्यात् इत्येवमर्थम् । तस्मादारब्धव्यमेव सूत्रम् । प्रकृतिविकारभाव एव समास इत्यस्य तु प्रयोजनं चिन्त्यमिति ।

अर्थेन नित्यसमासवचनं सर्वलिङ्गता च वक्तव्येत्यपि वार्त्तिकेन कर्त्तव्यम् । तथाहि सर्थप्प्रत्ययः करिष्यते । अयं भावः । तदर्थं विकृतेरित्यत्र तदर्थे सर्थप् इति क्रियते तादर्थ्येन चतुर्थीविभक्तिराक्षिप्यते । तस्मै हितमित्यतो वानुवर्तते । तेन चतुर्थ्यन्तात तादर्थ्येऽभिधेये सर्थप्प्रत्ययो भवति । सकारः पदत्वाय तेन राजार्थं भवदर्थमित्यादौ न लोपादीनि भवन्ति । पकारोऽनुदात्तार्थः । तेन प्रकृतेर्यथा प्राप्तः स्वरो भवतीति । अर्थ इति स्वरार्थं सूत्रं न कर्त्तव्यम् । न चैवं कदाचित् प्रत्ययेन विग्रहो भवति । अपि च सर्वलिङ्गता सिद्धा भवति । प्रत्यये कृते तद्धितान्तत्वात् प्रातिपदिकत्वात् सुब्लुका भवितव्यमिति विग्रहाभाव इति भावः ।

न चाद्यसकारस्येत्संज्ञा न स्यादिति वाच्यम् । आदिर्ञिटुडवस्सप्रत्ययस्येति संहितापाठे सकारस्यापि कृतष्टुत्वस्य निर्देशात् सकारस्यापीत्संज्ञासत्त्वात् ।

नन्वेवं श्र्यर्थं भ्र्वर्थमित्यादौ अङ्गस्येति इयङुवङौ स्यातामिति चेत् तर्हि बहुव्रीहिर्भविष्यति । भवति च कश्चिदस्वपदविग्रहो बहुव्रीहिः । शोभनं मुखमस्याः सुमुखीति । एवञ्चात्र ब्राह्मणोऽर्थोऽस्येत्येवं विग्रहो भविष्यति । अत्र चार्थशब्दः प्रयोजनवाची । नैवं शक्यम् । इह महदर्थमित्यत्रात्त्वकपौ प्रसज्येयाताम् ।

एवं तर्हि तदर्थस्योत्तरपदस्यार्थशब्द आदेशः करिष्यते । न चैवं कदाचित् आदेशेन विग्रहो भवति । अपि च सर्वलिङ्गता च सिद्धा । अयं भावः। ब्राह्मणाय पय इति समासे कृते । पयः शब्दस्य स्थाने अर्थशब्द आदेशः क्रियते । तेन ब्राह्मणापयः इति तादर्थ्ये प्रयोगो न भवति । चतुर्थ्यश्च समासे निवृत्तत्वात् आदेशेनार्थशब्देन विग्रहाभावः । अर्थविशेषाभिव्यक्तये च पयः शब्दप्रयोगः ।

तत्तर्हि वक्तव्यमिदम् ? न वक्तव्यम् । योगविभागः करिष्यते "चतुर्थी" सुबन्तेन सह समस्यते । ततः "तदर्थार्थ" तदर्थस्य चोत्तरपदस्यार्थशब्द आदेशो भवति । इहापि तर्हि समासः प्राप्नोति । छात्राय रुचितम्, छात्राय स्वदितम् इति । एवं तर्हि आचार्यप्रवृत्तिर्ज्ञापयति, तादर्थ्ये या चतुर्थी सा समस्यते न चतुर्थीमात्रम् । यदयं हितसुखग्रहणं करोति । कथं कृत्वा ज्ञापकम् । यथाजातीयकानां समासे हितसुखग्रहणेनार्थः । तथा जातीयकानां समासः । यदि च तादर्थ्ये या चतुर्थी सा समस्यते तदा हितसुखग्रहणमर्थवद्भवति । एवञ्चोत्तरपदस्यार्थशब्दादेशे न कोऽपि दोषः ।

ननू यूपाय दारु इत्यत्रापि अर्थशब्दादेशः प्राप्नोति । वैकल्पिको-

र्थशब्दादेशो विभाष्यते तथा च यूपार्थं दारु यूपदारु इति उभयं सेत्स्यति ।
इहापि तर्हि विभाषाप्राप्नोति ब्राह्मणार्थं क्षत्रियार्थमिति इष्यते तु नित्यम् ।
नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति प्रकृतिविकृत्योर्थः समासः तत्र तदर्थस्योत्तरपदस्य वार्थस्य आदेशो भवति अन्यत्र नित्यः । यदयं बलिरक्षित ग्रहणं करोति ।

एवं तर्हि उदकार्थो वीवधः इत्यत्र यदि वीवधशब्दस्यार्थादेशः क्रियते तदा तस्य स्थानिवद्भावात् मन्थौदनादिसूत्रेण उदकशब्दस्योदभावः प्राप्नोति । तस्मादादेशपक्षो न युक्तः ।

ननु एवं तर्हि चतुर्थीसमास एव विधेयः । तदा अर्थेन नित्यसमासेत्यादिवार्त्तिकं कर्त्तव्यमिति चेन्न ब्राह्मणायेति चतुर्थ्या तादर्थ्यस्योक्तत्वात् अर्थशब्देन विग्रहो न भविष्यति । उक्तार्थानामप्रयोगात् । समासोऽपि तर्हि न भविष्यतीति चेन्न वचनात् समासस्य सिद्धेः । अतः वार्त्तिकं न कर्त्तव्यम्। सर्वलिङ्गता चेत्यपि न वक्तव्यम् । लिङ्गमशिष्यं लोकाश्रयत्वात् लिङ्गस्येति। ततश्च परवल्लिङ्गमित्यस्य लक्षणस्याभावात् लौकिकप्रयोगाश्रयणात् सर्वलिङ्गताभविष्यति इति एतच्च सर्वं भाष्यप्रदीपपदमञ्जर्यादिग्रन्थे व्युत्पादितमिति दिक्।

न्यासकारास्तु अस्य वार्त्तिकस्य वैयर्थ्यमन्यथा व्याख्यान्ति ।
तथाहि - अत्र सूत्रे विभाषाग्रहणमनुवर्तते । सा च व्यवस्थितविभाषा विज्ञायते तेनार्थशब्देन समासो नित्यो भविष्यति सर्वलिङ्गता चेति लोकाश्रयत्वात् लिङ्गस्य सिद्धा । अथवा बहुलग्रहणानुवृत्तेः सर्वमेतत् सिद्धं गोहितं गोसुखमिति। हितयोगे त्वनाशिष्यपि चतुर्थी । तथाहि वक्ष्यति हितयोगे चतुर्थी वक्तव्येति ।

न्यासमतं भाष्ये न दृश्यते । विभाषाग्रहणस्यात्र व्यवस्थितत्वज्ञापने प्रमाणं वक्तव्यम् । बहुलग्रहणानुवृत्तेश्च मण्डूकानुवृत्तेः क्लेश इति नेदं मतं शोभनम् ।

वार्त्तिकं तु न कर्त्तव्यमिति स्थितम् । तथापि एतावद् व्याख्यानापेक्षया स्पष्टार्थं वार्त्तिकमुपन्यस्यते काशिकादिग्रन्थे ।

तदेत् प्रतिपद्यन्ते भाष्ये कृतपरिश्रमाः ।

नान्ये सहस्रमप्यन्धाः सूर्यं पश्यन्ति नाञ्जसा ।। इति

7- भयभीतभीतिभीभिरिति वक्तव्यम्

पञ्चमीभयेन {2/1/37} इति सूत्रे भाष्ये पठितमिदम् । पञ्चम्यन्तं सुबन्तं भयशब्देन सुबन्तेन समस्यते विभाषा तत्पुरुषश्च समासो भवति । वृकेभ्यो भयं वृकभयम् । चौरभयम्, दस्युभयम् ।

तत्र भयेनेति स्वरूपग्रहणात् अव्याप्तिः स्यात् अतो वार्त्तिकं प्रवृत्तम् । भयभीतभीतिभीभिरिति वक्तव्यम् । तथा सूत्रं कर्त्तव्यमिति भावः । वृकेभ्यो भीतः वृकभीतः, वृकभीतिः, वृकभीः ।

एवं तर्हि वार्त्तिकमिदं कर्त्तव्यम् ? न कर्त्तव्यम् । कर्तृकरणे कृता बहुलमित्यतो बहुलग्रहणानुवृत्तेः । यथा तत्र तृतीयान्तस्य समासो विधीयमानो बहुलग्रहणात् सर्वोपाधिव्यभिचारार्थत्वात् अन्यविभक्त्यन्तस्यापि समासो भवति।

पादहारक:, गले चोपक इति तथा अत्र वृकभीत इत्यादावपि समासो भविष्यतीति। एवञ्च ग्राम निर्गत:, अधर्मजगुप्सुदित्यादावपि सिद्धम् इति दिक् ।

8- शतसहस्रौ परेणेति वक्तव्यम्

स्तोकान्तिकदूरार्थ कृच्छ्राणि क्तेन ‡2/1/39‡ इति सूत्रे काशिकायां पठितम् । परेण सुबन्तेन शतसहस्रौ सुबन्तौ समस्येते इत्यर्थ: । शतात् परे परश्शता:, सहस्रात् परे पर: सहस्रा:, राजदन्तादित्वात् परनिपात: । निपातनात् सुडागम: । श्चुत्वम् । एतदपि बाहुलानुवृत्तेरेव सिद्धम् ।

9- श्रेण्यादिषु च्व्यर्थवचनं कर्त्तव्यम्

श्रेण्यादय: कृतादिभि: ‡2/1/59‡ इति सूत्रे भाष्ये काशिकायां च पठितमिदं वार्त्तिकम् । श्रेण्यादय: सुबन्ता: कृतादिभि: समानाधिकरणै: सह समस्यन्ते इति सूत्रार्थ: । तत्र च्व्यर्थवचनं कर्त्तव्यम् । अभूततद्भावे यथा स्यात् । अश्रेणय: श्रेणय: कृता इति श्रेणि कृता:, एककृता: । एकेन शिल्पेन पण्येन वा ये जीवन्ति तेषां समूह: श्रेणि: ।

यदा हि श्रेण्यादिशब्दानामर्था अपरिनिष्पन्ना एव निष्पाद्यन्ते तदा समास इष्यते । यदा तु निष्पन्ना एव ते रूपान्तरेण क्रियन्ते तदा श्रेणय: कृता दण्डिता: सत्कृता वेत्येवमाद्यर्थविवक्षायां नेष्यते । कृतशब्दस्य दण्डितादिशब्दानामर्थे वृत्तिर्न सम्भवतीति नाशंकनीयम् । करोते: क्रियासामान्यवाचित्वात् । अनेकार्थत्वाद्वा धातूनाम् । श्रेण्यादिषु च्व्यर्थवचनमित्यस्यायमर्थ: ।

च्व्यर्थ उच्यते प्रत्याय्यते येन तत् च्व्यर्थवचनम् । येन श्रेण्यादिषु समासकरणत्वेनो-पात्तेषु च्व्यर्थता प्रतिपाद्यते तद्व्याख्यानं कर्त्तव्यम् । तत्रेदं व्याख्यानं बहुलग्रहणा-नुवृत्तिः क्रियते तेन च्व्यर्थानां समासो भवति नाच्व्यर्थानामिति । च्व्यर्थाः द्विविधाः । च्व्यन्ताः, अच्व्यन्ताश्चेति च्वेर्विकल्पेन विधानात् । तत्राच्व्य-न्तानामनेन समासः । च्व्यन्तानान्तु ऊर्यादिच्विडाचश्चेति गतिसंज्ञायां सत्यां परत्वात् कुगतिप्रादय इति समासो भविष्यतीति । श्रेणी कृता इति । कृतादिराकृत-गणः । कृत मित मत भूतेत्यादयः श्रेण्यादयोऽपि पठिताः । श्रेणि एक पूग कुण्ड इत्यादयः ।इति दिक् ।

10- कृतापकृतादीनामुपसंख्यानम्

क्तेन नञ्विशिष्टेनानञ् (2/1/60) इति सूत्रे भाष्ये काशिकायान्च पठितमिदं वार्त्तिकम् । नञैव विशेषोयस्य सर्वमन्यत् प्रकृत्यादिकं तुल्यं तन्नञ् विशिष्टम् । तेन नञ्विशिष्टेन क्वान्तेन समानाधिकरणेन सह अनञ् क्वान्तं समस्यते इति सूत्रार्थः । कृतन्च तदकृतन्चेति कृताकृतम्, भुक्ताभुक्तम्, पीता-पीतम् । उदितानुदितम् ।

तत्र कृतापकृतादीनामपि उपसंख्यानं कर्त्तव्यम् । एकदेशस्य इष्टस्य करणात् एकदेशस्यानिष्टस्य च करणात् एकमेव वस्तु कृतन्चापकृतन्च भवति । कृताप-कृतम्, भुक्तविभुक्तम्, पीतविपीतम्, यातानुयातम् इत्यादिप्रयोगाः । एतदपि वार्त्तिकं बहुलग्रहणानुवृत्तेरेव सिद्धेः न कर्त्तव्यं भाष्ये तु अस्य वार्त्तिकस्य स्थाने वार्त्तिकान्तरं पठितं सिद्धं तु क्तेन विसमाप्तावचनात् इति "क्तान्तेन क्रियावि-

समासोऽनञ् इ अनञ् क्वान्तं समस्यते इत्यर्थः ।

गतप्रत्यागतादीनामुपसंख्यानमिति गतप्रत्यागतम्, पातानुपातम्, पुटापुटिका, क्रयाक्रयिका, फलाफलिका, मानोन्मानिका इति प्रयोगाः ।
क्रयाक्रयिका इत्यत्र अन्येषामपि दृश्यते इति दीर्घः क्रयश्च क्रयिका चेति अल्पार्थे कन् । एतत् सर्वं बहुलग्रहणानुवृत्तेः सिद्धेः वार्त्तिकं न कर्त्तव्यम् ।
तथापि स्पष्टार्थं वार्त्तिकमाश्रीयते अन्यथा बहुलग्रहणादेव सिद्धे अनन्तरसूत्राण्यपि अपार्थकानि स्युरिति दिक् ।

11- समानाधिकरणाधिकारे शाकपार्थिवादीनामुपसंख्यानमुत्तरपदलोपश्च

वर्णो वर्णेन [2/1/69] इति सूत्रे भाष्ये काशिकायाञ्च क्तेन नञ् विशिष्टेनेत्यादि सूत्रे पठितमिदं वार्त्तिकम् ।

समानाधिकरणाधिकारे शाकपार्थिवादीनामुपसंख्यानं कर्त्तव्यम् ।
उत्तरपदलोपश्च वक्तव्यः । शाकभोजीपार्थिवः शाकपार्थिवः । कुतुपवासाः सौश्रुतः कुतुपसौश्रुतः । इत्यादिप्रयोगाः । इदमपि वार्त्तिकं बहुलग्रहणानुवृत्तेरेव सिद्धे न कर्त्तव्यमेव ।

12- चतुष्पाज्जातिरिति वक्तव्यम्

चतुष्पादो गर्भिण्या [2/1/71] इति सूत्रे काशिकायां पठित-

भित भाष्ये च । चतुष्पाद्वाचिनः सुबन्ताः गर्भिणिशब्देन समस्यन्ते । गो-गर्भिणी, अजागर्भिणीति प्रयोगः । तत्र जातिवाचिनैव समासो वक्तव्य इति वार्त्तिकाभिप्रायः । इह माभूत् कालाक्षी गर्भिणी, स्वस्तिमती गर्भिणीति । चतुष्पाद इति किम् ? ब्राह्मणी गर्भिणीत्यत्र न समासः ।

एतदपि वार्त्तिकं न कर्त्तव्यम् । व्याख्यानादेव सिद्धेः । व्याख्यानन्त्वेत्थम् । पोटादिसूत्रात् इह जातिग्रहणमनुवर्तते तेन चतुष्पाज्जाति-वाच्येव गर्भिण्या समस्यते नान्यत् इति दिक् ।

।। इति द्वितीयाध्यायस्य प्रथमः पादः ।।



13- तुरीयशब्दस्यापीष्यते

द्वितीय-तृतीय-चतुर्थतुर्याण्यन्यतरस्याम् (2/2/3) इति सूत्रे काशिकायामुक्तमिदं वार्त्तिकम् । एकदेशिनैकाधिकरणे षष्ठीसमासं प्रबाध्य-विकल्पेन द्वितीयादीनि शब्दरूपाणि एकदेशिनैकाधिकरणेन समस्यन्ते इति सूत्रार्थः । द्वितीयं भिक्षायाः द्वितीयभिक्षा, तृतीयभिक्षा, चतुर्थभिक्षा, तुर्यभिक्षा । षष्ठीसमासपक्षे च भिक्षाद्वितीयमित्यादि प्रयोगाः ।

तत्र स्वरूपमिति परिभाषणात् तुरीयशब्दस्याग्रहणात् । वार्त्तिकं प्रवृत्तम् । इदन्च भाष्ये न दृश्यते । तुरीयभिक्षा भिक्षातुरीयमिति वा ।

ननु द्वितीयादियोगः शक्योऽवक्तुम् । कथम् ? समुदायावयवयो-रौपचारिके सामानाधिकरण्ये सति द्वितीयभिक्षादिसिद्धम् । मुख्यार्थवृत्तौ षष्ठीसमासे तु भिक्षाद्वितीयमित्यादि भविष्यतीति चेन्न अनेनैव खल्वन्य-तरस्यां ग्रहणेन षष्ठीसमासः प्राप्यते कथमस्मिन् योगेऽसति भविष्यति ।

14- नञो न लोपस्तिङि क्षेपे

नञ् (2/2/6) इति सूत्रे काशिकायामुक्तमिदम् । नञ् समर्थेन सुबन्तेन सह समस्यते । न ब्राह्मणः अब्राह्मणः । तत्र न पचति जन्म इत्यत्र

क्षेपे गम्यमाने ननो न लोपो वाच्य इति वार्त्तिकार्थः । अपचसित्वं जाल्म इति यद्यपि अशब्दोऽपि निषेधार्थको वर्तते इति तेनैव उपपन्नमिदम् । तथापि क्षेपस्य गम्यत्वं न स्यात् । अतो ननो न लोप एव कार्यः ।

अत्रेदं विचार्यते - ननु समासः किं प्रधान इति । त्रयश्चात्रपक्षाः सम्भवन्ति । अन्यपदार्थप्रधानाः, पूर्वपदार्थप्रधाना उत्तरपदार्थप्रधानाश्चेति । तत्र प्रायेण उत्तरपदार्थप्रधानस्तत्पुरुषः, पूर्वपदार्थप्रधानो व्ययी भावः, यथा निर्मक्षिकम् । अन्यपदार्थप्रधानो बहुव्रीहिः । यथा अब्राह्मणको देश तत्र यदा जातौ ब्राह्मणशब्दो वर्तते । अविद्यमानं ब्राह्मण्यं यस्य सोऽब्राह्मणः क्षत्रियादिः तदान्यपदार्थप्रधानः समासः । यदा तु असत्त्वसामान्यवृत्तिर्नञ् ब्राह्मणादिभिर्विशेष्यते । ब्राह्मणत्वेनासन् अन्यथा तु सन्नर्थः क्षत्रियादिरब्राह्मणशब्देनोच्यते तदा पूर्वपदार्थः प्रधानम् । यदा तु दुरूपदेशात् मिथ्याज्ञानाद्वा ब्राह्मणशब्दः क्षत्रिये प्रयुज्यते ब्राह्मणपदार्थ निवृत्तिश्च स्वाभाविकी नना द्योत्यते तदोत्तरपदार्थप्रधानः । एवं पक्षत्रये कः पक्षोऽत्राश्रयितव्य इति भवति जिज्ञासा ।

तत्र यद्युत्तरपदार्थप्रधानस्तर्हि अब्राह्मणमानयेत्युक्ते ब्राह्मणमात्रस्यानयनं प्राप्नोति । अयं भावः अनियतगुणस्य गुणविशेषप्रतिपादनाय विशेषणं प्रवर्तते न तदुपघाताय । यदि च नना ब्राह्मणार्थः प्रतिषिध्यते तदा सर्वात्मना तदर्थस्याभावात् कथं प्राधान्यं स्यात् । तस्मात् तद्गतविशेषावचनात् ननर्थक एवेति ब्राह्मणाब्राह्मणशब्दयोः पर्यायता प्रसज्येत । अन्वाख्यानाद्धि साधुत्वमेवंभूतस्यार्थवदनर्थकावयवस्य समासस्य स्यात् इति ।

यद्यपि अस्मिन् पक्षेऽस्ति दोषोऽयं तथापि तस्य समाधानं कर्तुं शक्यते तथाहि । यथोत्तरपदार्थप्रधानसमासयुक्तवाक्ये राजपुरुषमानयेत्याद्युच्चारिते पुरुषमात्रस्यानयनं न प्रसज्यते तथैवेहपि अब्राह्मणमानयेत्युच्यमाने ब्राह्मणमात्रस्यानयनं न प्रसज्यते । न च तत्र राजपदार्थः विशेषकः, इहापि नञ् विशेषकोऽस्ति । तेन नञर्थविशिष्टस्यानयनं भविष्यति ।

न च भावाभावयोर्विरोधात् नञ्विशिष्टो ब्राह्मणार्थो नोपपद्यते इति वाच्यम् । नञ्विशिष्टस्य निवृत्तपदार्थत्वात् । निवृत्तः पदार्थो मुख्यं ब्राह्मण्यं यस्मिन् स क्षत्रियादिरर्थः । सादृश्यादिनाध्यारोपित ब्राह्मण्यो नञ्द्योतितस्तदवस्थः । एवञ्चारोपित ब्राह्मण्ये स्वप्रवृत्तिनिमित्तवानुत्तरपदार्थ इति तात्पर्यग्राहको नञ् इति तात्पर्यात् । सा च निवृत्तिः स्वाभाविकी नना द्योत्यते । वाचनिकपक्षे वक्तव्यत्वापत्तेः । एवञ्च केवलो ब्राह्मणशब्दः प्रयुज्यमानः प्रसिद्धिवशात् मुख्यमेव ब्राह्मणमाचष्टे नञ्प्रयोगेण तु क्षत्रियादौ सादृश्यादिना निमित्तेनाध्यारोपितं ब्राह्मण्यं न तात्त्विकमिति द्योत्यते । तदेवं मुख्यो ब्राह्मणशब्दस्यार्थो निवृत्तः जातश्चामुख्यः क्षत्रियादिति न ब्राह्मणमात्रस्यानयनं नापि कस्यचिदानयनं सिद्धम् । उक्तञ्च -

प्राक्समासात् पदार्थानां निवृत्तिर्द्योत्यते नना ।<br>
स्वभावतो निवृत्तानां रूपभेदादर्न्दीक्षिता ।। इति ।

ननु अर्थप्रत्यायनाय शब्दः प्रयुज्यते । ब्राह्मणार्थश्चेन्निवृत्तस्तर्हि वृथा ब्राह्मणशब्दप्रयोग इति चेन्न प्रतिषेधविषयप्रदर्शनाय बुद्धया ब्राह्मणार्थं निरूप्य तस्य क्षत्रियादौ मुख्यसत्ताविरहप्रतिपादनाय ननसहितो ब्राह्मणशब्दः प्रयुज्यते ।

अथवा सर्वे एवैते शब्दा गुणसमुदायेषु वर्तन्ते । ब्राह्मण, क्षत्रियः, वैश्यः, शूद्रः इति ।

तपः श्रुतञ्च योनिश्चेत्येतद् ब्राह्मणकारणम् ।
तपः श्रुताभ्यां यो हीनो जातिब्राह्मणा उच्यते ।।

गौरः शुच्याचार पिङ्गलकेश इत्यादयो धर्माः । तेषां समुदाये ब्राह्मणशब्दो वर्तते । एवं क्षत्रियादिष्वपि द्रष्टव्यम् । एवं स्थिते समुदायेषु वृत्ताः शब्दाः अवयवेषु अपि दृश्यन्ते पूर्वे पञ्चाला इत्येवमादयः । तेन न्यायेन जातिभिन्ने गुणभिन्ने वा यदा ब्राह्मणशब्दो वर्तते तदा स्वाभाविकी जाति गुणानि वृत्तिर्नञा द्योत्यते । अवशिष्टांशसद्भावद्योतनाय ब्राह्मणशब्द-प्रयोगः । न च द्वयोर्भिन्नविषयत्व प्रसङ्गः, यस्यांशस्य सद्भावं ब्राह्मण-शब्द आह न तस्याभावं नञ् आह, यस्याभावं न नात्र न तस्य सद्भावं ब्राह्मणशब्द आह इति वाच्यं द्वयोरपि समुदायालम्बित्वात् कृतवत् । तद्यथा एकदेशाकरणाकरणाभ्याम् एकमेव वस्तु कृतञ्च भवति अकृतञ्चेति तथेहापि एकदेश-विभागात् समुदाय एव निवृत्त उच्यते । एकदेशसद्भावाच्च स एव सन्नभिधीयते इति सर्वमनवद्यम् । उत्तरपदार्थप्रधाने सति अनेकमित्याद्यपि संगृहीतं भवति । अनेको जन आगत इत्यादौ द्व्यादिष्वेकत्वमारोपितं प्रतीयते मुख्यं तु प्रति-षिध्यते । क्षत्रियाद्याविव ब्राह्मण्यमित्येकवचनमेव भवति । न द्व्यादिसंख्या प्रतीयते । एवञ्चोत्तरपदार्थप्रधाने नञ्समास इति स्थितम् ।

अत्र प्रमाणम् - एतत्तदोः सुलोपोऽकोरनञ् इत्यनाञ् नञ्समास-ग्रहणम् । अन्यथा एतत्तदोरर्थद्वारेण सम्बन्धिनः सोर्लोपो विधीयमानो नैषो

ददाति असौ ददाति इत्यत्र कथं प्राप्नुयात् । इह न ब्राह्मणस्य भाव इति भावेन नना च युगपत् सम्बन्धे विवक्षिते त्वतलौ च प्राप्नुतः समासश्च । तत्र यदि परत्वात् त्वतलौ कृत्वा पश्चात् पुनः प्रसङ्गविज्ञानात् समासः क्रियते । ततः तत्पुरुषे तुल्यार्थे इति पूर्वपदप्रकृतिस्वरेणाद्युदात्तं पदं स्यात् । प्रत्ययस्वरो नञ्स्वरश्चेष्यते इति समासे कृते त्वतलौ कार्यौ । आह नच त्वतल्भ्यां नञ्-समासः पूर्वप्रतिविप्रतिषिद्धः पूर्वविप्रतिषिद्धं त्वतलोः स्वरसिद्ध्यर्थमिति । तत्र भाव-प्रत्ययस्तावत् प्रकृत्यर्थस्य सापेक्षत्वेनासामर्थ्यात् न भवति । नञ्समासस्तु प्रधान-स्य सापेक्षत्वात् भवति । इति उत्तरपदार्थप्रधानपक्षः ।

अन्यपदार्थप्रधानपक्षे तु अवर्षा हेमन्त इति हेमन्तस्य यल्लिङ्ग वचनञ्च तत्समासस्य प्राप्नोति । न चात्र परवल्लिङ्गतास्ति यस्मान्न्यास-भेदेन द्वन्द्वैकदेशिसमासयोरेव सोक्ता । वचनदोषस्तु यथान्यासेऽप्य परिहार्य एव ।

किञ्च नञ्समासस्यान्यपदार्थप्रधानत्वे आश्रीयमाणे अपवादत्वादनेन बहुव्रीहेर्विधानात् अब्राह्मणको देश इत्यादि न सिध्यति । असः, असर्वस्मै इति चोत्तरपदार्थस्योपसर्जनत्वात् त्यदादिसर्वनाम कार्यप्रसङ्गः । संज्ञोपसर्जन-प्रतिषेधात् ।

पूर्वपदार्थप्रधाने समासे तु अव्ययसंज्ञा प्राप्नोति अव्ययं हि अस्य पूर्वपदमिति । नैष दोषः पाठेनाव्ययसंज्ञा क्रियते न च नञ्समासस्तत्र पठ्यते । पाठाभावात् समासस्य माभूदव्ययसंज्ञा । लिङ्गसंख्ययोस्तु नञर्थप्रधानत्वात् न प्राप्नोति । स्यादेतत् । शब्दशक्ति स्वाभाव्यात् असत्त्वरूपमर्थं वाक्येन नञाचष्टे । समासे तु सत्त्वरूपम् । तेन सिद्धः संख्यादियोगः ।

अथवा आश्रयतो लिङ्गवचनानि भविष्यन्ति । ब्राह्मणाभावस्य गुणत्वात् तद्युक्त द्रव्याभिधायित्वाच्च समासस्य क्षत्रियाद्याश्रयगते लिङ्गसंख्ये भविष्यत इत्यर्थः । अस्मिन्नपक्षेऽपि दोषः तथाहि । यदि तावत् स्वाभाविदर्शनमाश्रीयते तदानेनापवादत्वात् अव्ययीभावस्य बाधनप्रसङ्गात् अमक्षिकमित्यादि न सिध्यति । तस्य तु निर्मक्षिकमित्याद्यवकाशः । असर्वस्मै अस इत्यादौ पूर्ववत् न्यायाद्यसिद्धिः । अतः उत्तरपदार्थप्रधान एव नञ्समास इति पक्षो युक्त इति दिक् ।

15- ईषद् गुणवचनेनेति वक्तव्यम्

ईषदकृता {2/2/7} इति सूत्रे भाष्ये काशिकायाञ्च पठितमिदम् । ईषदित्ययं शब्दो अकृदन्तेन सुपा सह समस्यते इति सूत्रार्थः । तत्र अकृतेत्ययनीय सूत्रे गुणवचनग्रहणं कर्त्तव्यमिति वार्त्तिकार्थः । एवञ्च ईषदित्यव्ययं गुणवचनेन समस्यते न तु सर्वेणाकृदन्तेनेति । ईषत् कडारः, ईषत् पिङ्गलः, ईषद्विकलः इत्यादि प्रयोगाः । गुणवचनग्रहणाभावे ईषद्गार्ग्यः इत्यत्रापि समासः स्यात् । गार्ग्यशब्दोऽत्र जातिवचनः । ननु सूत्रे अकृतेत्युच्यमाने ईषत्पीत ईषदुन्नत इत्यादिप्रयोगाः न स्युः समस्ता इति चेन्नअव्युत्पन्ना ह्येते पीतादिशब्दा न तु कृदन्ताः एतदपि वार्त्तिकं विभाषानुवर्तनात् सूत्रे तस्य च व्यवस्थितत्वात् सिद्धे न कर्त्तव्यमिति ।

16- कृद्‌योगा च षष्ठीसमस्यते इति वक्तव्यम्

षष्ठी (2/2/8) इति सूत्रे भाष्ये काशिकाग्रन्थे च पठितमिदम् । षष्ठ्यन्तं सुबन्तं समर्थेन सुबन्तेन सह समस्यते तत्पुरुषश्च समासो भवति इति सूत्रार्थः । राज्ञः पुरुषः, राजपुरुषः ।

तत्र कृद्योगा षष्ठीसमस्यते इति वक्तव्यम् । इध्मप्रवश्चनः, पलाशशातनः इति प्रयोगः । कर्तृकर्मणो कृतिरिति कृच्छब्दयोगात् या षष्ठीविहिता सा कृद्‌योग ओव्रश्चूच्छेदने इति करणे ल्युट् ।

प्रतिपादविधाना षष्ठी न समस्यते इति वार्त्तिकात् प्राप्तौ वचनम् । शेषषष्ठीं वर्जयित्वा सर्वा षष्ठीप्रतिपद्‌विधानः कृद्‌योगाया अपि प्रतिपदविधानत्वात् निषेधप्राप्तौ इदं वार्त्तिकं प्रारभ्यते । साक्षात्साधुातुकारकविशेषोपादानेन विधानात् प्रतिपदविधाना । प्रतिपदविधाना न समस्यते इति वार्त्तिकं प्रत्याख्यातमत इदमपि वार्त्तिकं न कर्त्तव्यमिति ।

न्यासकारस्तु - क्तेन च पूजायाम्, अधिकरणवाचिना च, कर्मणि च, तृजकाभ्यां कर्तरि चेति निषेधमारभते । तज्ज्ञापयति आचार्यः, कृद्‌योगा षष्ठी समस्यते इति । अन्यथा प्राप्त्यभावात् निषेधारम्भो व्यर्थः स्यात् ।

17- तत्स्थैश्च गुणैः षष्ठीसमस्यते इति वक्तव्यम्

तत्रैव सूत्रे इदं पठितम् । तत् शब्देन सन्निधानात् गुण एव परा-

मृयते । तेनायमर्थः । स्वात्मनि ये गुणा अवस्थिताः तैः यह यमसयः । न च स्वात्मनि अवस्थानं गुणानां सम्भवति । भेदनिबन्धनत्वात् मुख्यस्याधाराधेय-भावस्य । सर्वस्य च गुणस्य द्रव्याश्रयत्वात् । तस्मादभिधानव्यापारापेक्षया तत्स्थत्वमुच्यते । इह केचिद्द् गुणाः शब्देन द्रव्यान्निष्कृष्टा एव प्रत्याय्यन्ते न तु द्रव्योपरञ्जकत्वेन । यथा चन्दनस्य गन्ध इति । सर्वदा वैयधिकरण्यमेव द्रव्यगुणयोः न कदाचित्सामानाधिकरण्यं चन्दनं गन्ध इति । शुक्लादयस्तु गुणाः कदाचित् निष्कृष्टरूपाः शब्दैरुच्यन्ते पटस्य शुक्ल इति ।कदाचिद् द्रव्येणैव एकत्वमापन्नाः शुक्लः पट इति । तस्मात् द्विविधगुण सद्भावात् तत्स्थैरिति विशेषणं रूपादिगुणपरिग्रहार्थमुपात्तमिति ब्राह्मणकर्णादय उदा-हरणम् । अथ वलाकायाः शौक्ल्यमिति समासः कस्मान्न भवति । तत्स्थं हि शौक्ल्यम् । सर्वथा वैयधिकरण्येन सम्बन्धात् । नैष दोषः । शौक्ल्यशब्देन शुक्लो गुणोऽभिधीयते । शुक्लशब्दस्ये द्रव्ये वर्तमानस्य तस्मिन्नेव प्रवृत्तिनि-मित्ते भावप्रत्ययविधानात् । न चासौ तत्स्थः । अभेदाध्यवसायने द्रव्यं प्रत्यनु-रञ्जकत्व दर्शनात् शुक्लः पट इति । अर्थस्य च तत्स्थत्वमश्रीयते इति शब्दभेदे-ऽपि अर्थस्याभेदान्नास्ति शुक्लस्य गुणस्य तत्स्थत्वम् । रूपवान् पट इत्यादौ तु नास्ति गुणगुणिनोरभेदाध्यवसायः । भेदाश्रयेणैव मतुबर्थीयप्रयोगात् इति रूपस्य तत्स्थत्वमव्यावृत्तमिति समासो भवत्येव । चन्दनगन्धः, कपित्थरस इत्यादि प्रयोगाः । इदमपि वार्त्तिकं गुणेन नेति प्रतिषेध प्रतिप्रसवरूपमिति वेदितव्यम् ।

अत्रेदं बोध्यम् - भाष्ये "न तु तद्विशेषणैरित्युक्तं तच्च काशिकायां

नोक्तम् । तस्यान्यथा सिद्धत्वात् । तथाहि तेषां गुणानां यानि विशेषणानि तैः सह समासो न भवतीति वार्त्तिकार्थः । घृतस्य तीव्रो गन्धः, चन्दनस्य मृदुः स्पर्शः । अत्र तीव्रमृदुशब्दाभ्यां समासो न भवति । पूरणगुणेति निषेधात् ।

अदन्त्वान्यथा सिद्धम् । घृतस्य गन्धेन सह सम्बन्धो न तु तद्विशेषणेन तीव्रेण । असामर्थ्यादेव न समासः । यदपि प्रकरणादिवशात् तीव्रशब्द एव विशेषे गन्धे वर्तते । तदुपजनित एव व्यतिरेके घृतस्येति षष्ठी, तत्रापि तीव्रं घृतं मिति दर्शनात् तत्स्थत्वाभावादेव न समास इति न तु तद्विशेषणैरिति वार्त्तिकांशो न वक्तव्यः इति वृत्तिकाराशयः । सौत्रस्य प्रतिषेधस्य विषयकथनमिदं न तु तद्विशेषणैरिति तत्स्थत्वाभावात् तैः समासः प्रतिषिध्यत एवेति कैयटः । एवञ्च एतदंशस्य न पृथक्फलं किञ्चिदिति अवस्थितम् ।

ननु गुणेन नेति प्रतिषेधारम्भ इदं वार्त्तिकं कर्त्तव्यम् । तत्र च गुणवचनेनेति वक्तव्यम् । तत्र गुणोपसर्जनद्रव्यवाचिना समासो निषिध्यते । केवलगुणवाचिना रूपादिशब्देन समासो भविष्यति । घृतस्य तीव्र इत्याद्यपि केवलगुणवाच्येवेति चेन्न ।

तथा विज्ञायमाने काकस्य कार्ष्ण्यम्, वलाकायाः शौक्ल्यम् इत्यादौ न स्यात् । तस्मात् गुणेन नेति वक्तव्यम् । तदुक्तौ तु तत्स्थैः गुणैरिति वक्तव्यम् एवञ्च न तु तद्विशेषणैरिति वक्तव्यम् इति महाभाष्ये स्थितम् ।

तत्स्थैश्च गुणैरिति वार्त्तिकमपि न कर्त्तव्यम् । याजकादिभि-

श्चेति सूत्रे चकारस्यानुक्तसमुच्चयार्थकत्वात् सिद्धे: । न्यासग्रन्थे चेदमवस्थितम् ﴾पृ० 108﴿

18- गुणात् तरेण तरलोपश्चेति वक्तव्यम्

इदन्च भाष्ये न दृश्यते याजकादिभिश्च ﴾2/2/9﴿ इति सूत्रे काशिकायामुक्तम् । न चैव न्यासपदमन्जर्यामस्य व्याख्या दृश्यते । अस्यार्थ: । गुणवाचिभ्यो जायमानतरप्प्रत्ययान्तेन समासे भवति तरप्रत्ययस्य च लोपो भवति । सर्वेषां श्वेततर: सर्वश्वेत:, सर्वेषां महत्तर: सर्वमहान् इति । न निर्धारणे इति प्रतिषेधेन प्राप्ते वचनमिदम् । सर्वशुक्लागौरित्यादि।

19- प्रतिपदविधाना षष्ठी न समस्यते इति वक्तव्यम्

न निर्धारणे ﴾2/2/10﴿ इति सूत्रे भाष्ये काशिकायान्च पठित-मिदं वार्त्तिकम् । निर्धारणे या षष्ठी सा न समस्यते जातिगुणक्रियाभि: समु-दायादेकदेशस्य पृथक्करणं निर्धारणम् । क्षत्रियो मनुष्याणां शूरतम: ।

तत्र निषेधप्रकरणे प्रतिपदविधाना षष्ठी न समस्यते इति वक्तव्यम्। सर्पिषो ज्ञानम्, मधुनो ज्ञानम्, इत्याद्युदाहरणम् ।

षष्ठी शेषे इति सामान्यलक्षणाविहितां षष्ठीं त्यक्त्वा याऽन्या विशेषलक्षणविहिता षष्ठी सा प्रतिपदविधाना सा च न समस्यते इति वार्त्तिकार्थ:।

तत्र व्याख्यानादेव वार्त्तिकार्थलाभे वार्त्तिकं न कर्त्तव्यम् । व्याख्यानञ्च न निर्धारणे इत्यत्र नेति योगो विभज्यते तेन प्रतिपदविधाना षष्ठी न समस्यते । ननु तर्हि कथं गृहस्वामी, विद्यादायादः, पृथिवीश्वर इति समासः । अत्र च स्वामीश्वराधिपतिदायाद इत्यादिना विशेषलक्षणे च ~~स्वामीश्वरादि~~ न तस्या विधानात् इति चेन्न शेषलक्षणैवात्र षष्ठी न हि स्वाम्यादिसूत्रेण षष्ठी विधीयते । किं तर्हि ? सप्तमी । सा तु सप्तमी षष्ठीं बाधिष्यते इति चकारेण पुनः षष्ठी प्रतिप्रसवः क्रियते । न ह्येवं विधा षष्ठी प्रतिपदविधानाभवति । अत एव न निर्धारणे इति निषेधो विधीयते । यतश्च निर्धारणमित्यत्रापि सैव शेषलक्षणा षष्ठी प्रतिप्रसूयते । अन्यथा हीयमपि प्रतिपदविधानैव षष्ठी स्यात् इति समासो न स्यात् । ततश्च प्रतिषेधसूत्रमनर्थकं स्यात् ।

सर्पिषो ज्ञानमित्यत्र ज्ञोऽविदर्थस्य करणे इति षष्ठी । अत्रेदं बोध्यम् । ज्ञोऽविदर्थस्य करणे इति षष्ठीप्रकरणे शेषे इति वर्तते । तत्र न भाषाणामश्नीयात् इति वत् षष्ठी शेषे इत्यनेनैव सिद्धा षष्ठी, प्रकरणं तु नियमार्थम् । षष्ठी भवत्येव श्रूयत एव न तस्याः समासो भव भवतीत्यर्थः। समासे सति लुका षष्ठ्यः श्रवणं न स्यात् । एवञ्च प्रतिपदविधानेति न वक्तव्यम् । ततश्च तदपवादभूता कृद्योगा इत्यपि न वक्तव्यम् । कर्तृकर्मणः कृति इत्यत्र हि शेषे निवृत्तमिति वक्ष्यते । तेन कर्तृकर्मविवक्षायामप्राप्तैव षष्ठी तेन विधीयते इति कुतः समासनिवृत्तिरिति दिक् ।

20- प्रादयो गताद्यर्थे प्रथमया

21- अत्यादयः क्रान्ताद्यर्थे द्वितीयया

22- अवादयः कुष्टाद्यर्थे तृतीयया

23- पर्यादयोग्लानाद्यर्थे चतुर्थ्या

24- निरादयः क्रान्ताद्यर्थे पञ्चम्याः

---

इमानि वार्त्तिकानि सौनागव्याकरणसिद्धानि न तु कात्यायनोक्तानि । तथैव कुगतिप्रादय [2/2/18] इति सूत्रे भाष्ये काशिकायाञ्च पठितानि । एतान्यपि व्याख्यातव्यानि । कुगतिप्रादयः इति सूत्रे नित्यं क्रीडाजीविकयोरिति सूत्रात् नित्यमिति वर्तते । कुशब्दोऽव्ययं परिगृह्यते । गत्यादिभिः साहचर्यात् न द्रव्यवचनः । कुगतिप्रादयः समर्थेन नित्यं समस्यते । कुः पापार्थे कुपुरूषः । गति उररीकृतम् । प्रादयः - दुर्निन्दायां दुष्पुरूषः, स्वती पूजायाम् सुपुरूषः, अतिपुरूषः, आपिङ्गलः । प्रायिकञ्चैतत् उपाधिवचनम् । अन्यत्रापि हि समासो दृश्यते कोष्णं कवोष्णम् । गतिग्रहणेनैव सिद्धे प्रादिग्रहणम् अगत्यर्थम् । सुपुरूषः, शोभनः पुरूषः इति विग्रहः । अत्र क्रियायोगाभावात् न गतित्वम् । तथापि समासः ।

तत्र व्यवस्थापनार्थमिमानि वार्त्तिकानि प्रवर्तन्ते । तथाहि गताद्यर्थे विद्यमानाः प्रादयः प्रथमान्तेन सहः समस्यन्ते । प्रगत आचार्यः प्राचार्यः । प्रेत्यस्य विवरणं गत इति गत आचार्य इत्येव अस्वपदविग्रहः नित्यसमासत्वात् । अभिगतो मुखम् अभिमुखः । प्रतिगतोऽक्षं प्रत्यक्ष इत्यादि प्रयोगाः ।

क्रान्ताद्यर्थे विद्यमाना अत्यादयः द्वितीयान्तेन समर्थेन समस्यते । अतिक्रान्तो मालाम् अतिमालः । अतिशब्दः क्रान्ते वर्तते । क्रान्तो मालामिति अस्वपदविग्रहः । एकविभक्तिच चेति मालाशब्दस्योपसर्जनत्वे गोस्त्रियोरिति ह्रस्वः ।

क्रुष्टाद्यर्थे विद्यमाना अवादयः तृतीयान्तैः सहसमस्यते । अवक्रुष्टः कोकिलया अवकोकिलः । कोकिल्या आहूतः इत्यर्थः । क्रुष्टः कोकिलयेति विग्रहः ।

ग्लानाद्यर्थे पर्यादयः चतुर्थ्यन्तेन समस्यते । परिग्लानोऽध्ययनाय पर्यध्ययनः । अध्ययनाय परिश्रान्त इत्यर्थः ।

क्रान्ताद्यर्थे निरादयः पन्चम्यन्तेन समस्यते । निष्क्रान्तः कौशाम्ब्याः निष्कौशाम्बिः । गोस्त्रियोरिति ह्रस्वः ।

25- इवेन सह समासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वन्चेति वक्तव्यम्

कुगतिप्रादयः (2/2/18) इति सूत्रे भाष्ये काशिकायान्च पठितम् । इवेनेवेत्यव्ययेन सुबन्तस्य समासः । सुपो धातुरिति लुगभावः अव्ययादुत्पन्नस्य तु अव्ययादाप् इति सुब्लुक्भवत्येव । पूर्वपदस्य प्रकृतिसिद्धस्वरश्च भवति न तु समासस्वर इति वक्तव्यम् । वाससी इव, जीमूतस्येवेत्यादि प्रयोगाः ।

वसेर्णिच्च इत्यसुन् प्रत्ययान्तो वासः शब्दः, वस्त्रशब्दः ष्ट्रन्

प्रत्ययान्तः, द्वावपि नित्याद्युदात्तौ ।

सह सुपा इति समासे सिद्धे वार्त्तिकेन समासविधान इव शब्दस्य पूर्व निपातनिवृत्यर्थम्। जीमूतशब्दस्य फिट् स्वरेणान्तोदात्तत्वम् । न तु समासस्येत्यन्तोदात्तत्वम् । अत्र यथार्थत्व प्रयुक्तोऽव्ययीभावस्तु न तत्र तस्येवेति निर्देशात् । अनित्य समासोऽयम् । अत एव वह्वृचा एव पदपाठे अवगृह्णान्ति। याजुपास्तु भिन्ने एव पदे पठन्ति । उद्वाहुरिव वामन इत्यादि व्यस्तप्रयोगाः संगच्छन्ते ।

प्रादिप्रसङ्गे कर्मप्रवचनीयानां प्रतिषेधो वक्तव्यम्

इदमपि वार्त्तिकं तत्रैव सूत्रे पठितम् । प्रादिग्रहणे यः प्रसङ्गसमासशास्त्रस्य तत्र कर्मप्रवचनीयानां समासो न भवतीति वक्तव्यम् । वृक्षं प्रति विद्योतते विद्युत् । साधुर्देवदत्तो भातरं प्रति, इति ।

व्याख्यानेन बद्धे चेदं वार्त्तिकं गतार्थम् । तथाहि । लक्षणादिष्वर्थेषु कर्मप्रवचनीयसंज्ञा भवति । न च तेऽर्थाः समासेन गम्यन्ते इत्यनभिधानात् कर्मप्रवचनीयानां समासो न भवति । यत्र तेऽर्थाः गम्यन्ते तत्र भवत्येव समासः । अतिस्तुतमिति ।

भाष्ये तु प्रादिप्रसङ्गे इति वार्त्तिकम्, व्यक्तप्रतिषेधश्चेति वार्त्तिकद्वयं न्यासान्तरेण प्रत्याख्यातम् । कुगतिप्रादय इत्यस्य स्थाने "स्वाङ्स्वतिदुर्गतिवचनात् सिद्धम्" । एतदपि वार्त्तिकमेव इति दिक् ।

26- बहुव्रीहि: समानाधिकरणानामिति वक्तव्यम्

अनेकमन्यपदार्थे (2/2/24) इति सूत्रे भाष्ये काशिकायाञ्च पठित-मिदं वार्त्तिकम् । अनेकं सुबन्तमन्यपदार्थे वर्तमानं सहसमस्यते बहुव्रीहिश्च समासो भवति । प्रथमार्थमेकं वर्जयित्वा सर्वेषु विभक्त्यर्थेषु बहुव्रीहिर्भवति । प्राप्तमुदकं यं ग्रामं प्राप्तोदको ग्राम: । उदरथोऽनड्वान्, उपहृतपशूरुद्र:, उद्धृतौदना स्थाली, चित्रगुर्देवदत्त:, वीरपुरुष को ग्राम इत्युदाहरणानि । प्रथमार्थे तु न भवति वृष्टे देवे गत: ।

अनेकग्रहणं बहूनामपि यथा स्यात् -

सुसूक्ष्मजटकेशेन सुगजाजिनवाससा
समन्तशितिरन्ध्रेण द्वयोर्वृत्तौ न सिध्यति इत्युक्तं भाष्ये ।

तत्र बहुव्रीहि: समानाधिकरणानामिति वक्तव्यम् । व्यधिकरणानां माभूदिति । पञ्चभिर्भुक्तमस्येति ।

एतदपि वार्त्तिकं व्याख्यानात् सिद्धम् । व्याख्यानञ्चेत्थम् । अभिधानलक्षणा हि कृत्तद्धितसमासा भवन्ति । न च व्यधिकरणानां बहुव्रीहौ कृते विवक्षितार्थाभिधानमस्ति । न हि पञ्चभिभुक्तमस्येति वाक्यात् योऽर्थ: प्रतीयते स पञ्चभुक्तशब्दात् गम्यते, तस्मात् अनभिधानात् व्यधिकरणानां बहु-व्रीहिर्न भविष्यति । यत्र तु अभिधानमस्ति तत्र वैयधिकरण्येऽपि भवत्येव समास: । यथा कण्ठेकाल इति ।

27- अव्ययानाञ्च बहुव्रीहिर्वक्तव्यः

इदमपि वार्त्तिकं तत्रैव सूत्रे पठितम् । उच्चैराद्यव्ययानामधिकरणवृत्तित्वात् व्यधिकरणत्वात् न प्राप्नोतीति वचनं कर्त्तव्यम् । उच्चैर्मुखः नीचैर्मुखः । असमानाधिकरणार्थमिदम् ।

अत्र चकारात् अनव्ययानाञ्च क्वचित् भवति । यथा कण्ठे स्थितः कालो यस्येति कण्ठकालः । शब्दशक्तिस्वभावाच्च क्वाचित्कव्यवस्था । व्याख्यानाच्चेदमपि सिद्धमिति दिक् ।

28- सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च वक्तव्यम्

इदमपि वार्त्तिकं तत्रैव सूत्रे पठितम् । सप्तम्यन्तं पूर्वपदं यस्य तत् सप्तमीपूर्वपदम् । तस्य परेण पदान्तरेण समासः । तस्य च सप्तम्यन्तपूर्वपदस्योत्तरपदलोपो भवति । कण्ठे स्थितः कालोऽस्येति कण्ठेकालः । अत्र कण्ठे स्थित इत्यत्र सप्तमीति योगविभागात् समासः । यदा तु कण्ठेस्थ इति तदा सुपि स्थः इति कः । अमूर्द्धमस्तकादित्यलुक् अत्र सप्तम्यन्तपूर्वपदस्य समानाधिकरणत्वात् । बहुव्रीहेः सिद्धत्वात् उत्तरपदलोपार्थं वार्त्तिकारम्भः । तेन वैयधिकरण्येऽपि अत्र गमकत्वमस्तीति प्रदर्श्यते ।

एवमुपमानं पूर्वपदं यस्योत्तरपदस्य तत् पदान्तरेण समस्यते तस्योपमानपूर्वपदस्योत्तरपदलोपो विधीयते । उष्ट्रमुखमिव मुखमस्योष्ट्रमुखः, खरमुखः ।

अत्र उष्ट्र उपमानं पूर्वपदं मुखस्य । अवयवधर्मेण समुदायव्यपदेशात् उष्ट्रस्योपमानतो-त्युपमान पूर्वपदमुष्ट्रमुखशब्दः अत्रोपमानोपमेययोर्वैयधिकरण्या वचनमुत्तरपदलोपार्थन्चेति ।

29- समुदायविकार षष्ठ्याश्च बहुव्रीहिरुत्तरपदलोपश्चेति वक्तव्यः

इदमपि वार्त्तिकं तत्रैव सूत्रे भाष्ये काशिकायान्च पठितम् । समुदाय-षष्ठ्यन्तात् विकारषष्ठ्यन्ताच्च पूर्वपदात् परं युदुत्तरपदं तत्परं पदान्तरेण समस्यते । तस्य समुदायविकार षष्ठ्यन्तपूर्वपदस्योत्तरपदस्य लोपो भवति । केशानां संघातकेश संघातः स चूडास्येति केशचूडः, इति । अत्र समुदायसमुदायिसम्बन्धे षष्ठी । सुवर्णस्य विकारोऽलङ्कारोऽस्य सुवर्णलङ्कारः इति ।

यद्यपि केश समाहारे केशशब्दस्य वृत्तेः, सवर्णविकारे स्वर्णशब्दस्य वृत्तेः केशचूडः, स्वर्णालंकार इति सिद्धम् । तथापि वचनं केशसमाहारचूडः स्वर्णविकारोस्वर्णसब्दस्य चूलङ्कार इति उत्तरपदस्य श्रवणं माभूदिति ।

30- प्रादिभ्यो धातुजस्योत्तरपदस्य लोपश्च वा बहुव्रीहिर्वक्तव्यः

इदमपि तत्रैव सूत्रे पठितम् । धातोर्जातं धातुजम् । प्रादिभ्यः पूर्वपदेभ्यः परं यद्धातुजमुत्तरपदं पतितशब्दादि तदन्तस्य बहुव्रीहिर्भवति तस्य चोत्तर-पदस्य वा लोपो भवति । प्रपतितं पर्णमस्य प्रपर्णः, प्रपतितपर्णः इत्यादिप्रयोगः ।

इदं न वक्तव्यमेव, प्रादयो हि ससाधनां क्रियां प्राहुः । यथा निष्कौशाम्बिः, निर्वाराणासिः प्राचार्य इति ।

31- ननोऽस्त्यर्थानां बहुव्रीहिर्वा चोत्तरपदलोपश्च वक्तव्यः

इदमपि तत्रैव पठितम् । नञ उत्तरेषां विद्यमानादीनां समासो भवति उत्तरपदस्य यलोपो भवतीति वाक्यार्थः अविद्यमानः पुत्रोऽस्येति अपुत्रः । अविद्यमाना भार्या अस्येति अभार्यः इति प्रयोगः ।

32- सुबधिकारेऽस्तिक्षीरादीनां बहुव्रीहिर्वक्तव्यः

इदमपि तत्रैव सूत्रे पठितम् । अस्ति शब्दश्चाय तिङन्तः । अस्ति क्षीरादेः समासो भवति सुबधिकारे । अस्ति क्षीरा ब्राह्मणी । अत्र अस्तीति तिङन्तं मत्वा वचनम् । अस्तीति निपातत्वमाश्रियणे वचनं न कर्त्तव्यम् उपसर्गविभक्तिस्वरप्रतिरूपकाश्च निपाता भवन्ति । विभक्तिप्रतिरूपकोऽय-मस्ति शब्दो निपातो न तिङन्तः । तेनास्तिक्षीरः ब्राह्मणीति सिद्धम् ।

बहुव्रीहिः समानाधिरणेत्यादीनि इमानि वार्त्तिकानि परिगणन रूपेण पठितानि । तत्र अनभिधानात् असमानाधिकरणानां बहुव्रीहिर्न भविष्यति । यथा पन्चभिर्भुक्तमस्येति । अनभिधानन्वाक्यं वक्तव्यं क्रियमाणेऽपि परिगणने यत्राभिधानं न भवति न तत्र बहुव्रीहिर्भवति । यथा पन्चभुक्तवन्तोऽस्येति ।

यदि अनभिधानमभ्युपगम्यापि मन्दबुद्धिव्युत्पादनाय परिगणनं क्रियते तदार्थ-परिगणनमपि कर्त्तव्यम् । कस्मिन्नर्थे समासः स्यादिति । एवञ्च अर्थनियमे मत्वर्थग्रहणं कर्त्तव्यम् । मत्वर्थे यः सः बहुव्रीहिर्वक्तव्यः, इह माभूत कष्टं-श्रितमनेनेति । तथा उत्तरसूत्रस्य वचनार्थ उपपन्नो भवति । संख्ययाऽव्यया-सन्नापूराधिकसंख्याः संख्येये इत्युत्तरसूत्रम् । संख्येये या संख्या वर्त्तते तया सहाव्ययादयः समस्यन्ते इत्यर्थः । तत्र संख्ये यस्यार्थस्य चान्यपदार्थत्वात् सिद्धे समासे उत्तरसूत्रमनर्थकं स्यात् । यदात्वनेन मत्वर्थे समासस्तदा तत् सार्थक-मिति । षष्ठ्यर्थः सप्तम्यर्थश्च मत्वर्थ इति दिक् ।

## 33- सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः

दिङ्नामान्यन्तराले [2/2/26] इति सूत्रे भाष्यकारवचनमिदं तत्र दिक् समाससंयोगयोश्चान्तरालप्रधानाभिधानात् इति वार्त्तिकम् । दिङ्नामान्य-न्तराले, इति तेन सहेति तुल्ययोगे [2/2/27] इति सूत्रद्वयस्य बहुव्रीहिरशिष्यः । अन्तरालप्रधानत्वात् अन्तरालस्य चान्यपदार्थत्वात् । तत्र पूर्वेणैव सिद्धे व्यर्थं वचनम्। दक्षिणपूर्वादिक् पूर्वोत्तरा इत्यादिप्रयोगाः । सह पुत्रेणागतः सपुत्रः इत्यादि द्वितीययोगस्योदाहरणम् ।

तत्र सूत्राभावे दक्षिणपूर्वेत्यादौ समानाधिकरणलक्षणः पुंवदभावो न प्राप्नोति । अयं भावः । सूत्रारम्भे अन्तराले यानि दिङ्नामानि वर्तन्ते तानि समस्यन्ते । दक्षिणादीनाञ्च सामीप्यादन्तरालवृत्तित्वम् । ततश्च दक्षिणाचासौ पूर्वेति सामानाधिकरण्यात् पुंवद्भावः सिध्यति । सूत्रेत्व नारब्धे-

अन्यपदार्थसम्पादनाय दक्षिणपूर्वशब्दयोः स्वार्थे एव वृत्तिरुपगन्तव्या ततो वैयधिकरण्यम् । ननु समानाधिकरण्येऽपि विशेषणसमासः सिध्यति । नैतदस्ति पूर्वपदप्रकृतिस्वरार्थं विभाषा दिक्समासे इति विकल्पित सर्वनामसंज्ञार्थं च बहुव्रीहि-संज्ञैवेष्टव्या ।

किन्च नहि सामानाधिकरण्यमात्र प्रतिबद्धः पुंवदभावः किन्तु भाषितपुंस्कत्वनिबन्धनोऽपि । समानायां चाकृतौ यदभाषितपुंस्कं तस्य पुंवद्भावः । भाषितपुंस्कशब्दस्य ह्यर्थः, प्रवृत्तिनिमित्तलक्षणोऽन्यपदार्थोऽभिधेयो न शब्दः तथा च तत्र पुंवद्भावाप्राप्तौ सर्वनाम्नो वृत्तिमात्रे पुंवद्भावो वक्तव्यः । दक्षिणोत्तरपूर्वाणामित्येवमर्थम् । नामग्रहणं रूढ्यर्थम् । इह माभूत् ऐन्द्रयाश्च कौवेर्याश्च दिशोर्यदन्तरालमिति । मात्रग्रहणात् विभाषादिक् समासे इति यदा सर्वनामसंज्ञा नास्ति तदापि भवति । एवन्च सूत्रेण नार्थः ।

अथवा मत्वर्थे पूर्वेण समासः । अमत्वर्थोऽयं योगः । अप्रथमार्थे पूर्वयोगः प्रथमार्थेऽपि अयमिति । सामानाधिकरण्ये पूर्वयोगः वैयधिकरण्येऽपि अयं स्यात् इति कबभावार्थन्चापि अयं योगः इति दिक् ।

## 34- बहुव्वनिमयः

इदं भाष्यकारवचनम् । अल्पाच्तरम् (2/2/34) इति सूत्रे पठितम् । तत्र द्वन्द्वे मत वर्तते अल्पाच्तरं शब्दरूपं द्वन्द्वे समासे पूर्वं प्रयोक्तव्यम् । प्लक्षश्च न्यग्रोधश्च प्लक्षन्यग्रोधौ । तत्र तरबर्थविचाराधिकरणे मिमयं तन्त्रं तरनिर्देशः अहोस्विदतन्त्रमिति प्रश्नो जातः । अयमर्थः । किं तरबर्थः प्रकर्षः आश्रीयते

अथ स्वार्थे एव निपातनात् तरष्कृत: । इति । तत्र तन्त्रपक्षे द्वयोर्नियमो बहूनामनियम: स्यात् । द्वयोरेकस्योत्कर्षे तरप् । एवञ्च शङ्खदुन्दुभिवीणानामित्यत्र दोष: । दुन्दुभि शब्दस्यापि पूर्वनिपात: प्राप्नोति ।

अतन्त्रपक्षे चाल्पत्वमेवोपात्तापेक्षया ग्राह्यं तथा च दुन्दुभि शब्दापेक्षयाल्पाच्त्वसम्भवात् शङ्खवीणाशब्दयोरन्यतरस्य पूर्वनिपातो भवति । न तु दुन्दुभिशब्दस्य । किन्तु मृदङ्गशङ्खतूणवा इति न सिध्यति शङ्खशब्दस्याल्पाच्त्वात् पूर्वनिपात: प्राप्नोति । तत्र निर्णय: । उभयपक्षेऽदोष: । तन्त्रपक्षे तरब्ग्रहणं न कार्यम् । अल्पाज् इति वक्तव्यम् ।

अतन्त्रपक्षे च - अतन्त्रे तरनिर्देशे शङ्खतूणवयोर्मृदङ्गेन समास: । शङ्खश्च तूणवश्चेति शङ्खतूणवौ, तौ च मृदङ्गश्चेति मृदङ्गशङ्खतूणवा: । यत्र च बहूनां पूर्वनिपातप्रसङ्ग: तत्रैकस्य नियमोऽनियम: शेषेषु इति वक्तव्यम् । पटुमृदुशुक्ला, पटुशुक्लमृदव इति ।

## 35- द्वन्द्वे घ्यन्तादजाद्यन्तान्तं विप्रतिषेधेन

इदञ्च निष्ठा (2/2/36) इति सूत्रे भाष्ये न दृश्यते । द्वन्द्वे समासे घ्यन्तात् अजाद्यन्तं विप्रतिषेधेन भवति । द्वन्द्वे घि इत्यस्यावकाश: पटुशुक्लौ, पटुगुप्तौ इति । अजाद्यन्तमित्यस्यावकाश: उष्ट्रशशौ उष्ट्रखरौ इति द्वन्द्वाग्नी इत्यत्रोभयं प्राप्नोति । अजाद्यन्तं भवति विप्रतिषेधे नेति ।

36- ऋतुनक्षत्राणामानुपूर्व्येण समानाक्षराणां पूर्वनिपातो वाच्यः

इदन्च अल्पाच्तरमिति सूत्रे भाष्ये काशिकायान्वोक्तम् ऋतूनामानुपूर्व्यं प्रादुर्भाव कृतम् । नक्षत्राणामुदयकृतम् । ऋतु नक्षत्राणामित्यत्रैव वर्णग्रहणं कस्मान्न कृतमिति पर्यनुयोगदोषमाशङ्क्य समानाक्षराणामित्युक्तम् । असमानाक्षराणामपि वर्णानामानुपूर्व्येण पूर्वनिपात इष्यते इति पृथक् वचनम् । आनुपूर्व्यन्च वर्णानां जन्मकृतम् इति लोकव्यवहारे प्रसिद्धम् । ग्रीष्मवसन्तौ, कृत्तिकारोहिण्यौ इति प्रयोगः ।

37- अभ्यर्हितं पूर्वं निपततीति वक्तव्यम्

इदमपि तत्रैव पठितम् । अभ्यर्हितं पूज्यम् । तस्य च पूर्वनिपातः। मातापितरौ । गर्भधारणादिना पित्रपेक्षया माता अभ्यर्हिता । श्रद्धामेधे इति ।

38- लघ्वक्षरं पूर्वं निपाततीति वक्तव्यम्

इदमपि तत्रैव पठितम् । लघ्वक्षरशब्दः पूर्वं निपतति न च पूर्वेण सिद्धम् । कुशकाशम्, शरचापम् । अत्र कुशशब्दो लघ्वक्षरः, ह्रस्वं लघु । काशशब्दः कुरुः ।

39- वर्णानामनुपूर्व्येण पूर्वनिपातः

इदमपि तत्रैव पठितम् । वर्णानां ब्राह्मणादीनां आनुपूर्व्येण पूर्वनिपातः । आनुपूर्व्यञ्च जन्मकृतम् । तच्च श्रुतिप्रसिद्धम् । ब्राह्मणोऽस्य मुखमासीदित्यादि । ब्राह्मणक्षत्रियविट्शूद्रा इति ।

40- भ्रातुश्च ज्यायसः पूर्वनिपातो वक्तव्यः

इदमपि तत्रैव सूत्रे पठितम् । ज्येष्ठस्य भ्रातुः पूर्वनिपातः । युधिष्ठिरार्जुनौ इति प्रयोगः । एतच्च न पूर्वेण सिद्धम् । ~~अल्पा~~ अल्पाच्त्वात् परस्यैव पूर्वनिपातत्वं स्यात् इति वचनम् ।

41- संख्याया अल्पीयस्याः पूर्वनिपातो वक्तव्यः

इदमपि तत्रैव पठितम् । इदञ्च द्वन्द्वे अद्वन्द्वे वा । द्वित्राः, त्रिचतुराः इति बहुव्रीहिः । नवतिशतम् इति द्वन्द्वः ।

42- धर्मादिषूभयम्

इदमपि तत्रैव पठितम् । काशिकायाञ्च न दृश्यते । धर्मादिषु उभयं पूर्वं निपतति । धर्मार्थौ, अर्थधर्मौ गुणवृद्धी, वृद्धिगुणौ, आद्यन्तौ अन्तादीति ।

43- सर्वनामसंख्ययोरुपसंख्यानम्

सप्तमीविशेषणे बहुव्रीहौ (2/2/35) इति सूत्रे भाष्ये काशिकाया-न्च पठितमिदम् । सप्तम्यन्तं विशेषणन्च बहुव्रीहिसमासे पूर्वं प्रयोक्तव्यम् इति सूत्रार्थः । सर्वोपसर्जनत्वात् बहुव्रीहेरनियमे प्राप्ते नियमार्थं सूत्रम्। कण्ठे कालः, उरसि लोमा, चित्रगुः, शबलगुः, तत्र सर्वनामसंख्ययोः पूर्वनिपातो वक्तव्यः । सर्वश्वेतः, सर्वकृष्णः, द्विशुक्लः, द्विकृष्णः । अनयोरेव मिथः संप्रधारणायां परत्वात् संख्यायाः पूर्वनिपातः द्व्यन्यः, त्र्यन्यः इति ।

44- वा प्रियस्य पूर्वनिपातः

इदमपि तत्रैव सूत्रे पठितम् । प्रियशब्दस्य विकल्पेन पूर्वनिपातो वक्तव्यः । प्रियगुडः, गुडप्रियः । सप्तमीविशेषण इति प्रियशब्दस्य नित्यं पूर्वनिपाते प्राप्ते वचनम् ।

45- सप्तम्याः पूर्वनिपाते प्राप्ते गड्वादिभ्यः सप्तम्यन्तं परम्

इदमपि तत्रैव सूत्रे पठितम् । सप्तम्यन्तस्य पूर्वनिपाते प्राप्ते गड्वादिभ्यः परवचनं कर्त्तव्यम् इति । गडुकण्ठः गडुशिराः । उन्च व्याख्यानेन सिद्धम् । तच्चेत्थम् आहिताग्न्यादेराकृतिगणत्वात् गडुकण्ठप्रभृतयस्तत्रैव द्रष्टव्याः इति । तेन गड्वादिभ्यः परं सप्तम्यन्तं भविष्यति । वहेगडुरिति । प्राप्तस्य चाबाधा वक्तव्या । एतच्च वाहिताग्न्यादिषु इत्यतो वा ग्रहणं क्रियते । सा

च व्यवस्थितविभाषा । तेन प्राप्तस्य परनिपातनस्य बाधनं भविष्यति इति दिक्।

46-

निष्ठायाः पूर्वनिपाते जातिकालसुखादिभ्यः परवचनम्

इन्च निष्ठा [2/2/36] इति सूत्रे भाष्ये काशिकायान्चोक्तम् । बहुव्रीहिसमासे निष्ठान्तं पूर्वं प्रयोक्तव्यम् । कृतकटः इत्यादिः । तत्र जाति-काल सुखादिभ्यः निष्ठा परा भवन्तीति वक्तव्यम् । शाङ्र्गजग्धी, पलाण्डु-भक्षिती, मासजाता, सुखजाता, दुःखजाता । इदमपि व्याख्यानादेव सिद्धम्। आहितादिषु पाठात् । सारङ्गशब्दो जातिवचनः ।

किन्च जातिकालसुखादिभ्योऽनाच्छादनात् इति सूत्राज्ज्ञापकात् । बहुव्रीहौ आच्छादनभिन्न जात्यादिभ्यः परमुत्तरपदं क्तान्तमन्तोदात्तं भवति कृतादीन् वर्जयित्वा इत्यर्थः । तेन ज्ञाप्यते परा अत्र निष्ठा भवन्तीति । कृतकट इत्यत्र प्राप्तस्याबाधा वक्तव्या ।

47- प्रहरणार्थेभ्यश्च परे निष्ठा सप्तम्यौ भवतः

इदमपि तत्रैव सूत्रे पठितम्: अस्युद्यतः, मुसलोद्यतः असिपाणिः, दण्डपाणिः । प्राप्तस्याचाबाधा । उद्यतासिः । अत्र सप्तमीविशेषणे इति पूर्वनिपातः । एतदपि वार्त्तिकं न कर्त्तव्यम् । आहितादिषु आकृतिगणत्वात् पाठात् सिद्धेरिति दिक् ।

।। इति द्वितीयाध्यायस्य द्वितीयः पादः समाप्तः ।।

:: :: ::

द्वितीयाध्याये तृतीये पादे द्वितीयादीनां विभक्तीनां व्यवस्था। तत्र प्रथमं अनभिहिताधिकारः क्रियते। अनुक्तेषु कर्मादिषु द्वितीयादिविधानार्थम्। अनभिहिताधिकारमाश्रित्य किन्चिदं विचार्यते। अनभिहित अनुक्ते अनिर्दिष्टे इत्यर्थः। अभिधानन्च तिङ्कृत्तद्धितसमासैः परिसंख्यानं कृतम्। परिसंख्यानाभावे च सामान्येनाभिहिते द्वितीयादयो न भवन्ति तथा च कटं करोति भीष्ममुदारं दर्शनीयमित्यत्र कटशब्दात् विशेष्य वाचिन उत्पद्यमानया द्वितीयया अनन्वयेन कटगतस्य कर्मत्वस्याभिहितत्वात् भीष्मादिभ्यो द्वितीया न स्यात्।

तिङादिभिरभिहिते तु प्रथमैव। यथा क्रियते कटः कृतः कटः, शत्यः शतिकोऽश्वः, प्राप्तमुदकं यं स ग्रामं प्राप्तोदको ग्रामः इति।

कर्मणि द्वितीयेत्यत्रानभिहिताधिकारात् अनुक्ते कर्मणि द्वितीया भवतीत्यर्थे हरिं भजतीति द्वितीया विभक्तिः। अत्रेदं विचार्यते अनभिहिताधिकारः कर्त्तव्यो न वेति। तत्रेदं वार्त्तिकम् - अनभिहितस्तु विभक्त्यर्थस्तस्मादनभिहित वचनम् (अभिहिते हि प्रथमाभावः) अत्र वार्त्तिके भाष्यम् "अनभिहितस्तु विभक्त्यर्थः। कः पुनर्विभक्त्यर्थः। एकत्वादयो विभक्त्यर्थाः। तेष्वनभिहितेषु कर्मादयोऽभिहिता विभक्तीनामुत्पत्तौ निमितत्त्वाय माभूवन्निति तस्मादनभिहितवचनम्। तस्मादनभिहिताधिकारः क्रियते। अवश्यं चैतद्विज्ञेयमेकत्वादयो विभक्त्यर्था इति। अनभिहिते हि प्रथमाभावः। यो हि मन्यते कर्मादयो विभक्त्यर्था इति। तेष्वभिहितेषु सामर्थ्यान्मे विभक्तीनामुत्पत्तिर्न भविष्यति प्रथमा तस्य न प्राप्नोति। क्व? कृतः कटः, किं

कारणं प्रातिपदिकेनोक्तः प्रातिपदिकार्थः" ।

अत्र कैयटः - "कर्मणि द्वितीयेत्यादेर्बहुषु बहुवचनमित्यादिना एकवाक्यता । तत्र यदा एकत्वादीनि विशेषणानि कर्मादीनि विशेष्याणि एकस्य यत्कर्म तत्र द्वितीयैकवचनमिति तदा कर्म द्वितीयार्थः सम्पद्यते । तच्च यदा कृदादिभिरभिहितं भवति तदा गतार्थत्वात् द्वितीयायाः प्राप्तिरेव नास्ति । अतो नार्थोऽनभिहिताधिकारेण । यदा तु कर्मादीनां विशेषणत्वम् एकत्वादीनां विशेष्यत्वम् । कर्मणो यदेकत्वादि तत्र द्वितीयेति तदेकत्वादयो विभक्त्यर्थाः सम्पद्यन्ते । ते चाभिहितेष्वपि कृदादिभिः कर्मादिषु अनभिहिता इति तदभिधानाय द्वितीयादीनां प्रसङ्गेः तन्निवारणाय कर्त्तव्योऽनभिहिताधिकारः।

यदा वक्ष्यमाणानां विभक्त्यर्थत्वं तदा प्रातिपदिकार्थेनापि प्रथमार्थेन भाव्यं तस्य प्रातिपदिकेनैवोक्तत्वात् वृक्ष इत्यादौ प्रथमा न प्राप्नोति । एकत्वादीनां तु विभक्त्यर्थत्वे तदभिधानाय प्रथमा प्रवर्तते एव" (पृ० 478)

ननु अनभिहिताधिकारो न कर्त्तव्यः । तत्र प्रातिपदिकेन उक्तेऽपि प्रातिपदिकार्थे वचनसामर्थ्यात् तदर्थे प्रथमा भविष्यति । द्वितीयादयस्तु अनभिहिते चरितार्थत्वात् साकाङ्क्षत्वात् अभिहिते न भविष्यन्ति । एकत्वादिविभक्त्यर्थवादिमते च पचति ओदनं देवदत्त इत्यादौ तिङा एकत्वादीनामुक्तत्वात् देवदत्त इत्यादौ प्रथमा न प्राप्नोति । परिगणनमनभिहिताधिकारकरणञ्च गौरवग्रस्तमिति । न च सर्वत्रापेक्षितक्रियापदस्यैव प्रयोगात् सर्वत्रैव

---

1- महाभाष्यम् - पृ० 478.

तिङा एकत्वादीनामभिधानं प्राप्नोतीति वचनात् प्रथमा भविष्यति । वृक्षः प्लक्ष इत्यादावपि अस्ति भवत्यादिक्रियाध्याहारेणैव बोधः । अनारम्भवादिमते च परिगणनाभावात् कटं करोति भीष्ममुदारं शोभनं दर्शनीयमित्यादौ कटशब्दादुत्पद्यमानया द्वितीययाभिहितं कर्मेति कृत्वा भीष्मादिभ्यो द्वितीया न प्राप्नोति किन्तु प्रथमैव । आरम्भवादिमते च परिगणनात् कटशब्दोत्तरद्वितीययाभिहितेऽपि कर्मणि भीष्मादिभ्यो द्वितीया सिध्यतीति न दोष इति वाच्यम् अनारम्भवादिमते अनभिहिताधिकारपरिगणनयोरभावात् सामर्थ्यात् विभक्तीनामुत्पत्तिर्भविष्यति । अस्ति च सामर्थ्यम् ।

कर्मविशेषो वक्तव्यः । भीष्मादियुक्तत्कटसम्बन्धिकर्मत्वं प्रतिपाद्यम् । तत्र च यथा कटशब्देन भीष्मादीनामनभिधानात् तदभिधानाय भीष्मादिशब्दप्रयोगः तथा द्वितीयाऽपि तेभ्यः भविष्यति । न हि अन्यथातद्विशिष्टत्वं कटस्य प्रत्याययितुं शक्यते । आरम्भवादिमते च एकः द्वौ बहवः इत्यादौ एकत्वादीनामुक्तत्वात् प्रथमा न प्राप्नोतीति चेन्न कर्मादयो विभक्त्यर्था इति मतेऽपि बहुषु बहुवचनमित्यादेः कर्मणि द्वितीयेत्यादिना एकवाक्यतया एकत्वादीनामपि विभक्त्यर्थता वाच्या । गुणप्रधानभाव एव तु विपरीतः । एवञ्च एकत्वादयोऽपि अवश्यमेव निमित्तत्वेनोपादेयाः । कर्मण एकत्वे द्वित्वे बहुत्व इति । एकौ द्वौ इत्यादौ च वचनग्रहणात् प्रथमा भविष्यति । अथवा समयाद् भविष्यति । एकस्मिन् द्विवचनाद्यभावस्तु अर्थतःइति संख्याविभक्त्यर्थ इति पक्षे सूत्रे कर्त्तव्यमेव ।

48- उभसर्वतसो: कार्याधिगुपर्यादिषु त्रिषु ।
द्वितीयाऽऽम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते ।।

"कर्मणि द्वितीया (2/3/1) इति सूत्रे भाष्ये पठितमिदं श्लोकवार्त्तिकम् । द्वितीयादय: शब्दा: सुपां त्रिकेषु पूर्वाचार्यै: स्मर्यन्ते तैरेवात्रापि व्यवहार: । कर्मशब्देन कारकं कर्म गृह्यते न तु क्रिया । कर्मणि कारके या संख्या तत्र द्वितीयाविभक्तिर्भवति । कटं करोति, ग्रामं गच्छति । कटादे: कर्तुरीप्सिततममिति कर्मसंज्ञायामनेन द्वितीया । तत्र शेषपूरणार्थं वार्त्तिकं प्रवृत्तम् । उभसर्वतयोरित्यस्य उभयसर्वशब्दयोस्तसिलन्तयो: प्रयोगे इत्यर्थ: । उभशब्देनात्र उभयशब्दो गृह्यते । तस्यैकदेशस्योभशब्दस्यानुकृतत्वात् । उभशब्दस्य तसिलन्तस्याभावात् । तस्य द्विवचनटाब्विषयत्वात् । तथा चोक्तम् - "अन्याभावो नित्यद्विवचनटाब् विषयत्वात् उभयोऽन्यत्र" इति ।

उभयतो ग्रामम् सर्वतो ग्रामम् । अत्र ग्रामस्य कर्तु: क्रियया इष्टतमत्वाभावात् कर्मत्वाभावात् द्वितीया न स्यादिति उभयतोयोगे सर्वतो योगे च द्वितीया । एषा चोपपदविभक्ति: । अत्र शेषलक्षणा षष्ठी प्राप्ता, तां प्रबाध्य द्वितीयानेन वार्त्तिकेन क्रियते । एवं धिग्योगेऽपि द्वितीया कार्या । धिक्देवदत्तम् । निन्दार्थोऽयम् । तथा उपर्यादिषु त्रिषु आम्रेडितान्तेषु योगे द्वितीया कार्या । आम्रेडितान्तेषु कृत द्विर्वचनेषु इत्यर्थ: । कृतद्वित्वस्य परमाम्रेडितं भवति । उपर्युपरि ग्रामम्, अध्यधिग्रामम्, अधोऽधो ग्रामम् । उपर्यध्यधस्सामीप्ये इति सूत्रेण द्विर्वचनम् ।

ततोऽन्यत्रापि दृश्यते । दृशिग्रहणं प्रयोगानुसरणार्थम् । देवदत्तं

प्रति इति उदाहरणम् । ततोऽन्यत्रापि दृश्यते यथा अभितः परितः समयादि-योगेऽपि अत्रेदं बोध्यम्२। महाभाष्ये विभिन्नर्निदर्शनस्मृत्या वार्त्तिकत्रयमुपात्तम्। तत्र प्रथमम् । कात्यायनीयं वार्त्तिकम् - समयानिकषाहा योगेषूपसंख्यानम् । समया ग्रामम्, निकषा ग्रामम्, हा देवदत्तमित्यादि । एषु षष्ठी प्राप्ता तां प्रबाध्य द्वितीया विधीयते ।

तत्रैव भाष्ये अपर आह इत्यनेन द्वितीयं वार्त्तिकमवतारितम् - द्वितीयाविधानेऽभितः परितः समयानिकषाध्यधिधिग्योगेषूपसंख्यानम् । अभितो ग्रामम्, परितो ग्रामम् । अध्यधिग्रामम्, धिग्वृषलमित्यादि एष्वपि शेषषष्ठी प्राप्ता द्वितीया विधीयते । अन्यमतेन चेदम् उभसर्वतसोरित्यादिवार्त्तिक भवतारितम् । तत्र केनचित् किन्चित् स्मृतिमिति दर्शनायानेकस्मृत्युपन्याः कृत इति बोध्यम् ।

काशिकायान्च ततोऽन्यत्रापि दृश्यते इत्यस्यैव व्याख्यानभूतम्, अभितः परित इत्यादि वार्त्तिकमवतारितम् । अत्र वार्त्तिके अपि शब्दो विकल्पार्थ इति न्यासः तेन हा तात । हा मातरित्यादौ न द्वितीया ।

49- अभितः परितः समयानिकषा हा प्रतियोगेषु च दृश्यते

एतदपि प्रकृतसूत्रे भाष्ये उक्तम् । एतेषां योगे द्वितीया विधीयते । उदाहरणानि प्रोक्तानि । प्रतियोगेऽपि बुभुक्षितं न प्रतिभाति किन्चित् । अत्र प्रतिरूपसर्गः क्रिया विशेषकत्वात् न कर्मप्रवचनीयः । अभितः परित इत्यत्र पर्यभिभ्यां तसिरिति तसिः ।

## 50- चतुर्थीविधाने तादर्थ्ये उपसंख्यानम्

चतुर्थीसम्प्रदाने (2/3/13) इति सूत्रे भाष्ये काशिकायान्च पठित-मिदं वार्त्तिकम् । सम्प्रदाने कारके चतुर्थी विभक्तिर्भवति उपाध्यायाय गां ददाति । तत्र वार्त्तिकम् । तादर्थ्यं इत्यत्र तच्छब्देन कार्यं निर्दिश्यते । तस्मै इदं तदर्थमिति समासेन विशिष्टकार्यप्रयोजनमभिधीयते । तदर्थस्य भावस्तादर्थ्यम् इति कार्यकारणसम्बन्ध उच्यते समासकृत्तद्धितेषु भावप्रत्ययेन सम्बन्धाभिधान-मिति वचनात् । तत्र द्विष्ठत्वेऽपि सम्बन्धस्य यथा षष्ठी विशेषणादेव भवति न विशेष्यात् राज्ञः पुरुष इति तथा चतुर्थी यूपाय दार्विति । हेतुतृतीयापि विशेष्याद् दारुशब्दान्न भवति । हेतुहेतुमद्भावस्य चतुर्थ्यैव गमितत्वात् प्राति-पदिकार्थ व्यतिरेके च हेतुतृतीयाया विधानात् इह च प्रातिपदिकार्थ व्यतिरेका-भावात् ।

तस्मायित्युपकार्यं हि कार्यं प्रत्यवमृश्यते ।
तदर्थ शब्दात्सम्बन्धे, भावप्रत्यय इष्यते ।।

गम्यमानविभक्तित्वाच्चतुर्थी कार्यवाचिनि ।
गुणे कृतास्पदा तस्मात् कारणं नावगाहते ।। इति

ननु यदि तादर्थ्ये उपसंख्यानं क्रियते । नार्थः सम्प्रदानग्रहणेन यो हि उपाध्यायाय गौर्दीयते उपाध्यायार्थः स भवति । तत्र तादर्थ्ये इत्येव सिद्धम् । इति चेन्न रुच्यर्थानां प्रियमाण इत्याद्यर्थं सम्प्रदानग्रहणस्यावश्यं कर्त्तव्यत्वात् । यूपाय दारु, कुण्डलाय सुवर्णमित्यादिप्रयोगः । इदं वार्त्तिकं भाष्ये प्रत्या-ख्यातम् । तथाहि -

"तत्तर्हि उपसंख्यानं कर्त्तव्यम् । न कर्त्तव्यम् । आचार्यप्रवृत्तिर्ज्ञापयति । भवति तादर्थ्ये चतुर्थी । यदयं चतुर्थी तदर्थार्थबलिहित सुखरक्षितैरित्यत्र चतुर्थ्यन्तस्य तदर्थेन सह समासं शास्ति" ।

51- कॢपि सम्पद्यमाने चतुर्थी वक्तव्या

तत्रैव सूत्रे वार्त्तिकमिदं पठितम् । क्लृप्त्यर्थानां धातूनां सम्पद्यमाने कर्त्तरि सम्पादनक्रियाविशिष्टे चतुर्थी वक्तव्या इति वार्त्तिकार्थः । सम्पत्तिरभूतप्रादुर्भावरूपोत्पत्तिरिह गृह्यते तत्र यद्रूपमुपजायते ततो विकाराच्चतुर्थी । मूत्राय सम्पद्यते यवागूः, यवागूः मूत्रविकाररूपेण भवतीत्यर्थः । विकारूपापत्तौ चतुर्थी विधेया तेनेह न भवति , देवदत्तस्य शालयः सम्पद्यन्ते । यदा त्वभेदविवक्षा तदा परत्वात् प्रथमैव भवति न चतुर्थीमूत्रमिदं सम्पद्यते यवागूरिति । यदा तु जनिकर्तुः प्रकृतिरिति प्रकृतेरपादानत्वं विवक्ष्यते तदा यवाग्वा इति पञ्चम्येव स्यात् मूत्रं सम्पद्यते यवाग्वा इति । इदञ्च वार्त्तिकं चतुर्थीति योगविभागात् सिद्धम् ।

52- उत्पातेन ज्ञाप्यमाने चतुर्थी वक्तव्या

इदमपि वार्त्तिकं तत्रैव सूत्रे पठितम् । प्राणिनां शुभाशुभयोः सूचको भूतविकार उत्पातः ।

वातायकपिला विद्युत् आतपायाति लोहिनी ।
पीता वर्षाय विज्ञेया दुर्भिक्षाय सिता भवेत् ।।

वातायेत्याद्युदाहरणम् । अत्र कपिला विद्युत् उत्पातस्तेन ज्ञाप्य-मानो बोध्यमानः सूच्यमानो वा वातिस्तत्र चतुर्थीति भावः ।

53- हितयोगे चतुर्थी वक्तव्या

इदमपि तत्रैव सूत्रे भाष्ये काशिकायान्च पठितम् । हितशब्दयोगे चतुर्थी वक्तव्या । गोभ्यो हितम् अरोचकिने हितम् । अरूचिररोचकम्, रोगा-ख्यायां ण्वुल् । बहुलवचनात् अस्त्रीलिङ्गता । अरोचकमस्यास्तीति अरोचकी अत इनि ठनौ इति इनिः ।

54- यदेतदप्राणिष्विति तदनावादिष्विति वक्तव्यम्

मन्यकर्मण्यनादरे विभाषाऽप्राणिषु (2/3/17) इति सूत्रे भाष्ये काशिकायान्चेदं भाष्यवार्त्तिकम् । मन्यतेः कर्मणि प्राणिवर्जिते विभाषा चतुर्थी-भवति अनादरे गम्यमाने । अनादरः तिरस्कारः । न त्वां तृणं मन्ये तृणाय वा, न त्वां बुसं मन्ये बुसाय वेत्युदाहरणम् । मन्यतिग्रहणं किम् न त्वां तृणं चिन्त-यामि । श्यन् विकरणनिर्देशः । अत्र न भवति न त्वा तृणं मन्वे । अनादर इति किम् ।

अश्मानं दृषदं मन्ये मन्ये काष्ठमुलूखलम् ।
अन्धायास्तं सुतं मन्ये यस्य माता न पश्यति ।। इति

ननु अप्राणिष्विति किम् न त्वा शृगालं मन्ये । इति सूत्र व्याख्या

अत्र सूत्रे अप्राणिषु इति वचनात् न त्वा श्वानं मन्ये न त्वा शूने मन्ये इत्यत्र विभाषा चतुर्थी न प्राप्नोति ।

न च योगविभागात् सिद्धम् । तथाहि "मन्य कर्मण्यनादरे विभाषा" ततः "अप्राणिषु" अप्राणिषु च विभाषेति । तत्र पूर्वयोगेन न त्वा शूने मन्ये इत्यत्र चतुर्थी सिद्धा । द्वितीययोगेन च न त्वा तृणाय मन्ये इत्यत्रेति वाच्यम् न त्वा काकं मन्ये, न त्वा शुकं मन्ये इत्यत्रापि चतुर्थ्याः प्राप्तेरिति चेन्न "अप्राणिषु इत्यस्य स्थाने अनावादिषु इति वक्तव्यम् । इमे च नावादयो भविष्यन्ति । न त्वा नावं मन्ये यावत्तीर्णं न नाव्यम् न त्वान्नं मन्ये यावन्नभुक्त श्राद्धम् । अत्र येषु प्राणिषु नेष्यते ते नावादयो भविष्यन्ति"[1] ।

अत्र येषु प्राणिषु नेष्यते इत्यत्र बहुवचनेन शुककाकातिरिक्त प्राणिन्यपि निषेधो ध्वनिस्तदभिप्रेत्यैव वृत्तौ शृगाल उदाहृतः । न त्वा नावं मन्ये इत्यादेरयं भावः ।

यावद् यतो नाव्यं नावा स्वल्पलोकया तार्यमपि त्वया महत्यापि न तीर्णमतस्त्वां नावमुडुपमपि न मन्ये इत्यर्थः । नौशब्देनोडुपं स्वल्पनौकोच्यते त्वां शब्दार्थस्तु महतीनौः एवं हि अनादरो भवति । एवं न त्वान्नं मन्ये इत्यादेरर्थः । यतः श्राद्धं श्राद्धीयैर्विप्रैर्न भुक्तमतस्त्वामपूपरूपमन्नमोदनमपि न मन्ये इति । प्राणिषु तूभयम् । न त्वा काकं मन्ये, नत्वा शृगालं मन्ये इत्यादौ न भवति । नावादित्वात् । न त्वा श्वानं शूने वा मन्ये इत्यादौ द्वितीया

---

1- महाभाष्यम् - पृ० 499.

चतुर्थी च भवतः । ननु युष्मदः कस्मान्न भवति चतुर्थी एतदपि हि मन्यतेः कर्म इति चेन्न व्यवस्थितविभाषाविज्ञानात् । मन्यकर्मणि प्रकृष्य कुत्सितग्रहणम् । इह माभूत् त्वां तृणं मन्ये इति । यद्याविवक्ष चतुर्थी विधीयते ततः प्रकृत्य यदि कुत्सा प्रतिपाद्यते तदा चतुर्थी भवति न साम्य विवक्षया ते प्रतिषेधयुक्तायां कुत्सायां चतुर्थीविधानं सम्पद्यते इति दिक् ।

## 55- तृतीया विधाने प्रकृत्यादीनामुपसंख्यानम्

कर्तृकरणयोस्तृतीया [2/3/18] इति सूत्रे भाष्ये काशिकायान्चेदं वार्त्तिकं पठितम्, कर्तरिकरणे च कारके तृतीया विभक्तिर्भवति । देवदत्तेन कृतम्, यज्ञदत्तेन भुक्तम् । करणे - दात्रेण लुनाति, परशुना छिनत्ति ।

तत्र प्रकृत्यादिभ्यः उपसंख्यानं कर्त्तव्यम् । प्रकृत्याभिरूपः, क्रियाया अश्रवणात् कर्तृकरणयोरभावात् षष्ठी प्राप्नोति । प्रायेण याज्ञिकाः प्रायेण वैयाकरणाः अत्र प्रायः शब्दो बह्वर्थः । बहवो याज्ञिका इत्यर्थः । प्रथमा षष्ठी वा प्राप्नोति । गार्ग्योऽस्मि गोत्रेण अत्र प्रथमा षष्ठी वा प्राप्नोति । समेन धावति, अत्र द्वितीया प्राप्नोति । द्विद्रोणेन धान्यं क्रीणाति द्वयोर्द्रोणयोः समाहारो द्विद्रोणं पात्रादि द्वौ द्रोणं कृत्वा इत्यर्थः । अत्र द्वितीया प्राप्नोति । पन्चकेन पशून् क्रीणाति । पन्चपरिमाणमस्य पन्चकः सङ्घः । तत्र संघसङ्घिनोरभेदविवक्षायां पशून् इत्यनेनैतत् समानाधिकरणमित्यत्रापि द्वितीयैव प्राप्नोति । अनेन वार्त्तिकेन तृतीया विधीयते ॥

किं पुनः कारणं न सिध्यति ? कर्तृकरणयोरभावात् । तयोरभावोऽस्ति प्रकृत्याभिरूप इत्यादिषु उदाहरणेषु क्रियाया अविद्यमानत्वात् । प्रातिपदिकेनात्र सम्बन्धमात्रं प्रतीयते न तु काचन क्रिया । न च तया विना कर्तृकरणे सम्भवतः तयोः क्रियापेक्षत्वात् इति ।

एतच्च वार्त्तिकं भाष्ये प्रत्याख्यातम् । तथाहि – कर्तृकरणयोस्तृतीया इत्यनेनैव सिद्धेः वार्त्तिकं न कर्त्तव्यम् । न च क्रियाभावात् तदपेक्ष कर्त्राद्यभावात् कथं तृतीया इति वाच्यम् । प्रतीयमानाया अपि क्रियायाः कारकनिमित्तत्वात् । यथा प्रविश पिण्डीमित्यत्र । प्रकृत्याभिरूपः इत्यत्र करणान्तरव्युदासाय प्रकृतेरेव करणत्वं विवक्षितम् । स्वाभावेनायं कृतोऽभिरूपो न तु वस्त्रालंकारादिना इत्यर्थः । प्रायेण याज्ञिका इत्यस्यायमर्थः । अस्मिन् ग्रामे ये विप्राः सन्ति ते बाहुल्येन यज्ञमधीयते तत्र याज्ञिकशब्दाभिधेयमध्ययनं प्रतिबाहुल्यस्य करणत्वं संभूय यज्ञमधीयते इत्यर्थः । इह तर्हि कथं विशिष्टवेषं कञ्चित् दृष्ट्वा अध्यवस्यति प्रायेणायं याज्ञिक इति । अत्राप्ययमर्थः अस्मिंस्तावद् याज्ञिकानामाचारादि बाहुल्यमुपलभ्यते अतोऽनेनाचारादि बाहुल्येन याज्ञिकोऽयं जनैर्ज्ञायते । तत्र प्रतीयमानज्ञानं प्रतिकरणत्वम् । केचित्तु प्रायेण शब्दो विभक्तिप्रतिरूपको निपातो ज्ञातमित्यस्यार्थे वर्तते इत्याहुः दृश्यते च तथाप्रयोगः एवञ्च तत्र तृतीयाया नास्ति विधानम् । गार्ग्योऽस्मि गोत्रेणेत्यत्रापि ज्ञाने भवने वा विद्यमाने गोत्रस्य करणत्वं प्रतीयते । समेन विषमेन धावतीत्यादौ समेन विषमेन यथा करणेनेति गम्यते । द्विद्रोणेनेत्यादौ तु द्विद्रोणादिशब्देन हिरण्यादिमूल्यं तादर्थ्यात् अर्थो गम्यते तस्यापि क्रयं प्रति करणत्वमस्त्येव । एवं सर्वत्र तृतीया सिध्यतीति वार्त्तिकं न कर्त्तव्यमिति स्थितम् ।

अत्र केचिद्वदन्ति । एवं रीत्या करणत्वादिव्युत्पादने हेताविति सूत्रस्य इत्थंभूतलक्षणे इत्यस्य च वैयर्थ्यापत्तिः । यदि तत्र द्रव्याद्यन्वयविवक्षायां सार्थक्यं तर्हि अत्रापीति । एवञ्च प्रत्याख्यानमेकदेशयुक्तः । वार्त्तिकं कर्त्तव्यमेव सम्बन्धसामान्यविवक्षायां षष्ठीबाधनार्थमिति दिक् ।

## 56- निमित्तकारण हेतुषु सर्वासां प्रायदर्शनम्

एतद्वार्त्तिकं हेतौ {2/3/23} इति सूत्रे भाष्ये पठितम् । सर्वनाम्नस्तृतीया च {2/3/27} इति सूत्रे काशिकायामुल्लिखितम् । हेतौ तृतीया भवति। योग्यतामात्रयुक्तो अनाश्रितव्यापारोऽर्थो द्रव्यगुणक्रियाविषयो हेतुः । अत एव वृत्तौ उक्तं फलसाधनयोग्यः पदार्थो लोके हेतुरुच्यते तद्वाचिनस्तृतीया विभक्तिर्भवति । धनेन कुलम् । कन्यया शोकः विद्यया यशः इति ।

वार्त्तिकमिदम् असर्वनाम्नोऽपि विधानार्थमत्र सूत्रे पठितम् । न तु सर्वनाम्नस्तृतीया चेति सूत्रे । तत्र प्राय ग्रहणात् असर्वनाम्नः प्रथमाद्वितीये न भवतोऽन्यास्तु यथादर्शनं भवन्ति । पर्यायग्रहणं केचित् पर्यायान्तरनिवृत्त्यर्थं वदन्ति । अन्ये तूपलक्षणार्थमिच्छन्तः प्रयोजनादिप्रयोगेऽपि एतद्विभक्तिविधानं मन्यन्ते ।

निमित्तादिशब्दयोगे सर्वासां विभक्तीनां प्रायः प्रयोगो भवतीत्यर्थः । किं निमित्तम्, केन निमित्तेन कस्मै निमित्ताय कस्मान्निमित्तात् कस्य निमित्तस्य, कस्मिन्निमित्ते वा वसति । एवं कारणहेत्वोरप्युदाहार्यम् ।

असर्वनाम्नोऽप्येतत् अन्नेन कारणेन अन्नाय, कारणाय अन्नात् कारणात् अन्नस्य कारणस्य अन्ने कारणे वा वसतीति ।

वृत्तिकारेण तु सर्वनाम्नस्तृतीया चेति सूत्रे वार्त्तिकं पठितम् । निमित्तादिषु अर्थग्रहणं कर्त्तव्यम् । ननु यद्यर्थग्रहणं पर्यायोपादानं व्यर्थं स्यादिति चेन्न पर्यायोपादानं तु स्वरूपविधिर्मा विज्ञायीति । तेनेहापि भवति किं प्रयोजनं वसति केन प्रयोजनेनेति इत्यादि एतत् वृत्तिकारमतम् ।

अत्रेदमालोच्य-मत्र अर्थग्रहणे सति पर्यायग्रहणानर्थक्यम् । एकशेषप्रसङ्गश्च विरूपाणामपि समानार्थानामिति वचनात् । तस्मात् अर्थग्रहणं न कर्त्तव्यम् । एवञ्च स्वरूपपरा एव निमित्तादिशब्दाः उपलक्षणार्थाः एवमर्थानां शब्दानामिति दिक् ।

57- पञ्चमीविधाने ल्यब्लोपे कर्मण्युपसंख्यानम्

अपादाने पञ्चमी {2/3/28} इति सूत्रे भाष्ये काशिकायाञ्च पठितमिदं वार्त्तिकम् । अपादाने कारके पञ्चमी-विभक्तिर्भवति । ग्रामादागच्छति, पर्वतादवरोहति । तत्र ल्यब्लोपे कर्मणि पञ्चमीति उपसंख्यानं कर्त्तव्यम् । प्रासादात् प्रेक्षते अत्र ल्यबन्तस्याप्रयोगेऽपि अर्थो गम्यत इति द्वितीया प्राप्नोति । एवञ्च प्रासादमारुह्य: प्रेक्षते इति प्रासादात् प्रेक्षते इत्यत्र प्रासादात् पञ्चमीसिद्धा।

अत्र सर्वनाम्नस्तृतीया चेति सूत्रात् चकारग्रहणमनुवर्तते तेनानुक्तस्यापि समुच्चयो भविष्यति । अतः प्रासादात् प्रेक्षते इति सिद्धम् इति न्यासकारः।

महाभाष्ये इदं वार्त्तिकं प्रत्याख्यातं यथाहि "इह तावत् प्रासादात् प्रेक्षते, इति अपक्रामति तत्तस्माद्दर्शनम् । यद्यपक्रामति किं नात्यन्तायापक्रामति सन्ततत्वात् । अथवान्यान्यप्रादुर्भावात् । अन्या चान्या च प्रादुर्भवति"[1] ।

अयं भाव: । प्रेक्षणं चक्षुषा पदार्थानां ज्ञानम् । तैजसं चतुर्बहिर्निःसृत्यविषयान् गृह्णाति । निःसरणाङ्गके च प्रेक्षणे धातुर्वर्तते । तत्राङ्गभूतनिःसरणं प्रतिप्रासाद उपात्त विषयमपादानं भवति । प्रासादात् प्रेक्षते इति । प्रासादप्रदेशात् चाक्षुषं तेजो निःसार्य पदार्थान् गृह्णाति । अतः अपादाने पन्चमी त्येव सिद्धं वार्त्तिकं न कर्त्तव्यम् ।

## 58- अधिकरणे चोपसंख्यानम्

इदमपि वार्त्तिकं तत्रैव सूत्रे पठितम् । ल्यब्लोपे अधिकरणे पन्चमी वक्तव्या । आसने उपविश्य प्रेक्षते इति आसनात् प्रेक्षते । शयनमुपविश्य प्रेक्षते इति शयनात् प्रेक्षते । अत्रापि प्रत्याख्यानप्रकार: पूर्ववत् बोध्य: ।

## 59- प्रश्नाख्यानयोश्च पन्चमी वक्तव्या

इदमपि वार्त्तिकं तत्रैव सूत्रे पठितम् । अत्र च विशिष्टे प्रश्नाख्याने गृह्येते यत्र लोके पन्चमी प्रयुज्यते । इह न भवति कस्यायमर्थः, राज्ञोऽर्थ इति ।

---

1- महाभाष्यम् - पृ० 505

भवति च अत्र कुतो भवान् पाटलिपुत्रादिति ।

एतदपि वार्त्तिकं भाष्ये प्रत्याख्यातम् । अपादाने पन्चमीत्येव सिद्धम् । प्रतीयमानागमनक्रियामपेक्ष्येदं प्रयुज्यते । तत्र प्रयोक्तुराख्यातुश्च मनसि विपरिवर्तमानमागमनं प्रत्यपेक्षितक्रियमपादानम् पाटलिपुत्रादिति । चकारानुकर्षणाद् वा सिद्धम् ।

60- यतश्चाध्वकालनिर्माणं तत्र पन्चमी वक्तव्या

इदमपि तत्रैव सूत्रे पठितम् । यदवधित्वेनाश्रित्याध्वकालयो परिच्छेदस्ततः पन्चमी वक्तव्याइ इत्यर्थः । गवीधुमतः सांकाश्यं चत्वारि योजनानि । कार्त्तिक्या आग्रहायणी मासे इति प्रयोगः । गवीधुमान् नाभ-नगरम् । सांकाश्यं तपोवनम् । कृत्तिकायुक्ता पौर्णमासी कार्त्तिकी पौर्णमास्यां लुबविशेषे इति लुब् न भवति । सास्मिन् पौर्णमासीत्यधिकारे विभाषा फाल्गुनीश्रवणा कार्त्तिकी चैत्रीभ्य इति निर्देशात् । अग्रेहायनमस्या इत्याग्रहा-यणी । प्रज्ञादेराकृति गणत्वात् स्वार्थिकोऽण् । आग्रहायण्यश्वत्थात् इति निपातनात् णत्वम् ।

एतस्यापि प्रत्याख्यानं कृतम् । पूर्ववच्चकारानुवृत्तया सिद्धम् । अथवा अध्वनिनिमीयमाणे अपादान इत्येवं सिद्धा पन्चमी । तथाहि गवीधु-मतः सांकाश्यं चत्वारि योजनानीत्यत्र निःसृत्येति क्रियागम्यते अतोयुक्तमेवा-पादानत्वम् । कार्त्तिक्या अमआग्रहायणी मास इत्यत्रापि परेणेति शब्दो गम्यते

तत्रोत्तर सूत्रेण दिग्योगलक्षणा पञ्चमी सिद्धा ।

61- तद्युक्तात्काले सप्तमी वक्तव्या

इदमपि तत्रैव सूत्रे पठितम् । तदित्यनेन पञ्चमी सम्बध्यते पञ्चमी युक्तात् परो यः कालस्तत्र सप्तमी वक्तव्या इत्यर्थः । कार्त्तिक्या आग्रहायणी मासे । एतदपि प्रत्याख्यातम् । अत्र यस्य च भावेन भावलक्षणम् इति सप्तमी सिद्धा । कार्त्तिक्याः परो यो मासस्तत् सत्तयाऽऽग्रहायण्या भावो लक्ष्यते अतो नेदं वार्त्तिकं कर्त्तव्यम् ।

62- अध्वनः प्रथमा सप्तमी च वक्तव्या

इदमपि वार्त्तिकं तत्रैव सूत्रे पठितम् । अत्र तद्युक्तादित्यपेक्षते । गवीधुमतः सांकाश्यं चत्वारि योजनानि, चतुर्षु योजनेषु वा । प्रत्याख्यातमिदं वार्त्तिकम् । तथाहि गवीधुमतो निःसृत्य यदा चत्वारि योजनानि गतानि भवन्ति ततः सांकाश्यम्, चतुर्षु योजनेषु गतेषु सत्सु सांकाश्यमिति गतानीति च कर्मणि निष्ठा । यदा जनैर्योजनानि गतानि भवन्ति ततस्तैः सांकाश्यं प्राप्यते इत्यर्थः । यद्वा, अध्ववर्त्तिना निःसरणं गमनं वा अध्वन्यारोप्य निःसृत्य गतानीतित्यपः कर्तरि क्तस्य च प्रयोगः तस्य प्रतीयमाननिःसरणक्रियापेक्षया-पादानत्वम् । गतानीति च प्रातिपदिकार्थस्याव्यतिरेकात् प्रथमा । गतेषु सत्सु इति यस्य च भावेन भाव लक्षणमिति सप्तमी । आग्रहायणी मास इति

कार्त्तिक्या परत्र मासे गते सति आग्रहायणी भवतीत्यर्थः । तत्र दिग्योगलक्षणा पन्चमी, सप्तमी पूर्ववदिति दिक् ।

63- सप्तमीविधाने क्तस्येन्विषयस्य कर्मण्युपसंख्यानम्

सप्तम्यधिकरणे च (2/3/36) इति सूत्रे भाष्ये काशिकायान्च पठितमिदं वार्त्तिकम् । सप्तमीविभक्तिर्भवत्यधिकरणे कारके च कारात् दूरान्तिकार्थेभ्यश्च । कटे आस्ते, शकटे आस्ते स्थाल्यां पचति । दूरान्तिकार्थेभ्योऽपि - दूरे ग्रामस्य अन्तिके ग्रामस्य । तत्रेदं वार्त्तिकम् । क्तस्येन्विषयस्येति इन्विषयो यः क्तस्तदीये कर्मणि सप्तमी विधेया । यश्चेन् विषयः क्तः 1 यस्तदन्तस्तेनैव सह प्रयुज्यते इत्यर्थः । एवन्च क्तान्तप्रकृतिकेन्नन्तस्येत्यर्थः । अधीती व्याकरणे, परिगणिती याज्ञिके, आम्नाती छन्दसि । अधीतं व्याकरणमनेनेति विग्रहे श्राद्धमनेन मुक्तमित्यतोऽनेनेत्यनुवर्त्यपूर्वादिनिरित्यत इनिरित्यनुवर्त्य च इष्टादिभ्यश्चेतीति: अत्र यद्यपि कर्मण्येव क्तो विहितस्तथापि तद्धिते उत्पन्ने अधीतव्याकरणयोरभिसम्बन्धो निवर्तते । अस्ति च धात्वर्थस्य व्याकरणेन सम्बन्ध इति कर्मैव व्याकरणं भवति अतो द्वितीया स्यात् । यथा कृतपूर्वीकटमिति तस्मात् सप्तम्या उपसंख्यानं कर्त्तव्यम् । उपसंख्यानमित्यस्य व्याख्यानं कर्त्तव्यमित्यर्थः । व्याख्यानन्च योऽसौ अधीती कर्त्ता तस्य व्याकरणं विषयत्वेन विवक्ष्यते । तस्मा अधिकरणे इत्येव सिद्धा सप्तमीति न्यासकारः । यद्यपि अधिकरणविवक्षया सिद्धा

---

1- का० - पृ० 192·

सप्तमी तथापि कर्मविवक्षायां द्वितीयापि स्यादिति तन्निवृत्त्यर्थं वचनं कर्त्तव्यमेव । मासमधीती व्याकरणे इति कालकर्मणोर्बहिरङ्गत्वादिहाग्रहणात् सप्तम्यभावः ।

64- साध्वसाधुप्रयोगे च सप्तमीवक्तव्या

इदमपि वार्त्तिकं तत्रैव सूत्रे पठितम् । साध्वसाधुशब्दयो प्रयोगे सप्तमी वक्तव्या । साधुर्देवदत्तो मातरि । असाधुः पितरि । अनर्चार्थमिह साधुग्रहणम् । आर्चायां तु साधुनिपुणाभ्यामर्चायामित्यनेनैव सिद्धा सप्तमी । साधुत्वासाधुत्वयोर्मातापितृविषयत्वेऽपि क्रियाया अभावात् अधिकरणत्वाभावात् अप्राप्तौ वचनम् । अनर्च्यग्रहणमिति व्याख्यानात् तत्त्वकथनेऽपि भवत्येव । अर्चा ग्रहणं तु तत्र निपुणविशेषणार्थमेव । ननु कथं तर्हि तत्र प्रत्युदाहरिष्यते अर्चायामिति किं साधुर्भृत्यो राज्ञ इति चेन्न राज्ञो भृत्येन सह शाब्दोऽन्वयः न साधुना राज्ञो भृत्यः, स साधुरिति । तत्र राजनि वान्यत्र वेति न शब्देन स्पृश्यते । प्रत्यासत्त्या तु राजविषयमेव साधुत्वं गम्यते इत्येतावता तत्र प्रत्युदाहरणं द्रष्टव्यम् ।

तत्र साधुग्रहणं तु साधुप्रयोगेऽप्यर्चायां प्रत्यादियोगे निषेधार्थम् । न चानेन दुर्वारा । तत् सामर्थ्येनास्याप्य प्रवृत्तेरिति केचित् ।

अत्रापि अधिकरणे एव सप्तमी सिद्धा वार्त्तिकं न कर्त्तव्यम् । तथाहि अत्र मातृस्थासु क्रियासु मातृशब्दो वर्तते पितृस्थासु क्रियासु पितृशब्दो

वर्तते तासान्च क्रियाणां साध्वसाधुतां प्रतिविषयभावोऽस्तीति वैषयिकाधिकरण एव सप्तमी ।

65- कारकार्हाणां च कारकत्वे सप्तमी वक्तव्या

इदमपि वार्त्तिकं तत्रैव सूत्रे पठितम् । भावसाधनः कारकशब्दः । कारकत्वार्हाणामित्यर्थः । क्रियां प्रति येषां कारकत्वं साधनत्वं न्याय्यं ते कारकार्हास्तेषां कारकत्वे सप्तमी वक्तव्या । ऋद्धेषु भुन्जानेषु दरिद्रा आसते ब्राह्मणेषु तरत्सु वृषला आसते । ऋद्धा भोजनक्रियामर्हन्तीति कारकार्हाः । लक्ष्य-लक्षणभावाविवक्षायामपि यथा स्यादिति वार्त्तिकम् ।तद्विवक्षायां तु यस्य च भावे न भावलक्षणमित्येव सप्तमी सिद्धा ।

66- कारकार्हाणां चाकारकत्वे सप्तमी वक्तव्या

इदमपि तत्रैव सूत्रे पठितम् । यदा अकारकार्हाणां नास्ति कारकत्वम्। तदापि सप्तमी वक्तव्या । मूर्खेषु आसीनेषु ऋद्धा भुन्जते वृषलेषु आसीनेषु ब्राह्मणा-स्तरन्ति । मूर्खा भोजनानर्हत्वादकारकार्हाः । अत्रापि यस्य च भावेनेत्यादिना सप्तमी सिद्धा । लक्ष्यलक्षणभावाविवक्षायान्चेदं वचनम् ।

67- तद्विपर्यासे च सप्तमी वक्तव्या

इदमपि तत्रैव सूत्रे पठितम् । यदा कारकार्हाणां नास्ति कारकत्व-

मकारकाह्यणां चास्ति कारकत्वं तदा इत्यर्थः । आढ्येष्वासीनेषु दरिद्रा भुन्जते, ब्राह्मणेष्वासीनेषु वृषलास्तरन्ति । एतदपि यस्य चेति सिद्धम् ।

68- निमित्तात् कर्मयोगे सप्तमी वक्तव्या

इदमपि वार्त्तिकं तत्रैव सूत्रे पठितम् । क्रियाफलमिह निमित्तत्वेन विवक्षितम् । यत् क्रियायाः प्रयोजकं यदर्थः क्रियारम्भः ततो हेताविति तृतीयायां प्राप्तायां सप्तमी विधीयते तस्य निमित्तस्य यदि कर्मणा संयोगः सम्बन्धः । ततो वेतनेन धान्यं लुनाति इति सप्तमी न भवति । वेतनेन धान्यस्य संयोगाभावात् ।

चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुन्जरम् ।
केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ।।

संयोग इत्यस्य सम्बन्धोऽर्थस्तेन समवायादिपरिग्रहः । हन्ति कर्मणा द्वीप्यादिना चर्मादेर्निमित्तस्य समवायः सम्बन्धः चमरशब्दात् जातिलक्षणो ङीप् । पुष्कलकः शङ्कुः । स सीम्नि सीमाज्ञानार्थं हतो निरवातः इत्यर्थः । कर्मसम्बन्ध इति किं वेतनेन धान्यं लुनाति ।

एतदपि सूत्रे चकारग्रहणात् ।सिद्धम् । तस्यानुक्तसमुचयार्थत्वात् । उत्तरसूत्रे वा चकारस्यानुक्तसमुच्चयार्थकत्वात् सिद्धा सप्तमी । एवन्च इमानि वार्त्तिकानि सूत्रव्याख्यानभूतानि । चकारेणैव सूत्रकारेण संगृहीतम् इति दिक् ।

69- अप्रत्यादिभिरिति वक्तव्यम्

साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः (2/3/43) इति सूत्रे भाष्ये पठितमिदम् । साधुनिपुण इत्येताभ्यां योगेऽर्चायां गम्यमानायां सप्तमीविभक्तिर्भवति न चेत् प्रतिः प्रयुज्यते । मातरि साधुः पितरि साधुः निपुणः । अर्चायां किं साधुर्भृत्यो राज्ञः । तत्त्व कथने माभूत् । अप्रतेरिति किं साधुर्देवदत्तो मातरं प्रति ।

तत्र अप्रतेरित्यस्य स्थाने अप्रत्यादिभिरिति वक्तव्यः के पुनः प्रत्यादयः ? येषां लक्षणेत्थम्भूताख्यान इत्यादिना कर्मप्रवचनीयसंज्ञा विहिता ते प्रतिपर्यनवः प्रत्यादयः । साधुर्देवदत्तो मातरं प्रति मातरमनु इति । अत्र उक्त सूत्रेण कर्मप्रवचनीयसंज्ञायां कर्मप्रवचनीययोगे द्वितीया ।

70- अज्वरिसंताप्योरिति वक्तव्यम्

रुजार्थानां भाववचनानामज्वरेः (2/3/54) इति सूत्रे भाष्ये पठितमिदं वार्त्तिकम् । रुजार्थानां धातूनां भाववचनानां भावकर्तृकाणां ज्वरिवर्जितानां कर्मणि कारके शेषत्वेन विवक्षिते षष्ठी विभक्तिर्भवति । चौरस्य रुजति रोगः । चौरस्यामयत्यामयः । रुजा अर्थो येषां ते रुजार्थाः । रुजो भङ्गे भिदादिपाठात् अस्मादेव निपातनं वा अङ्, रुजा शब्दः साधुः । भाववचनानामित्यस्य यदि भावार्थाभिधायिनां रुजार्थानामित्येषोऽर्थो विवक्षितः स्यात् तदाऽनर्थकमिदं वचनं स्यात् । सर्वे एव रुजार्था भाववचनाः । तस्मान्नात्र धातुवाच्यो भावो

विवक्षितः । इपितु प्रत्ययवाच्यः । यत्र भावे इति घञ् विधीयते । वचनशब्दोऽयं कर्तृसाधनः वक्तीति वचनः । कृत्यल्युटो बहुलम् इति कर्तरि ल्युट् । न च रूजार्थानां यो भावस्तस्य वचनक्रियां प्रतिकर्तृत्वं सम्भवतीति सामर्थ्यात् वचनशब्देन प्रकृत्यर्थं परित्यज्य प्रत्ययार्थो विवक्षित इति प्रतीयते । स पुनः कर्तृशक्तिः । भाववचनानामिति बहुव्रीहिः, भावो वचनः कर्त्ता येषां ते भाववचनं भावकर्तृका इत्यर्थः । तदाह भावकर्तृकाणामिति । रूजार्थानामिति किम् ।

एति जीवन्तमानन्दो नरं वर्षशतादपि
जीवपुत्रक मामैवं तपः साहसमाचर ।

अस्त्यत्रानन्दो भावः कर्ता न तु एतिर्धातु रूजार्थः अपि तु गत्यर्थः । भाववचनानामिति किं नदी कूलानि रूजति श्लेष्मा पुरूषं रूजति । अज्वरेरिति किम् । चौरं ज्वयरयति ज्वरः । तत्र अज्वरेरिति स्थाने अज्वरिसंत्सप्योरिति वक्तव्यम् । तप् सन्तापे हेतुमण्णिच् सन्तापो भावः कर्ता यत्र यथा चौरं सन्तापयति तापः ।

7।- हविषः प्रस्थितस्य प्रतिषेधो वक्तव्यः

प्रेष्यब्रुवोर्हविषो देवतासम्प्रदाने ॥2/3/6।॥ इति सूत्रे भाष्ये काशिकायान्च पठितमिदम् । प्रेष्य इति इष्यतेर्दैवादिकस्य लोण्मध्यमपुरूषस्यैकवचनम् । तत् साहचर्यात् ब्रुविरपि तद्विषय एव गृह्यते प्रेष्य ब्रुवोर्हविषः कर्मणः षष्ठीविभक्तिर्भवति देवतासम्प्रदाने सति । अग्नये छागस्य हविषः वपाया मे

दसः प्रेष्य । अग्नये छागस्य हविषो वपाया मेदसोऽनुब्रूहि । प्रेष्य ब्रूकेरिति किम् ? अग्नये छागं हविर्वपां मेदो जुहुधि । हविषा इति किम् । अग्नये गोभयानि प्रेष्य । देवतासम्प्रदाने किम् । माणवकाय पुरोडाशं प्रेष्य ।

तत्र हविषः प्रस्थितस्य प्रतिषेधो वक्तव्यः । प्रस्थितशब्दे न यद्विशेष्यते हविषस्तस्येत्यर्थः । तस्य षष्ठ्याः प्रतिषेधो वक्तव्यः । इन्द्राग्निभ्यां छागं हविर्वपां मेदः प्रस्थितं प्रेष्य अत्रेदं वार्त्तिकं न कर्त्तव्यं विभाषोपसर्गे इत्यतः विभाषानुवर्तनात् व्यवस्थया सिद्धेरिति न्यासः[1] ।

## 72- षष्ठ्यर्थे चतुर्थी वक्तव्या

चतुर्थ्यर्थे बहुलं छन्दसि {2/3/62} इति भाष्ये काशिकायान्च पठितमिदं वार्त्तिकम् । छन्दसि विषये चतुर्थ्यर्थे षष्ठीविभक्तिर्भवति बहुलम् । पुरुषमृगश्चन्द्रमसः पुरुषमृगश्चन्द्रमसे वा । गोधा कालका दार्वाघाटस्ते वनस्पतीनां ते वनस्पतिभ्यः । बहुलग्रहणं किं कृष्णो रात्र्यै हिमवते हस्ती अत्र सप्तम्यर्थे चतुर्थी। तत्र षष्ठ्यर्थे चतुर्थी वक्तव्या । या खर्वेण पिबति तस्यै खर्वो जायते । या दतो धावते तस्यै श्यावदन् । या नखानि निकृन्तते तस्यै कुनखी। याङ्क्ते तस्यै काणः । याऽभ्यङ्क्ते तस्यै दुश्चर्मा । या केशात् प्रलिखते तस्यै खलतिः । अहल्यायै जारः । इत्युदाहरणानि । रजस्वलायाः खर्वपानादि प्रतिषेधार्थोऽयमर्थवादः ।

---

1- न्यासः - पृ० 221·

इदं वार्त्तिकं न कर्त्तव्यम् । बहुलग्रहणादेव सिद्धेः । क्वचिदन्य-देवेति वाहुलकार्थः । षष्ठ्यर्थेऽपि चतुर्थी सिद्धा । अथवा योगविभागात् सिद्धम्। "चतुर्थी" षष्ठीप्रकरणात् षष्ठ्यर्थे चतुर्थी भवति । ततः अर्थे बहुलं छन्दसि । चतुर्थ्यर्थे षष्ठी भवति । इति ।

73- अकाकारयोः स्त्रीप्रत्यययोः प्रयोगेनेति वक्तव्यम्

उभयप्राप्तौ कर्मणि (2/3/66) इति सूत्रे पठितं इदं वार्त्तिकम्। कर्तृकर्मणोः कृतीति प्राप्ता षष्ठी नियम्यते । उभयप्राप्तौ इति बहुव्रीहिः उभयोः प्राप्तिर्यस्मिन् कृति सोऽयमुभय प्राप्तिः । उभयशब्देन प्रकृतत्वात् कर्तृकर्मणी संबध्येते । तत्र कर्मण्येव षष्ठी विभक्तिर्भवति न कर्तरि आश्चर्यो गवां दोहोऽगोपालकेन । रोचते मे ओदनस्य भोजनं देवदत्तेन । साधुरुलुपयसपानं यज्ञ-दत्तेन । बहुव्रीहिविज्ञानात् इह नियमो न भवति आश्चर्यमिदमोदनस्य नाम पाको ब्राह्मणानाञ्च प्रादुर्भाव इति । अत्र पाके ओदनस्य कर्मत्वम् । प्रादुर्भावो च ब्राह्मणानां कर्तृत्वमित्यनेकत्वात् कृदुभयप्राप्तिर्भवति ।

तत्र नियमस्यायं प्रतिषेधः । अकाकारयोः प्रयोगे नियमो न भवति। भेदिका देवदत्तस्य काष्ठानाम् । चिकीर्षा देवदत्तस्य कटस्य । उभयत्रापि कर्तरि तृतीया न भवति । षष्ठी तु शेषविवक्षयापि सिध्यति । समासोऽप्यत्र भवति । धर्मजिज्ञासादेवदतस्य । शिष्यस्याचार्यशुश्रूषा । तत्र यदा नियमेन कर्तरि तृतीया तदा कर्मणि चेति निषेधात् पाणिनिना सूत्रकृतिः । आचार्येण शब्दानुशासनम् इत्यसाधुः समासः । पाणिनेः सूत्रकृतिः, आचार्यस्य शब्दानुशासनमिति तु

साधु: । चतुर्थ्यर्थे बहुलं च्छन्दसि इत्यत: बहुल ग्रहणानुवृत्ते: सिद्धे वार्त्तिकमिदं न कर्त्तव्यम् ।

74- शेषे विभाषा

इदमपि तत्रैव सूत्रे पठितम् । अकाकारस्त्रीप्रत्ययव्यतिरिक्त: शेष: प्रत्यय: । तत्र विभाषा भवति । षष्ठी तृतीया वेति । अत्र शेष: त्रिप्रत्यय एवेति केचित् केचिच्च प्रत्ययमात्रमिति वदन्ति । शोभना खलु पाणिने: सूत्रस्य कृति: । शोभना खलु पाणिनिना सूत्रस्य कृति: । शोभना खलु दाक्षायणस्य दाक्षायणेन वा संग्रहस्य कृति: । शब्दानामनुशासनमाचार्यस्याचार्येण वेति । इदमपि वार्त्तिकं बहुलग्रहणानुवृत्ते: सिद्धेर्न कर्त्तव्यमिति ।

75- नपुंसके भाव उपसंख्यानम्

क्तस्य च वर्तमाने ॥2/3/67॥ इति सूत्रे वार्त्तिकमिदं पठितम् । न लोकाव्ययनिष्ठा इति प्रतिषेधे प्राप्ते पुन: षष्ठी विधीयते क्तस्य वर्तमान-कालविहितस्य प्रयोगे षष्ठी विभक्तिर्भवति । राज्ञां मतो बुद्ध: पूजितश्च । क्तस्येति किम् ओदनं पचमान: । वर्तमान इति किं ग्रामं गत: ।

क्तस्य च वर्तमाने नपुंसके भावे उपसंख्यानं कर्त्तव्यम् । छात्रस्य हसितम्, नटस्य सुक्तम्, मयूरस्य नृत्तम्, कोकिलस्य व्याहृतम् । नपुंसके भावेक्त: । तत्र छात्रस्य कर्तृत्वात् तृतीया प्रसङ्गे षष्ठी विधीयते ।

प्रदीपोद्योतकारास्तु "इदं वार्त्तिकं लक्षण प्रतिपादोक्तपरिभाषया कालोदासीन नपुंसके भावेक्त इति सूत्रविहित क्त योगे एव । तेन भूते भावे क्तेन योगे तृतीये वेति वार्त्तिकमतम् । यद्यपि शेषत्वविवक्षयापि सिद्धं तथापि कर्तृत्व-प्रकारके बोधे षष्ठ्यर्थमिदमिति वार्त्तिकाशयः । भाष्यकारास्तु तादृश एवार्थे साधुत्वमङ्गीकृत्य प्रत्याचख्यौ[1]" ।

76- शेषविज्ञानात् सिद्धम्

इदमपि तत्रैव सूत्रे पठितम् । एतच्च पूर्ववार्त्तिकप्रत्याख्यानरूपम् । तथाहि "तत्तर्हि वक्तव्यम् । न वक्तव्यं शेषविज्ञानात् सिद्धम् । शेषलक्षणात्र षष्ठी भविष्यति । शेष इत्युच्यते । कः शेषः । कर्मादीनामविवक्षा शेषः । कथं पुनः सतो नामाविवक्षा स्यात् । यदा छात्रो हसति नटो भुङ्क्ते, मयूरो नृत्यति, कोकिलो व्याहरति । सतोऽपि अविवक्षा भवति । तद्यथा अलोमिका एडका, अनुदरा कन्येति । असतश्च विवक्षा, समुद्रः कुण्डिका, विन्ध्यो वर्धितकमिति[2]" ।

एवञ्च सदपि छात्रस्य कर्तृत्वमविवक्षयाऽपाक्रियते । सम्बन्धित्व-मात्रमत्र विवक्षितम् । छात्रस्य सम्बन्धि हसितमिति । तथा च कर्तृत्वविवक्षायां तृतीयापि भवति छात्रेण हसितमिति । उपसंख्याने तु नैतत् सिध्येत् ।

यद्येवमुतरत्र चातुः शब्दं प्राप्नोति - इदमहेः सुप्तम् इहाहिना

---

1- भाष्य - पृ० 528.    2- महाभा० - पृ० 528.

सृप्तम् । इहाहिः सृप्तः, इहाहेः सृप्तमिति । ग्रामस्य मध्ये ग्रामस्य पार्श्वे इति । इष्यत एव चातुःशब्दम् ।

77- उकप्रतिषेधे कमेर्भाषायामप्रतिषेधः

न लोकाव्यय निष्ठाखलर्थतृ नाम् (2/3/69) इति सूत्रे भाष्ये काशिकायाञ्च पठितमिदं वार्त्तिकम् । "कर्तृकर्मणोः कृति" इति षष्ठी प्राप्ता-प्रतिषिध्यते । ल, उ, उक अव्ययनिष्ठाखलर्थतृन् इत्येतेषां प्रयोगे षष्ठीविभक्तिर्न भवति । ल इति शतृशानचौ कानच्क्वसू कि किनौ च गृह्यन्ते । ओदनं पचन् ओदनं पचमानः, ओदनं पेचानः पेचिवान्, पपिः सोमं ददिर्गाः । कटं चिकीर्षुः, ओदनं बुभुक्षुः । कन्यामलंकारिष्णुः । इष्णुचोऽपि प्रयोगे निषेधः । उक- आगामुकं वाराणसीं रक्ष आहुः । कटं कृत्वा । तत्र उकप्रतिषेधभाषायां कमेरप्रतिषेधो भवति दास्याः कामुकः । द्वितीया निवृत्त्यर्थं वचनम् । षष्ठी तु शेषविज्ञानादेव सिद्धा । बहुलाग्रहणानुवृत्तेर्व्यवस्था सिध्यति वार्त्तिकं न कर्त्तव्यम् ।

78- अव्ययप्रतिषेधे तोसुनः कसुनोरप्रतिषेधः

इदमपि तत्रैव सूत्रे पठितम् । अव्ययप्रतिषेधे तोसुन कसुनोरप्रतिषेधो वक्तव्यः । पुरा सूर्यस्योदेतोराधेयः । पुरा क्रूरस्य विसृपो विरप्शिन् । उदेतो-रिति उत्पूर्वादिणो भावलक्षणे स्थलेण्कृञ्वदिचरि इत्यादिना तोसुन् । विसृप इति

सृपितृदोः कसुन् इति कसुन् । एतदपि न कर्त्तव्यम् । बहुलग्रहणानुवृत्तेः । अथवा अव्ययीभावश्च इत्यत्र सर्वमिदं काण्डं स्वरादिषु पठ्यते इत्यादिना वृत्तिकारेण प्रतिपादनं कृतम् । संज्ञापूर्वको विधिरनित्य इति वा ।

79- द्विषः शतुर्वा वचनम्

इदमपि तत्रैव सूत्रे पठितम् । द्विषः परो यः शतृप्रत्ययः तस्य प्रयोगे वा वचनं कर्त्तव्यम् । अभिधानाभिधेययोरभेदोपचारात् । वेत्यनेन वार्थ उक्तः । वार्थोऽपि विकल्पः । द्विषोऽमित्रे इति शतृप्रत्ययः । चौरं द्विषन् चौरस्य द्विषन् इति । प्रत्याख्यातमिदं वार्त्तिकं शेषविवक्षायां षष्ठी अन्यत्र द्वितीया । बहुलग्रहणानुवृत्तेर्वा सिद्धम् ।

80- उभय प्राप्तौ कृत्ये षष्ठ्याः प्रतिषेधो वक्तव्यः

कृत्यानां कर्तरि वा {2/3/71} इति सूत्रे वार्त्तिकमिदं पठितम् । कर्तृकर्मणोः कृति इति नित्यं षष्ठी प्राप्ता कर्तरि विकल्प्यते । कृत्यानां प्रयोगे कर्तरि वा षष्ठी विभक्तिर्भवति न कर्मणि । भवता कर्त्तव्यः कटः, भवतः कर्त्तव्यः कटः कर्तरि किम् गेयो माणवकः साम्नाम् । भव्यगेय इत्यादिना कर्तरि यत्प्रत्ययः । साम्नां तत्र उभयप्राप्तौ कृत्ये षष्ठ्याः प्रतिषेधो व इति कर्मणि नित्यमेव षष्ठी प्राप्ता ।

तत्र उभयप्राप्तौ कृत्ये षष्ठ्याः प्रतिषेधो वक्तव्यः । उभयोः

कर्तृकर्मणो: प्राप्तिर्यस्मिन् कृत्ये तत्र द्वयोरपि कर्तृकर्मणो: षष्ठी न भवति । कृष्टव्या ग्रामं शाखा देवदत्तेन । नेतव्या ग्राममजा देवदत्तेन । कृषेर्द्विकर्मकत्वात् प्रधाने कर्मणि कृत्यप्रत्यय न त्वप्रधाने इति तस्मिन् कर्मणि कर्तरि च प्राप्ता षष्ठी न भवति एतच्च योगविभागात् लभ्यते । कृत्यानामित्येको योग: । अत्रोभयप्राप्तौ नेति च वर्तते । युगपदुभयप्राप्तीनां कृत्यानां प्रयोगे षष्ठी न भवति । तत: कर्तरि वा अत्र षष्ठीत्येवानुवर्तते अन्यत् सर्वं निवृत्तमिति । अथवा न लोकेत्यत्र नेतियोगविभाग: । तेनोभयप्राप्तौ कृत्ये षष्ठ्या: प्रतिषेधो भविष्यति सूत्रे वा इत्यस्य व्यवस्थित विभाषाश्रयणाद्वा सिद्धम् इति दिक् ।

8।- अत्रायुष्यादीनां पर्यायग्रहणं कर्त्तव्यम्

चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितै: {2/3/73} इति सूत्रे काशिकायां पठितमिदं वार्त्तिकम् । आशिषि गम्यमानायाम् आयुष्यादियोगे चतुर्थी भवति । चकारो विकल्पानुकर्षणार्थ: । शेषे चतुर्थीविधानात् तया मुक्ते षष्ठी भविष्यति । अत्र चायुष्यादीनां पर्यायग्रहणं कर्त्तव्यम् । आयुष्यं देवदत्ताय देवदत्तस्य वा भूयात् । चिरंजीवितं देवदत्ताय, देवदस्य वा भूयादिति । अत्रार्थशब्दस्य द्वन्द्वान्ते श्रूयमाणस्य प्रत्येकमभिसम्बन्धात् सिद्धम् । यदि चार्थशब्द: पृथगेव निमित्तम् तर्हि व्याख्यानात् सर्वत्रार्थग्रहणं विज्ञेयमिति दिक् ।

।। इति द्वितीयाध्यायस्य तृतीय: पाद: समाप्त: ।।

82- स्थेणोरद्यतन्यान्वेति वक्तव्यम्

अनुवादे चरणानाम् ॥2/4/3॥ इति सूत्रे भाष्ये काशिकायान्च पठितमिदं वार्त्तिकम् । चरणशब्द: शाखानिमित्तक: पुरूषेषु वर्तते । चरणानां द्वन्द्व एकवद् भवति अनुवादे गम्यमाने । प्रमाणान्तरावगतस्यार्थस्य शब्देन संकीर्त्तनमनुवाद: । यो हि कठादिप्रोक्ताध्ययनविशेष: शाखा तत्र यदा चरणशब्दो वर्तते, तदा जातिरप्राणिनामित्येव सिद्धम् । यदा तु शाखानिमित्तिक: पुरूषेषु वर्तते तदा अप्राणिनामिति निषेधात् न सिध्यतीति वचनारम्भ: । उदगात् कठकलापकं प्रत्यष्ठात् कठकौथुमम् । कठेन प्रोक्तमध्यते इति कठा: । कठशब्दात् प्रोक्तार्थे कलापिवैशम्पायनान्तेंवासिभ्यश्चेति णिनि: । तस्य कठचरकाल्लुक् । ततस्तदधीते तद्वेद इत्यण्, तस्य प्रोक्ताल्लुक् । छन्दो ब्राह्मणानि च तद्विषयाणि इति तद्विषयता । कलापिना प्रोक्तमधीयते इति कलापा: प्रोक्तार्थे कलापिनोऽण् । इनण्यनपत्ये इति प्रकृतिभावे प्राप्ते स ब्रह्मचारिपीठ सर्पिकलापि कुथुमि तैतिलि जाजलि लाङ्गलि शिलालि शिखण्डी शूकरसद्मसुपर्वणामुपसंख्यानमिति टिलोप: । ततस्तदधीत इति अण् । तस्य प्रोक्ता ल्लुक्, पूर्ववद् विषयता च । कठाश्च कलापाश्च कठकलापम् । एव कौथुमशब्दोऽपि बोध्य: । कठाश्च कौथुमाश्च कठकौथुमम् ।

कठकलापादीनामुदयप्रतिष्ठे प्रमाणान्तरावगते यदा पुन: शब्देनानूद्येते तदैवमुदाहरणम् । यदा तु प्रथमत एवोपदेशस्तदा प्रत्युदाहरणम् । अनुवादे किं उद्गु: कठकलापा: । प्रत्ष्ठु: कथकौथुमा: ।

तत्र स्थेणोरिति वक्तव्यम् । तेन अनन्दिषु: कठकलापा: । एवमपि

तिष्ठन्तु कठकलापा इत्यत्रापि प्राप्नोति । अतः अद्यतन्यामिति वक्तव्यम् । उदगात् कठकलापम् । इह च न भवति उद्यन्ति कठकलापा इति । एतच्च वार्त्तिकं न कर्त्तव्यम् । तुल्यार्थैरतुलोपमाभ्यामिति सूत्रात् अन्यतरस्यामित्यनुवर्तते । सा च व्यवस्थितविभाषाविज्ञायते तेन स्थेणोरद्यतन्यामनुवादे चरणानामेकवद् भावो भविष्यति । नान्यत्रेति एकवद्भावश्च द्विगुरेकवचनम् {2/4/1} इति सूत्रात् अनुवर्तते । तत्र यदि पारिभाषिकमेकवचनं गृह्यते तर्हि अनुप्रयोगे एकवचनं न स्यात् पन्चमूलीयं शोभनेति, अनुपेयागस्याद्विगुत्वात् । यदि च पारिभाषिकमेकवचनमिहाभिप्रेतं स्यात् तदा द्विगोरेकवचनमिति ब्रूयातत् तस्मादन्वर्थस्यैकवचनस्य ग्रहणम् । एकस्य वचनमिति एकस्यार्थस्य वाचाको भवतीत्यर्थः । नपुंसकलिङ्गेन समान्येन निर्देशः । न चानेकार्थाभिधायिनः शब्दस्य वचनशतैरप्येकार्थाभिधायित्वं शक्यते वक्तुम् । शब्दानामनेकार्थाभिधायकत्वस्य स्वाभाविकत्वात् । उच्यते चेदं वचनम् । ततः सामर्थ्यात् अतिदेशोऽयं विज्ञायते द्विगर्थ एकवद् भवतीति ।

यद्येवं तद्धितार्थे यो द्विगुस्तस्याप्येकवद्भावः प्राप्नोति पन्चसु कपालेषु संस्कृताः, पन्चकलापा इति । अतः समाहारद्विगोश्चेदं ग्रहणम् । कथं पुनः समाहारद्विगोरेव ग्रहणमिति चेत् उच्यते, द्वन्द्वश्च इत्यत्र चकारेण द्विगुरनुकृष्यते । यस्मिन्नर्थे द्वन्द्व एकार्थी भवति तस्मिन्नेवार्थे द्विगोरप्येकवद्भावो न्यथा स्यात् । द्वन्द्वश्च समाहार एव एकार्थी भवति नान्यत्र । तस्मात् द्विगोरपि एकवद्भावस्तत्रैव भवति । अतः समाहारे द्विगोरेवेदं ग्रहणं युक्तम् । यदि तर्हि समाहार द्विगोरेवेदं ग्रहणम् । तदा निःप्रयोजनोऽतिदेशः । तथाहि समाहारो द्विगोरर्थः । समाहारश्च भावसाधनः, समाहारणं समाहारः समुदायः ।

स चैक एव । तत्र न्यायप्राप्तमेवैकवचनमिति निष्फलं सूत्रम् । नैतदस्ति । यतः समुदायिभ्योऽनन्यः समुदाय इत्यस्मिन् दर्शने अनेकद्रव्यात्मकत्वात् समुदायस्यैकवचनं न सिध्यतीत्यारम्भः । तथा चोक्तं भाष्ये "प्रत्यधिकरणं वचनोत्पत्तेः संख्या सामानाधिकरण्याच्च द्विगोरेकवचने विधानम्" (महा० 553) प्रत्यधिकरणं प्रतिद्रव्यम् । वचनस्योत्पत्तौ, प्रत्यभिधेय द्रव्यसामवायिनी संख्याविभक्तिः प्रयोजिकोत्पद्यते । द्विगोश्चयो अर्थः सोऽनेकात्मकः । तथा हि पन्च पूलाः समाहृताः । समाह्रियमाणानां पूलानां पन्चसंख्यावच्छिन्नत्वात् संख्यासामानाधिकरण्यातच्च पन्चैतानि द्रव्याणि इति कृत्वा समुदायस्यैकवचनं न सिध्यति । अत एकवद्भावो विधीयते इति ।

समुदायिभ्योऽन्यः समुदाय इत्यस्मिन् दर्शने सूत्रमिदं प्रत्याख्यातव्यमेव । तथा चोक्तं भाष्ये "नव वा समाहारस्यैकत्वात् । न वा योगारम्भेणेवार्थः, किं कारणं समाहारैकत्वात् बएकवचनं सिध्यतीति" । अयमर्थः । तिरोहितावयवभेदः समूहरूपः समाहारो द्विगोरर्थः । तस्यैकत्वात् वनादिवत् एकवचनसिद्धेर्नात्र सूत्रेण प्रयोजनम् । अवश्यन्चैतत् भावसाधनः समाहार आश्रयणीयः । अन्यथा पन्चानां खट्वानां समाहारः पन्चखट्वीत्यत्र वा टाबन्त इति स्त्रीत्वपक्षे खट्वाशब्दस्यानुपसर्जनत्वात् ह्रस्वो न स्यात् । अनुपसर्जनत्वन्च अप्रथमानिर्दिष्टत्वात् अनेक विभक्तित्वात् च । भावसाधनेतु पन्चानां खाट्वानां समाहारः समाहारं समाहारेणेति समासार्थस्य नानाविभक्तियोगेऽपि खट्वाशब्दस्य षष्ठ्यन्तत्वात् एकविभक्ति चेति उपसर्जनत्वात् ह्रस्वत्वं सिध्यति । एकवचनमित्येतत् उत्तरार्थं कर्त्तव्यमेवेति दिक् ।

- - - - - - - - - - - - - - - - - - - - - - - - -

1- महाभा० - पृ० 534.

83- अग्रामा इत्यत्र नगाराणां प्रतिषेधो वक्तव्यः

विशिष्टलिङ्गो नदीदेशोऽग्रामाः (2/4/7) इति सूत्रे भाष्ये काशिकायाञ्च पठितमिदं वार्त्तिकम् । विशिष्टलिङ्गानां = भिन्नलिङ्गानां नदीवाचिनां शब्दानां देशवाचिनां च ग्रामवर्जितानां द्वन्द्व एकवद्भवति । नद्यवयवो द्वन्द्वो नदीत्युच्यते । देशावयवश्च देशः । नदीदेश इत्यसमासनिर्देश एवायम् । उद्ध्यश्च दूरावती च उद्ध्येरावति, गङ्गाशोणम् । देशः खल्वपि कुरुश्च कुरुक्षेत्रञ्च कुरु कुरुक्षेत्रम् इत्यादि । विशिष्टलिङ्ग इति किं गङ्गायमुने, मद्रकेकया । नदीदेशौ इति किं कुक्कुटमयूर्यौ । अग्रामा इति किं जाम्बवश्च शालूकिनी च जाम्बवशालूकिन्यौ । नदीग्रहणमदेशत्वात् । जनपदो हि देशः । तथा च पर्वतानां न भवति । कैलासश्च गन्धमादनञ्च कैलासगन्धमादने ।

तत्र लोके ग्रामग्रहणेन नगरग्रहणं भवति । तथा हि अभक्ष्यो ग्राम्य शूकर इत्युक्ते नागरोऽपि न भक्ष्यते । ततश्चात्र अग्रामा इति प्रतिषेधेन नगराणामपि प्रतिषेधः प्राप्नोतीति वार्त्तिकं प्रवृत्तम् । अग्रामा इत्यनेन नगराणां यः प्रतिषेधः तस्य प्रतिषेधो वक्तव्या इत्यर्थः । तेन नगराणां विधिरेव भवति । एवञ्च विभिन्नलिङ्गानां नगरवाचिनां द्वन्द्व एकवद्भवतीत्यर्थः । मथुरा च पाटलिपुत्रं च मथुरापाटलिपुत्रम् । ननु ग्रामशब्देन इह शास्त्रे नगराणां ग्रहणं न भवतीति ज्ञापकात् सिद्धम् । तथाहि प्राचां ग्रामनगराणामिति सूत्रे ग्रामग्रहणे यद् नगरग्रहणं करोति आचार्यस्तज्ज्ञापयति इह शास्त्रे ग्रामग्रहणेन नगरस्य ग्रहणं न भवतीति तस्मात् वार्त्तिकं न कर्त्तव्यमिति चेन्न तत्र नगरग्रहणास्यान्यार्थत्वात् । वक्ष्यति हि तत्र ग्रामत्वादेव सिद्धे नगरग्रहणं प्रवृत्तिभेदज्ञापनार्थम् । ग्रामग्रहणभङ्ग-

विशेषणम् । पूर्वेषु कामशमी, नगरग्रहणं तूत्तरपदविशेषणम् पूर्वपाटलिपुत्रक: इति । किन्च वाहीकग्रामेभ्यश्च उदीच्यग्रामाच्चेत्यादौ ग्रामशब्देन नगरग्रहणं न स्यात् तस्मात् अग्रामा इत्यत्र नगरप्रतिषेध इति वक्तव्यमेव । एवन्चात्र ग्रामग्रहणेन नगराणां ग्रहणं न भवति । तेनोक्त प्रयोगा: साधवो जाता: ।

84- उभयतश्च ग्रामाणां प्रतिषेधो वक्तव्य:

इदमपि तत्रैव सूत्रे पठितम् । उभयमस्मिन् इत्यर्थे उभयत: यत्र कश्चिदवयवो ग्राम: कश्चिन्नगरं तत्र ग्रामाणां य: प्रतिषेध स एव वक्तव्य: । न पुनर्नगराश्रयप्रतिषेध स एव वक्तव्य: । न पुनर्नगराश्रय: प्रतिषेध: । शौर्यन्च नगरम् केतवतं च ग्राम इति सौर्यकेतवते इति । अत्रेदं बोध्यम् अग्रामा इत्यत्र प्रसज्यप्रतिषेधो विज्ञायते । न चेद् द्वन्द्वे ग्रामा विद्यन्ते इति तेन यत्र ग्रामगन्धोऽप्यस्ति तत्राप्येकवद्भावो न भवतीति ।

प्रसज्यप्रतिषेधे वाक्यभेदासमर्थसमासकल्पनापेक्षया वाक्यमेव कर्त्तव्यमिति दिक् ।

85- बहुप्रकृति: फलसेनावनस्पतिमृगशकुनि क्षुद्रजन्तुधान्यतृणानाम्

विभाषावृक्षमृगतृणधान्यव्यन्जनपशुशकुन्यश्व वडवपुर्वापराधरोत्तराणाम् {2/4/12} इति सूत्रे भाष्ये पठितम् । वृक्षमृगतृणधान्यव्यन्जनपशुशकुनि अश्ववडव, पूर्वापर अधरोत्तर इत्येतेषां द्वन्द्वो विभाषैकवद्भवति । प्लक्षन्यग्रोधम्, प्लक्षन्य-

ग्रोधाः, रूरुपृषतम्, रूरुपृषताः । कुशकाशम्, कुशकाशाः इत्यादि प्रयोगाः । बह्वो बहुत्वसंख्यायुक्ता वर्त्तिपदार्थाः प्रकृतिः कारणं यस्य द्वन्द्वार्थस्य स बहुप्रकृतिः, तदर्थाभिधायित्वात् द्वन्द्वोऽपि बहुप्रकृतिः । नेदं स्वतन्त्रं लक्षणम् । स्वातन्त्र्ये नित्यं चेत् वनस्पत्यादीनामपि एतत् सूत्रविहितं विकल्पं बाधित्वा बहुप्रकृतित्वे नित्य एकवद्भावः स्यात् । विकल्पे फलादीनामपि जातिरप्राणिनामित्यादि-लक्षणान्तरेण प्राप्तं नित्यमेकवद्भावं बाधित्वा बहुप्रकृतित्वे विकल्पः स्यात् । अतो लक्षणान्तरस्य शेषोऽयम् । तत्रापि यदि विभाषावृक्ष इत्यत्र पठितत्वात् अस्यैव शेषत्वं स्यात् ततो वनस्पत्यादिषु बहुप्रकृतित्वे एतद्विकल्पाभावेऽपि जाति-रप्राणिनामिति नित्यो विधिः स्यात् । फलादिषु तु न दोषः । एतद्विकल्प-प्राप्त्यभावात् लक्षणान्तरप्राप्तेरेव नियमनात् तस्मात् सर्वस्यैव प्रकरणस्यायं शेषः । अतः स्पष्टं फलादीनां द्वन्द्वोऽनेन लक्षणान्तरेण एकवद् भवन् बहुप्रकृतिरेवैक वद्भवति ।

86- अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यते

इदं वार्त्तिकम् "अपथं नपुंसकम्" (2/4/30) इति सूत्रे भाष्ये पठितम् । काशिकायाञ्च "स नपुंसकम्" (2/4/17) इति सूत्रे पठितम् । इदञ्च सूत्रं परवल्लि-ङ्गमित्यस्यापवादः । यस्यायमेकवद्भावो विहितः स नपुंसकलिङ्गो भवति द्वि-गुर्द्वन्द्वश्च । पञ्चगवम्, दश गवम्, द्वन्द्वः खल्वपि पाणिपादम्, शिरोग्रीवम् ।

तत्रेदं वार्त्तिकम् - अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यते । अत्र चात इत्यधिकारे द्विगोङीब्विधानं ज्ञापकम् । पञ्चमुली, दशरथी । पञ्चानां मूलानां समाहारः स्त्रीपञ्चमूली । दशानां रथानां समाहारः स्त्री दशरथी । द्विगोरिति

ङीप् । स नपुंसकमित्यस्यापवादभूतं वार्त्तिकं अत्र स नपुंसकमिति सूत्रे स ग्रहणं द्विगोरपि यथा स्यात् इत्येवमर्थम् । इतरथा हि अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति । इत्यनन्तरस्यैव द्वन्द्वस्य स्यात् न व्यवहितस्य द्विगो: । नैतदस्ति, एकवचनमित्यनुवर्तते तस्य नपुंसकमित्यनेन सम्बन्धे सति कुतो व्यवधानम् । नह्यत्र एकवचनेन विशेषो द्वन्द्वो अनेनापेक्षते किं तर्हि, एकवचनमात्रम् । प्रसिद्ध्यु संग्रहार्थं तर्हि स ग्रहणम् । स इत्येतत् अनुवादो भविष्यति । अनुवादश्च प्रसिद्धस्यैव भविष्यति । तथा च यथादर्शनं इयं लिङ्गव्यवस्था आख्यायते इति । तेन द्वन्द्वैकवद्भावे नित्यं नपुंसकत्वं विज्ञायते ।द्विगोश्चानियता । तेनाकारान्तोत्तरपदो द्विगु: स्त्रियां भाष्यते इत्येतदुपपन्नं भवति ।

87- वाऽबन्त: स्त्रियामिष्ट:

एतदपि वार्त्तिकं तत्रैव सूत्रे पठितं काशिकायाम् । वा आबन्त: स्त्रियां भाष्यते इति वक्तव्यम् । पन्च खट्वी पन्चखट्वम् । पन्चानां खट्वानां समाहार: । टाप उपसर्जनह्रस्वत्वे कृते द्विगोरिति ङीपि । यदा तु समूहोऽभिधेयस्तदोपसर्जनह्रस्वत्वं सिध्यति न तु समाह्रियमाणेऽभिधेये इति तत्रैव सूत्रे उक्तम् । उपसर्जनस्वे तु परत्वात् तदाश्रयं ह्रस्वत्वम् ।

88- अनो न लोपश्च वा द्विगु: स्त्रियाम्

एतदपि तत्रैव सूत्रे पठितम् । अनो न लोपश्च वा च स्त्रियां भाष्यते इति वक्तव्यम् । च शब्देन वा स्त्रियां भाष्यते इति समुच्चीयते । न लोपस्तु नित्य-

मेव क्रियते । उत्तरपदत्वे चापदादिविधाविति प्रत्ययलक्षणनिषेधात् पदत्वाभावात् लोपो न प्राप्नोतीति वचनम् । पन्चतक्षम्, पन्चतक्षी । पन्चानां तक्ष्णाम् समाहारः। पन्चतक्षन् इत्यत्र न लोपे कृते पक्षे ङ•ीप् ।

## ८१- पात्रादिभ्यः प्रतिषेधो वक्तव्यः

इदमपि तत्रैव भाष्ये काशिकायान्च पठितम् । पात्राद्यन्तानाम् द्विगूनां सिद्ध्ये प्रतिषेधो वक्तव्य इत्यर्थः पात्रादिभ्य इत्यत्र तादर्थ्ये चतुर्थी । पन्चपात्रम्, चतुर्युगम्, द्विभुवनम् । पात्रादिराकृतिगणः ।

## ९०- पुण्यसुदिनाभ्यामह्नः क्लीबतेष्यते

इदं वार्त्तिकं महाभाष्ये अपथं न पुंसकमिति सूत्रे भाष्ये पठितम् । काशिकायान्च अव्ययी भावश्च (2/4/18) इति सूत्रे पठितम् । अव्ययीभावश्च समासो न पुंसकलिङ्•गो भवति । अधिस्त्रि, उपकुमारि, उन्मत्त गङ्•गम् । लोहित गङ्•गम् ।

अत्र स्त्रियामिति अधिस्त्रि इत्यत्र पूर्वपदार्थप्रधानत्वात् पूर्वपदार्थस्य चालिङ्•गत्वात् अलिङ्•गता प्राप्ता । अतः सूत्रेण क्लीबत्वं विधीयते । उन्मत्त-गङ्•गमित्यादौ । उन्मत्ता गंगा यत्रेति अन्यपदार्थे च संज्ञायामिति समासः । अत्रान्यपदार्थस्य प्रधानत्वात् अभिधेयलिङ्•गता प्राप्ता । अतः सूत्रेण नपुंसकता विधीयते ।

पुण्यसुदिनाभ्यां सहितस्याह्नः क्लीबता वार्त्तिकेन विधीयते । पुण्यमहरिति कर्मधारयः । राजाहस्सखिभ्यष्टच् इति अच् समासान्तः । रात्राह्नाहाः पुंसि इति पुँल्लिङ्गता प्राप्ता अव्ययीभावत्वाभावाच्च नात्रं सूत्रं प्रवर्त्तते इति वार्त्तिकारम्भः । सुदिनशब्दः प्रशस्तवचनः सुदिनमहरिति कर्मधारयः पुण्याहम् सुदिनाहमिति प्रयोगः ।

91- पथः संख्याव्ययादेः क्लीबतेष्यते

इदमपि वार्त्तिकभाष्ये काशिकायाञ्च यथोक्तं स्थितम् । संख्याव्ययादेः सहितस्य कृतसमासान्तस्य पथो नपुंसकत्वं स्यात् । परवल्लिङ्गं द्वन्द्व तत् पुरुषयोरित्यस्यापवादभूतमिदम् । त्रिपथम्, चतुष्पथम्, विपथम्, सुपथम् । त्रयाणां पन्थाः, चतुर्णां पन्था इति विग्रहे षष्ठीसमासः । ऋक्पूरि्रति अप्रत्ययः समासान्तः, टिलोपः । विरूपः पन्थाः, शोभनः पन्था इत्यादौ । प्रादिसमासः कृतसमासान्तनिर्देशान्नेह सुपन्थाः अतिपन्थाः इति ।

92- क्रियाविशेषणाञ्च क्लीबतेष्यते

इदमपि तत्रैव सूत्रे काशिकायां पठितम् । क्रियाविशेषणात् क्रियाद्वारेण स्त्रीलिङ्गताप्राप्तौ वचनम् । मृदु पचति शोभनं पचतीति प्रयोगः ।

93- द्विगुप्राप्तापन्नालं पूर्वगतिसमासेषु प्रतिषेधो वाच्यः

इदं वार्त्तिकं परवल्लिङ्गं द्वन्द्व तत्पुरुषयोः {2/4/26} इति सूत्रे भाष्ये कन्नि काशिकायान्च पठितम् । परस्य यल्लिङ्गं तत् भवति द्वन्द्वस्य तत्-पुरुषस्य च । समाहारद्वन्द्वे नपुंसकलिङ्गस्य विहितत्वात् इतरेतरयोगद्वन्द्वस्येह ग्रहणम् । उत्तरपदलिङ्गं द्वन्द्व तत्पुरुषयोर्विधीयते । कुक्कुटमयूर्याविमे मयूरी कुक्कुटाविमौ । तत्पुरुषस्य अर्द्धं पिप्पल्याः, अर्द्धपिप्पली, अर्द्धनरवरन्जनी ।

किमर्थमिदं सूत्रमुच्यते । इह द्वन्द्वे त्रीणि दर्शनानि । अवयवार्था एपापेक्षितपरस्पराः द्वन्द्वार्थो न तु तद्व्यतिरिक्तः समुदायो नामेत्येकम् । अव-यवार्थव्यतिरिक्त एव समुदायो द्वन्द्वार्थः स चावयवलिङ्गेन लिङ्गवान् इति द्वितीयम् । स एव स्वयं लिङ्गशून्यं इति तृतीयम् । तत्र पूर्वके दर्शनद्वये विभिन्न-लिङ्गावयवे द्वन्द्वे युगपदुभयलिङ्गतानुपपत्ते पर्यायेण लिङ्गद्वयप्रसङ्गे परस्यैव लिङ्गं भवतीति ।नियमार्थं भवति । तृतीये तु समासस्यालिङ्गस्य परवल्लिङ्ग-ता भवतीति विध्यर्थः । तत्पुरुषोऽपि द्विविधः पूर्वपदार्थप्रधानः अर्द्धपिप्पल्यादिः, उत्तरपदार्थप्रधानो राजकुमार्यादिः । तत्रोत्तरपदार्थप्रधाने प्राधान्यादेव परव-ल्लिङ्गस्य सिद्धत्वात् पूर्वपदार्थप्रधाने विध्यर्थं भवति । तत्र वृत्तिकारेण विधिपक्ष आश्रितः । एवं हि एकरूपा वचनव्यक्तिर्भवति । अन्यथा तत्पुरुषे विधिरूपा द्वन्द्वे नियमरूपेति वचनव्यक्तिः स्यात् ।

द्वन्द्व तत्पुरुषयोरिति षष्ठी । सप्तम्यां त्वयमर्थो भविष्यति । द्वन्द्वे तत्पुरुषे च यत् परं तद्वल्लिङ्गं भविष्यतीति तत्र कार्यिणोऽनुपादानात् पर-

शब्दस्य च सम्बन्धिशब्दत्वात् तदाक्षिप्तस्य पूर्वपदस्य लिङ्गविधिर्भवति । यद्वा सप्तमीपक्षे द्वन्द्वे तत्पुरुषे च विषये परस्यैव लिङ्गं भवति । विषयत्वं सप्तम्यर्थः । तत्रापि पूर्वपदस्यैव लिङ्गविधि । अत्रपक्षे मयूरी कुक्कुटावित्यत्र उत्तरपदार्थलिङ्गे पूर्वपदार्थस्यातिदिष्टे स्त्रीप्रत्ययस्य निवृत्तिः प्राप्नोति । कुक्कुटमयूर्यौ, राजकुमारीत्यादौ च पूर्वपदे स्त्रीप्रत्ययप्रसङ्गः । इष्टमपि सिध्यति अस्मिन् पक्षे पूर्वकायः, अर्द्धद्रोण इत्यादौ यत्र पूर्वपदं नपुंसकमुत्तरपदं पुंल्लिङ्गम्, तत्र परस्य लिङ्गे पूर्वस्यातिदिष्टे समासस्यापि तदेव भवति । न च पूर्ववदिह किञ्चिदनिष्टमापद्यते । द्वन्द्वेऽपि दर्शनद्वये पूर्वके गुणकर्मणी, द्रव्यगुणौ इत्यादौ यत्र पुंनपुंसकाभ्यां भिन्नलिङ्गे पूर्वोत्तरपदे, यत्र वाकारान्तं स्त्रीप्रत्ययान्तं वा पदं न भवति, गतिस्थाने योषित् पुरुषौ, तित्तिरिबलाके, इति तत्रोत्तरपदार्थलिङ्गे पूर्वपदार्थस्यातिदिष्टे द्वन्द्वस्य पर्यायेण द्वयोरपि लिङ्गे प्रवृत्ते अपि सर्वमिष्टं संगृहीतं भवति । पूर्ववदेव न किञ्चिदनिष्टमापद्यते । एवञ्च सप्तमीपक्षे दोषस्यापि सद्भावात् षष्ठीपक्ष आश्रितः । तथा च सति समासार्थस्यायमतिदेशो विज्ञायते । पूर्वपदस्य न प्रतिषिध्यते । नापि विधीयते इति न भवति पूर्वोक्त दोषावसरप्रसङ्गः । समासार्थस्य लिङ्गातिदेशात् अनुप्रयोगोऽपि समासार्थस्यैव विशेषणमिति तल्लिंगमेव भवतीति ।

तत्रेदं वार्त्तिकं द्विगु प्राप्तेत्यादि । द्विगुप्राप्तापन्नादिषु परवल्लिङ्गस्य प्रतिषेधो वक्तव्य इत्यर्थः । द्विगुः पञ्चसु कपालेषु संस्कृतः पुरोडाशः पञ्चकपालः । तद्धितार्थे द्विगुः । संस्कृतार्थे उत्पन्नस्याणः द्विगोर्लुगनपत्ये इति लुक् । अत्रोत्तरपदस्य नपुंसकत्वात् समासस्य नपुंसकत्वं प्राप्तम् । अनेन प्रतिषिध्यते तस्मात् विशेष्यलिङ्गमेव भवति ।

प्राप्तो जीविकां प्राप्तजीविकः, आपन्नो जीविकामापन्नजीविकः। प्राप्तापन्ने च द्वितीयया इति समासः। अत्रोत्तरपदस्य जीविका इत्यस्य लिङ्गं न भवति अपि तु विशेष्यलिङ्गमेव।

अलंजीविकायै, अलंजीविकः। पर्यादयोग्लानाद्यर्थे चतुर्थ्या इति समासः अत एव ज्ञापकाद्वा। अत्रापि स्त्रीलिङ्ग प्राप्तं प्रतिषिध्यते। विशेष्यलिङ्गता भवति।

गतिसमासः - निष्कान्तः कौशाम्ब्याः निष्कौशाम्बिः। निरादयः क्रान्ताद्यर्थे पञ्चम्या इति समासः। अत्रापि परवल्लिङ्गं प्राप्तं प्रतिषिध्यते। स तर्हि प्रतिषेधो वक्तव्यः। न वक्तव्यः, सूत्रे तत्पुरुषग्रहणं न करिष्यते। परवल्लिङ्गं द्वन्द्वस्येत्येव कथं पूर्वकायः, अर्धपिप्पलीति। एकदेशिसमासो नारप्स्यते। कर्मधारय एवात्र भविष्यति। पूर्वश्चासौ कायः अर्धं चासौ पिप्पली चेति। पूर्वादयः शब्दा एकदेशे वर्तन्ते कायादयस्तु समुदाये। कथमेषां सामानाधिकरण्यम्। अवयवेन समुदायोपचारात्। तदेवं कर्मधारये कृते प्राधान्यादेवोत्तरपदार्थस्य लिङ्गं भविष्यति। नार्थस्तत्पुरुषग्रहणेन, नाप्येकदेशिसमासेन। षष्ठीसमासप्रसङ्ग इति चेन्न इष्टत्वादनभिधानाच्च। तत्रैतत् स्यात् यद्यपि पूर्वकाय इत्यादीनि रूपाणि कर्मधारयेणापि सिध्यन्ति तथापि मुख्यार्थवृत्तिषु कायादिशब्देषु यथापूर्वं कायस्येत्येवमादि वाक्यं भवति तथा कायपूर्व इत्यादि षष्ठीसमासोऽपि स्यात्। अतस्तन्निवृत्तये एकदेशिसमास आरब्ध इति। तच्च नैवम्, इष्टत्वात् अनभिधानाच्च। तत्र तावद् द्वितीयतृतीय इत्यत्रान्यतरस्यां ग्रहणात् सूत्रकारस्य षष्ठीसमास इष्टः, भिक्षाद्वितीयमिति। अर्धं

नपुंसकमित्यत्रापि अम भाष्यकार आह इष्यतेऽत्र षष्ठीसमासोऽपि तद्यथा अपूर्वाद्धि मया भक्षितम् ।

न्यासकारस्तु प्राह - वक्तव्य इत्यस्य व्याख्येय इत्यर्थः । व्याख्यानञ्च तत्पुरुष इत्यनुवर्तमाने पुनः सूत्रे तत्पुरुषग्रहणस्यैतत् प्रयोजनम्, तत्पुरुषविशेषस्य परवल्लिङ्गता यथा स्यात् । तेन द्विगु प्राप्तापन्नालंपूर्वगतिसमासेषु परवल्लिङ्गता न भवति । अन्यथा यदि सर्वस्यैव तत्पुरुषस्य परवल्लिङ्गता स्यात् तदा परवल्लिङ्गं द्वन्द्वस्य चेत्येवं ब्रूयात् । चकारद्धि प्रकृतस्य तत्पुरुषस्येति विज्ञायत एवेति दिक् ।

## ९४- अनुवाकादयः पुंसीति वक्तव्यम्

रात्राह्नाहाः पुंसि (2/4/29) इति सूत्रे भाष्ये काशिकायाञ्च पठितमिदं वार्त्तिकम् । रात्र, अह्न अह इत्येते पुंसि भाष्यन्ते । कृतसमासान्तानां निर्देशः । परवल्लिङ्गतया स्त्री-नपुंसकयोः प्राप्तयोरिदं वचनम् । द्विरात्रः त्रिरात्रः । तत्र अनुवाकादयः पुंसीति वक्तव्यम् । अनूच्यते इति अनुवाकः । तत्र विशिष्टं वाक्यमभिधेयमिति नपुंसकत्वे प्राप्ते वचनम् ।

केचिदाहुः, बहुव्रीहिरयम् । अनुक्रान्तो वाकोऽनयानेन वानुवाकः । स्त्रीलिङ्गे नपुंसकलिङ्गे च प्राप्ते वचनम् । अन्ये च मन्यन्ते योऽयं भावे घञ् स सामर्थ्यात् पुंस्येवावतिष्ठते । यस्त्वकर्त्तरि कारके विधीयते स पुंसि नपुंसके च बाधकाभावात् । स्त्रियान्तु न भवति यतः स्त्रियां क्तिन् इत्यकर्त्तरि च कारके

संज्ञायामिति घञ् विहित: ।

## १५- एनदिति नपुंसकैकवचने वक्तव्यम्

इदं वार्त्तिकं "द्वितीया टौस्स्वेन:" ॥2/4/34॥ इति सूत्रे भाष्ये काशिकायान्च पठितम् । द्वितीया टा ओस् इत्येतेषु परत: इदमेतदोरन्वादेश-विषययोरेनशब्द आदेशो भवति अनुदात्त: । अन्वादेशे, अनुदात्त इति वर्तते इदमो मण्डूकप्लुतिन्यायेनानुवृत्ति: । इमं छात्रं छन्दोऽध्यापय अथो एनं व्याकरणं-अध्यापय । अनेन छात्रेण रात्रिरधीता अथो अनेन अहरण्यधीतय: एतद: खल्वपि एतं छात्रं छन्दोऽध्यापय, अथो एनं व्याकरणमप्यध्यापय ।

तत्र एनदिति नपुंसकैकवचने वक्तव्यम् । एनादेशे कृते अतोऽम् इति अम्भावे सति एनमिति प्राप्नोति अत: एनदादेशो वक्तव्य: । प्रक्षालयैनत् परि-वर्तयैनत् इति प्रयोगा: ।

यदि एनत् क्रियते तर्हितदेव क्रियताम् एनो न वक्तव्य: । का रूप-सिद्धि: अथो एनम् अथो एने अथो एनानीति । त्यदाद्यत्वेन सिद्धम् । नपुंसकैक-वचने तु नित्यत्वात् स्वमोर्नपुंसकात् इति लुकि कृते एनदिति स्यात् । ननु इह-त्वेन श्रित इति द्वितीयासमासे एव श्रितक इति भवति एनदादेशो च एनच्छ्रितक इति प्राप्नोति । अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते इति त्यदा-द्यत्वमकृत्वा लुक्क्रियते लुकि च कृते प्रत्ययलक्षणनिषेधात् त्यदाद्यत्वाभाव: । इति चेन्न यथालक्षणमप्रयुक्ते । यस्य प्रयोगो नोपलभ्यते तल्लक्षणानुसारेण संस्कर्त्तव्यम् ।

तत्र न लुमताङ्गस्येत्यत्राङ्गाधिकारो निर्दिश्यते तदाप्रत्ययलक्षणेनैतत्सिद्धम् इति भाव्यम् । अथानङ्गाधिकारविहितमपि अङ्गकार्यं निषिध्यते तदादेशाभावात् एतच्छक्तक इति भाव्यम् ।

यत्र किञ्चिद्विधाय वाक्यान्तरेण पुनरन्यदुपदिश्यते सोऽन्वादेशः । एतस्य अयं दण्डो हरानेन, एतमातं ङित विधात् इति । इद वस्तुनिर्देशमात्रं कृत्वा एवमेव विधानमिति दिक् ।

## 96- घस्लृभावे अच्युपसंख्यानम्

लुङ्सनोर्घस्लृ (2/4/37) इति सूत्रे भाष्ये काशिकायान्च पठितमिदं वार्त्तिकम् । लुङि सनि च परतोऽद्यो घस्लृ आदेशो भवति । लृदिक् करण पुषादीति अङर्थम् । लुङि - अघसत् अघसताम् अघसन्, सनि जिघत्सति, जिघत्सतः जिघत्सन्ति ।

ननु सूघस्यद्‌ कमरच् इति वचनात् घसिः प्रकृत्यन्तरमस्ति किमर्थं घस्लादेश इति चेन्न अदेरात्सीत् । अत्स्यतीत्यनिष्टं रूपं माभूत् इति योगारम्भः घस्लृभावेः अचि उपसंख्यानम् । अचि आदेशो यथा स्यात् । प्रात्तीति प्रघसः । पचाद्यच् तस्मिन् परे अदो घस्लादेशः ।

न्यासकारस्तु वार्त्तिकं उपसंख्यानमित्यस्य प्रतिपादनं कर्त्तव्यमित्यर्थः । प्रतिपादनस्तु उत्तरसूत्रे चकारोऽनुक्तसमुच्चयार्थः । तेन घस्लृभावोऽच्यपि भवति । प्रघस इति प्राहुः ।

97- इण्वदिक इति वक्तव्यम्

इदं वार्त्तिकम् इणो गा लुङि॰ (2/4/45) इति सूत्रे भाष्ये काशिकायान्च पठितम् । इण: गा इत्ययमादेशो भवति लुङि॰ परत: । आगत् अगाताम् अगु: । लुङि॰ इति वर्तमाने पुनर्लुङ्॰ग्रहणम्, आत्मने पदेष्वन्यतरस्यामित्येतन्माभूत्। इह तु अविशेषेण नित्यन्च भवति अगात्, अगायि भवता ।

तत्र इण् वदिक इति वक्तव्यम् । अध्यगात् अध्यगाताम् अध्यगु: । यदि चास्यैव गादेशरूपप्रकरणस्य शेषभूतमिदं वार्त्तिकं स्यात् तदा इणिकोर्गा लुङ॰ीति सूत्रन्यास कर्त्तव्य इत्यवक्ष्यत् । यस्तु खलु पृथक् इण्वदिक इत्याह वार्त्तिककार: । तेन मन्यामहे सर्वस्य शास्त्रस्य शेष इति । तेन इणो यण्, इकोऽपि भवति अधियन्ति । एतिस्तु शासु इति इकोऽपि भवति अधीत्येति । वस्तुतस्तु बहुलं छन्दसीत्यत: बहुलं ग्रहणं मण्डूकन्यायेनानुवर्तनीयम् । तेन सर्वे प्रयोगा: सिद्धा इति वार्त्तिकं न कर्त्तव्यम् ।

98- क्शादिरण्ययमादेश इश्यते

चक्षिङ॰: ख्यान् (2/4/54) इति सूत्रे पठितमिदम् चक्षिङ्॰: ख्यानादेशो भवति अर्धधातुके । आख्याता आख्यातुम् । कर्त्रभिप्राये क्रियाफले आख्यास्यते आचख्ये इत्यात्मने पदं यथास्यात् तृजादौ चक्षितेत्यादौ माभूदिति योगारम्भ: । आख्यातेत्यादि ख्या प्रकथने इत्यस्यैव सिद्धम् । अत्र यथान्यासे आकारात् पूर्वोभाग: खकारयकारात्मेति स्यादाख्यातेति । ककारशकारात्मापि तु इष्यते

अक्शातेति तदर्थं वार्तिकारम्भः । क्शादिरण्ययमादेश इष्यते । ककारेऽकार उच्चरणार्थः क्शख्यानित्येवं रूप आदेशो वक्तव्यः । आक्शाता आक्शातुमिति ।

११- बहुलग्रहणानुवृत्तेः सिद्धमिदम्

अपर आह - ख्शादिरेवायमादेश इति । अत्राप्यकार उच्चारणार्थः । तत्र चर्त्वे कृते क्शातेत्यादि भवति । कथमाख्यातेति खकारयकारयोः श्रवणम् । असिद्धकाण्डे णत्वविधानानन्तरं ख्शात्रः शस्य यो वेति शस्य यत्वं विभाषा वक्तव्यम् । तत्र चर्त्वे यत्वं सिद्धमित्याख्यातेत्यादि यत्वपक्षे रूपम् । अन्यदा क्शातेति रूपम् । अवश्यन्च शस्य यत्वमाश्रयणीयम् । इह सुप्रचष्टे सुप्रख्यः, आतश्चोपसर्गे इति कः । ततो यत्वस्यासिद्धत्वात् सुप्रख्यस्य भाव इति योपधात् गुरूपोत्तमात् इति वुञ् न भवति अयोपधत्वात् । तस्मिन्नसति ष्यञ् भवति सौप्रख्यमिति । तथा सुप्रख्येन निर्वृते देशे भवः सौप्रख्यीयः, धन्वयोपधात् इति वुञ् न भवति । वृद्धाच्छः, एव भवति । अख्यातः, यत्वासिद्धत्वात् यऽवत्त्वाभावात् संयोगादेरिति नत्वं न भवति। न ख्याख्या पूर्मूर्च्छिमदामित्यत्र ख्याग्रहणं कर्त्तव्यं न भवति । पुंसः ख्यानं पुंख्यानमित्यत्र यत्वस्यासिद्धत्वात् पुमः खय्यम्परे इति रुविधिर्न भवति । पर्यख्यानमित्यत्र यत्वस्यासिद्धत्वात् छकारेणानटा व्यवात् कृत्य च इति णत्वाभावः । नटः ख्यातेत्यत्र यत्वस्यासिद्धत्वात् खरः शर्परत्वात् शर्परे विसर्जनीय इत्येष विधिर्भवति, नन्वसिद्धे शस्य य विधानेऽपि ख्या प्रकथने इत्यस्यौत्पत्तिक एव यकार इति तत्र कं वुभादिप्रसङ्गः । एवं तर्हि सोऽपि ख्शादिः । शस्य यवचनमपि साधारणं द्रष्टव्यम् इति दिक् ।

### 100- वार्जने प्रतिषेधो वक्तव्यः

इदमपि तत्रैव सूत्रे भाष्ये काशिकायाञ्च पठितम् । वर्जने ख्शात्रादेश प्रतिषेधो वक्तव्यः । दुर्जनाः संवर्त्त्या इति वर्जनीया इत्यर्थः । अत्र न ख्यामादेशः । अपि तु चक्षिङ्धातोः ऋहलोर्ण्यत् इति ण्यत् ।

### 101- असनयोश्च प्रतिषेधो वक्तव्यः

इदमपि तत्रैव पठितम् असनयो परयोरादेशप्रतिषेधो वक्तव्यः । नृचक्षा राक्षसा इति । हिंसार्थोऽत्र धातुः । सर्व धातुभ्योऽसुन् इति असुन् । अत्वसन्तस्येति दीर्घः । अत्र न ख्यात्रादेशः ।

विचक्षणः पण्डितः । अत्र कृत्यल्युटो बहुलमिति कर्तरि ल्युट् अनि न ख्यात्रादेशः ।

### 102- बहुलं संज्ञाछन्दसोरिति वक्तव्यम्

इदमपि तत्रैव पठितम् । छन्दसि बहुलमादेशो वक्तव्यः । अन्नवधकगात्रविचक्षणाजिराद्यर्थम् ।

अन्नमित्यत्र नादो जग्ध्यदेशः । वधक इत्यत्र ण्वुलिः हनो वधादेशः । गात्रमिति इण औणादिके ष्ट्रनि गादेशः । विचक्षण इति अत्र चक्षिङः ख्यामादेशाभावः ।

अजिरशब्दस्तु अजिराशाशिराशिथिर इति किरच्प्रत्ययान्त औणादिको निपातित: । तस्यात एव निपातनात् अजेर्व्यघनपोरिति विधीयमानो वीभावो न भवति । आदिशब्देन प्रघस इत्यादेर्ग्रहणम् । अत्र जदेर्घस्लादेश: इति दिक् ।

## 103- घनपो: प्रतिषेधे क्यप उपसंख्यानं कर्त्तव्यम्

अजेर्व्यघनपो: (2/4/56) इति सूत्रे भाष्ये काशिकायान्च पठित-मिदम् । अजेर्धातो: वी इत्ययमादेशो भवत्यार्धधातुके परतो घनयौ वर्जयित्वा । प्रवयणीय:, प्रवायक: । अघनपोरिति किम् ? समाज: उदाज: अपि तु समज: उदज: । समुदोरज: पशुषु इत्यप् । दीर्घोच्चारणं किं प्रवीता: ।

तत्र सूत्रे घनपो: प्रतिषेधे क्यपोऽपि प्रतिषेध: कर्तव्य: । समज्या इति। संज्ञायां समजनियतमन्टापि समज्या इति । अत्र क्यप: आर्धधातुकत्वात् घनपोर्भिन्न-त्वात् वीभाव: अजधातो प्राप्नोतीति प्रतिषेधारम्भ: ।

महाभाष्ये प्रत्याख्यातमिदं वार्त्तिकम् । तथाहि - "घनपो: प्रतिषेधे क्यप उपसंख्यानं कर्त्तव्यम् । इहापि यथा स्यात् समजनं समाज्येति । तत्तर्हि वक्तव्यं न वक्तव्यम् । अपीत्येव भविष्यति । कथम् ? अपीति नेदं प्रत्यय ग्रहणम् । किं तर्हि प्रत्याहारग्रहणम् । क्वमकनस्त्र + सन्विसन्निविष्टानां प्रत्याहार: । अपो-ऽकारात् प्रभृत्या क्यप: पकारात् । यदि प्रत्याहारग्रहणं संवीतिर्न सिध्यति । एवं तर्हि नार्थ उपसंख्यानेन नापि घनयो:, प्रतिषेधे न । इदमस्ति चक्षिङ: ख्यान्, वा लिटि इति ततो वक्ष्यामि अजेर्वी, अजेर्वीभावो भवति, व्यवस्थित: विभाषा

वेति । तेनेह च भविष्यति प्रवेता प्रवेतुं प्रवीतो रथः, संवीति,। इह च न भविष्यति समाजः, समजः, उदाजः, उदजः, समजनम्, उदजनम्, समज्येति । तत्रायमप्यर्थः - इदमपि सिद्धं भवति प्रागितेति किन्च मो इष्यते एतद्रूपम् । वाढमिष्यते । एवं हि कश्चिद्वैयाकरण आह कोऽस्य रथस्य प्रवेतेति । वैयाकरण आह प्राजिता इति । सूत आह आयुष्मान् प्राप्तज्ञो देवानां प्रियः न त्विष्टिज्ञः, इष्यते एतद्रूपमिति । वैयाकरण आह - अहो नु खल्वनेन दुरुतेन बाध्यामहे इति । सूत आह न खलु वेनः सूतः सुवतेरेव सूतः । यदि सुवतेः कुत्सा प्रयोक्तव्या दुःसूतेनेति वक्तव्यम् । न तर्हि इदानीमिदं वक्तव्यम् वा यौ इति । वक्तव्यन्च, किं प्रयोजनम् । नेयं विभाषा । किं तर्हि । आदेशो विधीयते । वा इत्ययमादेशो भवत्यजेर्यौ परतः वायुरिति ।"[1]

न्यासकारास्तु आहुः - संज्ञायां समजनिपतमनविद इत्यादिना संज्ञायां गम्यमानायामजे क्यप् विधास्यते । नियतानुपूर्वीका च संज्ञा भवति । न चादेशे कृते संज्ञा गम्यते । तस्मात् संज्ञायां विधानात् क्यपि वीभावो न भवति ।

किन्तु नेदं युक्तम् । निपत्यादौ संज्ञायाश्चरितार्थत्वात् प्रतिषेधे तस्यानुपयोगात् । व्यवस्थितविभाषा श्रयणादेव समाधाने युक्तमिति दिक् ।

104- वलादावार्धधातुके विकल्प इष्यते

इदमपि तत्रैव सूत्रे काशिकायामुक्तम् । महाभाष्ये च प्रकारान्तरेणा-

---

1- महाभाष्यम् - पृ० 558.

स्वस्यार्थः साधितः । प्रवेता, प्राजिता, प्रवेतुम्, प्राजितुम् ।

एतद्वार्त्तिकार्थोऽपि पूर्वोक्तभाष्यप्रामाण्यात् व्यवस्थित विभाषाश्रयणात् सिद्ध इति वार्त्तिकं न कर्त्तव्यम् । तथाहि नार्थोऽनया इष्ट्या नापि घनयोः प्रतिषेधेन नापि क्यप उपसंख्यानेन, नापि वा यौ इति सूत्रेण एतावस्तु वा लिटि, अजे र्वीत्येव व्यवस्थितविभाषेयम् । तेन घनयोः क्यपि नैव भवति क्त्वादौ यौ च विकल्पाः अन्यत्र नित्यमिति दिक् ।

105- अब्राह्मणगोत्रमात्राद्युवप्रत्ययस्योपसंख्यानम्

ण्यक्षत्रियार्षञितो यूनि लुगणिञोः {2/4/58} इति सूत्रे महाभाष्ये काशिकायाञ्च पठितमिदं वार्त्तिकम् । तत्रण्यादयो गोत्रप्रत्ययाः । गोत्राद् यून्यस्त्रियामिति गोत्रप्रत्ययान्तादेव युवप्रत्ययविधानात् । ण्यन्तात् क्षत्रियगोत्रात् आर्षात् ञितश्च परयोरणिञोर्यूनि लुग् भवतीति सूत्रार्थः ।

ण्यन्तात् तावत् - कुर्वादिभ्योण्यः, तस्माद् यूनि इञ् तस्य लुक् । कौरव्यः पिता । कौरव्यः पुत्रः । ननु च कौरव्यशब्दस्तिकादिषु पठ्यते, ततः फिञा भवितव्यम्, कौरव्यायणिरिति क्षत्रियगोत्रस्तु तत्र ग्रहणम् । कुर्वादिभ्यो ण्यः इत्यनेन विहितस्य, इदं तु ब्राह्मणगोत्रं कुर्वादिभ्यः ण्य इति ण्यः ।

क्षत्रिय - ऋष्यन्धकवृष्णिकुरुभ्यश्च इत्यण् तस्मात् यूनि इञ् तस्य लुक् श्वाफल्कः पिता, श्वाफल्कः पुत्रः । आर्ष - ऋष्यण् तस्मात् यूनि इञ् तस्य लुक् वाशिष्टः पिता, पुत्रश्च ।

नित् - अनृष्यानन्तर्ये विदादिभ्योऽञ्, तस्माद् यूनि इञ् तस्य लुक् वैदः पिता पुत्रश्च । अणः खल्वपि तिकादिभ्यः फिञ् । तस्माद् यूनि प्रागुदीव्यतोऽण् तस्य लुक् तैकायनिः पिता पुत्रश्च ।

एतेभ्यः किम् ? शिवादिभ्योऽण तस्माद् यूनि अत इञ् तस्य न लुग् भवति, कौहडः पिता, कौहडिः पुत्रः । यूनीति किं वामरथ्यस्य छात्रा वामरथाः । कुर्वादिभ्यो ण्यः इति ण्यः, तस्मात् कण्वादिभ्यो गोत्रे इति शैषिकोऽण् । तस्य लुग् न भवति । अणि नोरिति किम् दाक्षेरपत्यं युवा दाक्षायणः । तत्र वार्त्तिकमिदं प्रवृत्तम् । अब्राह्मणगोत्रमात्रात् युव प्रत्ययस्योपसंख्यानं कर्त्तव्यम् ।

अत्र भाष्ये त्रीणि वाक्यानि उपन्यस्तानि । अणिनोर्लुकि तद्-राजात् युवप्रत्ययस्योपसंख्यानं कर्त्तव्यम् । अस्योदाहरणम् "बौधिः पिता बौधिः पुत्रः । औदुम्बरि पिता औदुम्बरिः पुत्रः । बुधोदुम्बराभ्यां शाल्वावयवलक्षण इञ् तदन्तात् यूनि यञिञोश्चेति फक् तस्य लुक् अनणिन्नर्थमेतत् वचनम् ।

क्षत्रियगोत्रमात्राद् युवप्रत्ययस्योपसंख्यानम् इति द्वितीयं वाक्यम् । मात्रशब्दो व्याप्त्यर्थः । तद्राजादिति नियमो नास्ति । क्षत्रियगोत्रमात्रादिति। तेन जाबालशब्दात् अत इनो अतद्राजादपि परस्य फको लुक् भवति जावालिः पिता पुत्रश्च । एवमर्थं द्वितीयं वचनम् ।

अब्राह्मणगोत्रमात्रात् युवप्रत्ययस्योपसंख्यानमिति तृतीयं वाक्यम् । एतदेव काशिकाकारेणोपन्यस्तम् । अत्रापि मात्रशब्दो व्याप्त्यर्थः । क्षत्रियादि-

त्यपि नियमो नास्ति अब्राह्मणगोत्रमात्रादिति तेन वैश्यगोत्रादपि भवति । भाण्डिजङ्घकर्णखरकौ वैश्यौ ताभ्यामत इञ् । तदन्तात् फको लुक् । व्याकपत्वाच्चेदमुपन्यस्तं वृत्तिकारेण ।

उदाहरणानि तु - बौधिः पिता, पुत्रश्च । जावालिः पिता जावालिः पुत्रः । औदुम्बरिः पिता पुत्रश्च । भाण्डीजङ्घिः, पितापुत्रश्च । शाल्वावयवलक्षण इञ् तस्मात् फक् तस्य लुक् । इति दिक् ।

106- <u>यनादीनामेकद्वयोर्वा तत्पुरुषे षष्ठ्या उपसंख्यानम्</u>

यननोश्च (2/4/64) इति सूत्रे भाष्ये काशिकायाञ्च वार्त्तिकमिदं पठितम् । यनोऽनश्च गोत्रप्रत्ययस्य बहुषु वर्तमानस्यास्त्रीलिङ्गस्य च लुग् भवति । बहुषु तेनैवास्त्रियाम् गोत्रे इति चानुवर्तते । गर्गादिभ्यो यञ् गर्गा, वत्साः । अनः खल्वपि । अनृष्यानन्तर्ये विदादिभ्योऽञ् विदाः, उर्वाः । बहुषु इत्येव गार्ग्यः । तेनैवेत्येव प्रियगार्ग्याः । प्रियवैदाः । अस्त्रियामित्येव गार्ग्यः स्त्रियः । वैद्यः स्त्रियः । गोत्र इत्येव । द्वीपादनु समुद्रं यञ् द्वैप्याः । उत्सादिभ्योऽञ् औत्साश्छात्राः ।

तत्र यत्रादीनां बहुषु लुक् उच्यमाने एकत्वे द्वित्वे च प्राप्नोति अतः वार्त्तिकमिदं प्रवृत्तम् । यत्रादीनामेकद्वयोर्वा तत्पुरुषे षष्ठ्या उपसंख्यानम् । एकद्वयोरिति च संख्याप्रधानोऽयं निर्देशः । यथा द्व्येकयोर्द्विवचनैकवचने इति एकत्वद्वित्वयोरिति यावत् । अन्यथा हि बहुत्वाद् बहुवचनं स्यात् । आदिशब्दोना-

नादीनां बहुषु लोपिनां ग्रहणम् । व्यवस्थायान्वादिशब्दः । गार्ग्यस्य कुलं गार्ग्य-कुलं गर्गकुलं वा । गार्ग्ययोः कुलं गार्ग्यकुलम्, गर्गकुलम् वा । एवं वैदेस्य कुलं वेदेकुलं विदकुलं वा । वैदयोः कुलं वैदकुलं विदकुलं वा ।

यनादीनामिति किम् आङ्गस्य कुलम् आङ्गकुलम् । आङ्गयोः कुलम् । एकद्वयोरिति किम् गर्गाणां कुलं गर्गकुलम् । अत्र नित्यं भवति । तत्पुरुष इति किं गार्ग्यस्य समीपमुपगार्ग्यम् । षष्ठ्या इति किमर्थम् । शोभनगार्ग्यः परमगार्ग्यः । अत्र उपसंख्यानशब्दस्य प्रतिपादनमर्थः । तच्चेत्थं वा यौ इत्यतो मण्डूकप्लुतिन्यायेन वा ग्रहणमनुवर्तते । चकारो वात्रानुक्तसमुच्चयार्थः क्रियते । तेन यनादीनामेकद्वयोर्वा तत्पुरुषे षष्ठ्या लुग् भवति । यदि वेत्यनुवर्तते तदा बहुष्वपि विकल्पः स्यात् व्यवस्थितविभाषाविज्ञानात् न भविष्यति । यदि च वा ग्रहणं तत्र वादेशार्थं तर्हि प्रकृते सूत्र अनुक्तसमुच्चयार्थक चकारग्रहणादेव सिध्यतीति वार्त्तिकं न करणीयम् । स्पष्टप्रतिपत्तये च वार्त्तिकारम्भ इति दिक् ।

107- गापोर्ग्रहणे इण्पिबत्योर्ग्रहणम्

गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु {2/4/77} इति सूत्रे भाष्ये काशिकायान्च पठितमिदम् । गातिस्थाघु पा भू इत्येतेभ्यः परस्य सि चो लुग् भवति परस्मैपदेषु । लुगनुवर्तते न श्लुः । अगात् इणो गा लुङि इति गादेशः । अपात्, अभूत्, भूसुवोस्तिङि इति गुणप्रतिषेधः ।

तत्र गापोर्ग्रहणे इण्पिबत्योर्ग्रहणम् । इणो योगा शब्दः पिबतेर्यः

पाशब्द इति वक्तव्यम् । अत: गायते: पातेश्च न भवति अगासीन्नत: अपासीत् धनम् इति । वस्तुतस्तु वार्त्तिकं न कर्त्तव्यं तथाहि । इणादेशस्य ग्रहणं तावत् गातीत्यत एव श्तिपा निर्देशात् विज्ञायते श्तिपा हि विकरणशून्य एवमर्थो निर्देश: क्रियते । लुग् विकरणस्यैव ग्रहणं यथा स्यात् इति । अन्यथा हि यदि गायतेर्ग्रहण-मिष्टं स्यात् तदा गा इत्येव ब्रूयात् । एवं तर्हि गामादाग्रहणेष्वविशेष: इत्यु-भयोरपि ग्रहणं भविष्यति किं श्तिपा निर्देशेन । तस्मादयमेव श्तिपा निर्देशो ज्ञापयति इणादेशस्यैवेदं ग्रहणम् । न गायतेरिति । पाग्रहणे पिबतेरेव ग्रहणमित्ये-तदपि लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहणम् इत्यनया परिभाषया विज्ञायते इति दिक् ।

108- सप्तम्या ऋद्धिनदीसमाससंख्यावयवेभ्यो नित्यमिति वक्तव्यम्

इदं वार्त्तिकं तृतीया सप्तम्योर्बहुलम् (2/4/84) इति सूत्रे महाभाष्ये काशिकायाञ्च पठितम् । पूर्वेण नित्यमं भावे प्राप्ते तृतीया सप्तम्योर्विभक्त्यो-र्बहुलमम्भाव: स्यात् । अव्ययीभावे । उपकुम्भेन कृतम्, उपकुम्भं कृतम् उपकुम्भे निधेदीति उपकुम्भं निधेति । तत्र विकल्पेन प्राप्ते वार्त्तिकं प्रवृत्तम् सप्तम्या इति सुमद्रं, मद्राणां समृद्धिरित्यर्थ: । तत्र नित्यमम्भाव: । उन्मत्त गङ्गम्, लोहित-गङ्गम् । उन्मत्ता लोहिता वा गङ्गा यत्रेति । अन्यपदार्थे च संज्ञायामिति समास: । एकविंशति भारद्वाजम् । संख्यावंश्येनेति समास: । तत्र वर्त्तिपदानां स्वार्थोपसर्जनार्थान्तराभिधायित्वात् भारद्वाजशब्दस्यैकत्व विशिष्टेऽर्थोन्तरे

संक्रमात् अनो लुगभावः ।

एतदपि वार्त्तिकं न कर्त्तव्यं बहुलग्रहणादेव सिद्धे । तस्मात् बहुनार्थप्रदर्शनपरमेतत् वार्त्तिकमिति दिक् ।

।। इति द्वितीयाध्यायस्य चतुर्थः पादः समाप्तः ।।



# उपसंहार:

## वार्त्तिककार-परिचय:

पाणिनीयाष्टाध्यायीमधिकृत्याचार्यैर्वैयाकरणैर्वार्त्तिकानि रचितानि। तेषु केषाञ्चिदेव नामानि समुपलभ्यन्ते । अन्येषां तु अन्ये, अपरे, केचिदिति सर्वनामपदैरेव निर्देशो दृश्यते । महाभाष्ये कात्यायन-भारद्वाज-सुनाग कोष्टुबवाऽवव्याघ्रभूति वैयाघ्रपद्यानां वार्त्तिककाराणां नामानि उपलभ्यन्ते । तत्र प्राधान्येन कात्यायन-महर्षिप्रणीत वार्त्तिकानां व्याख्यानं भाष्ये दृश्यते ।

वार्त्तिकं नाम उक्तानुक्तदुरुक्तविचारशास्त्रम् । वृत्ति: लक्ष्ये शास्त्रप्रवृत्ति: तस्या व्याख्यानं वार्त्तिकम् ।

अष्टाध्यायी वार्त्तिककारेषु श्रेष्ठ: कात्यायन इति नातिरोहितम्। मुनित्रयेऽप्यमन्यतम: पाणिनीय व्याकरणपोषक: ख्यातिं मर्हतीमुपजगाम । आक्षेपसमाधानाभ्यां सूत्रतात्पर्यं वर्णयतोऽस्य प्रतिभासम्पत्ति: सुतरां लक्ष्यते । क्वचित् सूत्राक्षेपेण सूत्रप्रत्याख्यानेन च सूत्रकारेण विरोधो लक्ष्यते । यथा सम्प्रसारणसंज्ञासूत्र इग्यण: सम्प्रसारणम् (1/1/45) इति वाक्यसंज्ञापक्षे वर्णसंज्ञापक्षे चासमञ्जसमिति प्रतिपादितम् । उपदेशेऽजनुनासिक इत् (1/3/2) इति सूत्रम् उपदेशेनेऽनुजनुनासिक इत् इत्येवं रूपेण परिवर्त्तितमिति । एवं बहुषु स्थलेषु सूत्रकारवार्त्तिककार वैमत्यं दृश्यते । महाभाष्ये च सर्वं समाहितम् ।

अस्य कात्यमेधाजिद्वररुचिप्रभृतीति नामान्तरण्यपि प्रसिद्धानि । अस्य प्रादुर्भावकाल: विक्रमशताब्दीत: 2700 वर्ष पूर्वं इतीतिहासकारैर्निर्धारितं वार्त्तिकानाञ्च पाणिनीयव्याकरणे महद्वैशिष्ट्यं वर्तते । वार्त्तिककार: भाष्यप्रमाणात् दाक्षिणात्य इति गम्यते । प्रथमाह्निके भाष्ये "यथा लौकिक-वैदिकेषु इति वार्त्तिकव्याख्यानावसरे प्रिय तद्धिता दाक्षिणात्या इति महाभाष्यकार एनमुपहसति । तेन ज्ञायते दाक्षिणात्योऽयमिति । महाभाष्यकारस्यापि पतंजलेर्वार्त्तिककारे कात्यायने महानादर आसीदिति तत्र तत्र भाष्यावलोकनेन गम्यते । आचार्यपदेन भवत् पदेन च निर्देश: वार्त्तिककारे भावातिशयो गम्यते भाष्यकारस्य।

वार्त्तिकातिरिक्ताऽपि कात्यायनकृतिरस्तीति ज्ञायते । महाभाष्ये पतन्जलि: किमपि वाररुचं काव्यं निर्दिष्टवान् । यस्यापरं नाम स्वर्गारोहणमिति । प्रस्तुतस्य काव्यस्योल्लेख: कृष्णचरिते काव्ये एवमुपलभ्यते -

य: स्वर्गारोहणं कृत्वा स्वर्गमानीतवान् भुवि ।
काव्येन रुचिरेणैव ख्यातो स्वररुचि: कवि: ।।

न केवलं व्याकरणं पुपोष,
दाक्षीसुतस्येरित वार्त्तिकैर्य: ।
काव्येऽपि भूयोऽनुचकार तं वै
कात्यायनोऽसौ कविकर्मदक्ष: ।।

महाभाष्ये प्रथमाह्निके भ्राजसंज्ञकश्लोकानां प्रसङ्गोऽस्ति । तेषां रचयिता कात्यायन इति कैयटादयो आचार्या मन्यन्ते । एवमन्या अपि कृतय: संभविष्यन्ति ।

## कात्यायनवार्त्तिकवैशिष्ट्यम्

पूर्वं वार्त्तिकलक्षणमुक्तम् । पाणिनीयव्याकरणे कात्यायनवार्त्तिकानामतिमहत्त्वमस्ति । वार्त्तिकानामभावे व्याकरणमपुष्टमेव स्यात् । प्रदीपवार्त्तिकेव वार्त्तिकं प्रकाशयति पाणिनीयशास्त्ररहस्यम् ।

कात्यायनवार्त्तिकानां कियती संख्या इति वक्तुं न शक्यते । वार्त्तिकसंज्ञया न स्वतन्त्रः कश्चिद् ग्रन्थ उपलभ्यते । महाभाष्ये व्याख्येयत्वेन गृहीतान्येव तानि उपलभ्यन्ते । तत्र च वार्त्तिकेषु सूत्रार्थे आक्षेपः क्रियते तदनन्तरम् उदाहरण-प्रत्युदाहरणैश्च समाधानमिति एवं म क्रमेण सूत्रव्याख्यानमस्ति । प्रायशः कात्यायनः स्वयमेव ज्ञापकादिना व्याख्यानेन च सूत्रकाराभिप्रायं रक्षति । क्वचिच्च लक्ष्यानुरोधात् वार्त्तिकानि सिद्धान्तरूपेण स्थिरीकृतानि । तेषु सिद्धान्तरूपेण वार्त्तिककारसम्मतेष्वपि वार्त्तिकेषु बहूनां महाभाष्यकारैरन्यथोपपत्ति कृत्वा खण्डनं कृतम् । एवञ्च महाभाष्य खण्डभावशिष्टान्येव वार्त्तिकानि सिद्धान्तरूपेण काशिकादिषु ग्रन्थेषु वृत्तिरूपेषु पाठ्यन्ते । सूत्रैरसंस्कृतलक्ष्याणि संस्कर्तुं प्रायशो वार्त्तिकानि सम्मतानि । वाच्यवक्तव्योपसंख्यानान्तानि वार्त्तिकानि सूत्रशेषपूरणरूपेण विलसिन्तितराम् । बहुत्र च टीककारैः जिनेन्द्रादिभिः, वार्त्तिकानामन्यथा व्याख्यानं कृत्वा सूत्रेष्वेव गतार्थतां कुर्वन्ति एवं सर्वं तत्र तत्र वार्त्तिकसमीक्षावसरे उपपादितमस्माभिः ।

## काशिकावृत्तिः

व्याकरणशास्त्रे काशिकाया विशिष्टं महत्त्वमस्ति । यद्यपि

पाणिनिसूत्राणां वृत्तिग्रन्था बह्व आसन् । कुणिमायुरदेवनन्दी श्वोभूत्यादि प्रणीता: । तथापि अद्यत्वे काशिकावृत्तिरेव पाणिनीयसूत्राध्येतृणा शरणम् । यद्यपि सिद्धान्तकौमुद्यादयोग्रन्था अपि प्रसिद्धतरा सन्ति तथापि काशिकाया महत्त्वमतिरोहितम् ।

इयं काशिकावृत्तिर्वामनजयादित्याभ्यां द्वाभ्यामाचार्याभ्यां विरचिता । पन्चमाध्यायपर्यन्तं जयादित्येन विरचिता: शेषाश्चान्तिमास्त्रयोऽध्याया: वामनेन विरचिता । जयादित्यापेक्षया वामनस्य व्याख्यानं प्रौढतरं वर्तते । प्रचलितकाशिकावृत्तिरुभयो: कृतिरिति नात्र संदेहावसर: ।

काशिकाया: सुप्रसिद्धन्यासपदमन्जरीव्याख्याद्वयी पर्यालोचनया ज्ञायते यत् उभाभ्यामेव विद्वद्भ्यां वामनजयादित्याभ्यां सम्पूर्णामष्टाध्यायीमधिकृत्य स्वतन्त्रा वृत्तिर्विरचितेति । तथाहि काशिकाव्याख्यान्यासकारो जिनेन्द्रबुद्धि: न्यासग्रन्थे जयादित्यस्य वृत्तिमन्तिमेषु {6-7-8} त्रिषु अध्यायेषु दर्शयति । वामनस्य वृत्तिन्च पूर्ववर्त्तिषु पन्चाध्यायेषु विवृणोति । यथा -

{1} नास्ति विरोधो भिन्नकर्तृत्वात् । इदं हि जयादित्य वचनम् । तत् पुनर्वामनस्य । वामनकृतौ तु {अ0 3/1/33} तासिसिचोरिकात् उच्चारणार्थो नानुबन्ध: पठ्यते तेन विरोधो नाशङ्कनीय:" {न्यास: 3/1/33 - पृ0 524} अनेनोद्धरणेन सम्पूर्णग्रन्थस्य वृत्त्यो: प्रमाणं सुव्यक्तं जायते ।

{2} "आभाच्छास्त्रीयमसिद्धत्वमनित्यम् । अनित्यत्वन्तु तस्य तत्रैव {अ0 6/4/22} प्रतिपादयिष्यते जयादित्येन {न्यास: 3/1/33 - पृ0 524} अनेनाप्येतत्

स्पष्टं ज्ञायते यज्जयादित्येन षष्ठाध्यायस्यापि वृत्तिर्विरचितेति ।

§3§ "प्रत्ययपक्ष एव वामनाचार्यस्य तत्राभिमतः" §हरदत्तमिश्रकृता पदमन्जरी - पृ० 428§ । अत्र पदमन्जरी कृतः "तत्र" इति प्रयोग स्त्रीप्रत्ययप्रकरणस्य चतुर्थाध्यायस्यैव बोधकः । तत्र च वामनेन प्रत्ययपक्षोऽभिमत इति हरदत्ताभिप्रायः । अनेन वामनस्य पूर्वभागेऽपि वृत्तेः सद्भावः सिद्ध एव। उभयवृत्त्योः कदा कथन्च सम्मिश्रणमभूत् इति तु न विद्मः ।

## काशिकावृत्तेर्वैशिष्ट्यम्

उपलब्धासु वृत्तिषु प्राचीनतमेयं वृत्तिः । अस्यां प्रतिसूत्रमनुवृत्तिः वृत्तिः, उदाहरणानि, प्रत्युदाहरणानि च शङ्कासमाधाननिर्देश पुरःसरमुदाहरणानि च शङ्कासमाधाननिर्देशपुनःसरमुपलभ्यन्ते । प्रौढतया च तत् प्रतिपादनं कृतं वर्तते काशिकावृत्तौ उदाहरणानि प्राचीनान्येवोपलभ्यन्ते । येन परम्परायाअपि रक्षा जायते । कतिपयानि स्थलानि वृत्तौ महाभाष्यविरुद्धान्यपि सन्ति । तत्रापि शोभना उपपत्तिर्दृश्यते । बहुषु स्थलेषु अन्यव्याकरणग्रन्थेभ्योऽपि अनेकविषयाणां प्रतिपादनं कृतम् । गणपाठानामपि तत्रैव सूत्रे उपलम्भो दृश्यते । ऐतिहासिकदृष्ट्यापि वृत्तिग्रन्थोऽतिमहत्त्वपूर्णोऽस्ति । काशिकावृत्तिग्रन्थे अष्टाध्यायीक्रमेणैव सूत्राणां व्याख्यास्ति येन सरलतया सूत्रार्थ सूत्रदेशादीनां परिज्ञानं जायते । भाष्यवार्त्तिकमतसारमादाय रचिता वृत्तिरियमतीव वैयाकरणामुपकारिणी । अस्या वृत्तेः द्वौ व्याख्याग्रन्थौ मुख्यौ स्तः । न्यासः पदमन्जरी च । न्यासस्यापरनाम काशिकाविवरण पन्जिका । आचार्यो जिनेन्द्रबुद्धिः

प्रामाणिको बौद्धाचार्यसीत् । अस्य समय 782-807 विक्रम संवत् । न्यासग्रन्थः काशिकाध्येतृणां कृते महानुपकारकः । अपरश्च टीकाग्रन्थो हरदत्तमिश्रेण कृतः पदमन्जरी नाम्ना । अय ग्रन्थः प्रौढः प्रायेण कैयटाश्रितः । बहुपाण्डित्य-प्रदर्शनपूर्णोऽयं ग्रन्थस्तत् कर्तुः प्रकृष्टवैदुष्यं प्रकटयति । एवं व्याख्याद्वयीविलसिता काशिकावृत्तिरत्यन्तशोभां धत्ते । काश्यां प्रचलितत्वात् काशिकेति नाम्ना प्रसिद्धमुपगता वृत्तिरियं सत्यपि सिद्धान्तकौमुद्यादिग्रन्थजाते स्ववैज्ञानिकपद्धत्या-द्यापि पूर्ववदेव विशिष्टस्थानं बिभर्त्ति । प्राचीनव्याकरणाध्येतृणां कृते महानुप-कारकोऽयं ग्रन्थः । सिद्धान्तकौमुद्यादिग्रन्थानां प्रयोगानुसारं सूत्रव्याख्यानभूताना-मध्ययनेऽपि सूत्राणां क्रमभङ्गात् न तथा स्पष्टतया सूत्रवृत्तिरधिगता भवति । यथा काशिकाध्ययनात् सिद्धान्तकौमुद्यादिग्रन्थाध्ययनादपि काशिकाध्ययनस्या-पेक्षा भवति । काशिकाध्ययनात् तु न तस्यापेक्षेति अस्ति महत्त्वं काशिकाग्रन्थस्य। कस्मात् सूत्रात् कियदवधिकं किं पदमनुवर्तते किन्च निवर्तते इति काशिकाध्ययनादेव सारल्येन ज्ञायते । तत्तत्सूत्रे गणपाठानां वार्त्तिकानान्च पाठोऽपि काशिका-ग्रन्थे महत्त्वं भजते । वृत्तिरपि स्पष्टा सोदहरणां विलसतितरामिति ।

## व्याख्याद्वयी

काशिकावृत्तेरस्ति व्याख्याद्वयी न्यासपदमन्जरीनाम्नीति पूर्व-मुक्तम् । उभे अपि टीके महत्त्वपूर्णे स्तः । तत्र जिनेन्द्रबुद्धिबौद्धे रचिता न्यास-व्याख्या अतीव सरला उपयोगिनी । जिनेन्द्रबुद्धेः समय-समयविद्भिरष्टमशताब्दी इति निश्चितम् । अनेन क्वचिदपि स्वविषये किन्चिदपि नोल्लिखितम् । अतः

अस्या विषयेऽज्ञानमेवास्ति । टीका तु अस्यात्यन्तप्रामाणिकता भजते । भाष्य-कैयटानुसारिणी न्यासव्याख्या । कात्यायनवार्त्तिकानान्च प्रायः सूत्रैरेव मन्त-गतार्थता अनेन उक्ता । तत्र तत्र व्याख्यावसरे स्पष्टीकृतमस्माभिः । इयं व्याख्या अतिप्राचीनास्ति । पदार्थतत्त्वविवेचने प्रवृत्त आचार्य क्वचिदपि स्वमिष स्वपाण्डित्याडम्बरं न प्रकटयति । न व्याख्यातव्यमुपेक्षते । अतः महानुपयोगोऽस्य ।

पदमन्जरी

काशिकाया व्याख्या श्रीमता हरदत्तमिश्रेण लिखिता । इयन्च पाण्डित्यपूर्णा कैयटोक्तिमनुसृता प्रामाणिकी च । हरदत्तमिश्रेण स्वविषये किन्चिल्लिखितम् । यथा -

तातं पद्मकुमाराख्यम्, प्रणम्याम्बां श्रियं तथा ।
ज्येष्ठन्चाग्नि कुमाराख्यम्, आचार्यमपराजितम् ।।

यश्चिराय हरदत्तसंज्ञया, विश्रुतो दशसु दिक्षु दक्षिणः ।
उज्जहार पदमन्जरीमसौ, शब्दशास्त्रसत्कारपादपात् ।।

(पदमन्जरी - मङ्गलश्लोकौ)

अनेन अस्य पिता पद्मकुमारः, माता श्री, ज्येष्ठो भ्राता अग्निकुमारः, गुरुश्च अपराजित इति ज्ञायते । कुत्रत्य निवासी अयमिति न ज्ञायते । समयश्चास्य द्वादशशताब्दीतः पूर्वमेव निर्धारितः ।

स्वपाण्डित्यविषयेऽपि अनेन लिखितम् -

प्रक्रिया तर्कगहने प्रविष्टो हृष्टमानसः ।
हरदत्तहरिः स्वैरं विचरन् केन वार्यताम् ।।

प्रक्रियाकान्तारे विचरतोऽस्य केसरिण इव पन्था अनिवार्य अस्ति । वस्तुतः सत्यमिदम् । पदमन्जरीव्याख्याध्ययनाज्ज्ञायते पदस्य व्याकरणशास्त्रे महापाण्डित्यमस्ति । कैयटाचार्याश्रिता व्याख्यास्य क्वचिच्च कैयटशब्दानेवाविकलमवतारयति । क्वचिच्च तद् विवृतिं करोति । अस्य व्याख्याशैली अतीवप्रौढास्ति ।

न्यासग्रन्थे वार्त्तिकानां प्रायः सर्वत्रैव सूत्रेणैव गतार्थता प्रदर्शिता। पदमन्जरीग्रन्थे तु न तथोपलभ्यते । नहि सर्वत्र वार्त्तिकानां सूत्राक्षरैर्गतार्थता प्रदर्शिता । क्वचिच्च गतार्थतापि उक्ता । अनेन ज्ञायते यत् अस्य वार्त्तिकानां पृथक् उपयोगित्वेऽस्त्यादरः । स्पष्टप्रतिपत्तये वा तेषामवस्थितिरङ्गीकृता । सूत्रार्थव्याख्यानन्च उभयोष्टीकयोः समम्एवास्ति । पदमन्जर्यां विस्तरेण विवेचनमाक्षेपसमाधानाभ्यामस्ति वृत्तीनामिति विशेषः ।

एवमस्मिन् शोधप्रबन्धेऽस्माभिः वार्त्तिकानां समीक्षा-व्याख्याद्वयीमवलम्ब्य भाष्यकैयटानुसारे प्रस्तुता । अयन्च प्रबन्धो विदुषां छात्राणान्च मुदे उपकाराय भवेदिति सम्वः शिवः प्रार्थ्यते ।

-x-

पाणिनेयेषु सूत्रेषु कात्यायनमहर्षिणा ।
वार्त्तिकानि प्रणीतानि बहुनि तत्त्वचिन्तया ॥ 1 ॥

भाष्यकारेण ख्यातानि भाष्ये लक्ष्यैकचक्षुषा ।
काशिकायां निबद्धानि वृत्तौ यानि प्रयोगत: ॥ 2 ॥

तत्र द्वितीयमध्यायं यावदत्र समीक्षणम् ।
प्रबन्धे न्यायतो युक्त्या कृतमेवं यथामति ॥ 3 ॥

उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्तते ।
तं शास्त्रं वार्त्तिकंप्राहुर्वार्तिकज्ञा मनीषिण: ॥ 4 ॥

वार्त्तिकानां न येषां तु प्रत्याख्यानं पतन्जलि: ।
कृतवान् तानि सिद्धान्तरूपेण स्वीकृतानिह ॥ 5 ॥

सर्वत्र व्याकृतौ शास्त्रे कौमुदीकाशिकादिषु ।
लक्ष्यसंस्कारसिद्ध्यर्थमाचार्यै: सूत्रवत् तथा ॥ 6 ॥

आदरेण निबद्धानि व्याख्यातानि प्रयोगत: ।
प्रत्याख्यानं न सर्वेषां कर्तुं शक्यं कथन्चन ॥ 7 ॥

अद्भुतं शास्त्रमेतद्धि पाणिनीयपदेषु वै ।
आक्षेपस्तत्समाधानं ज्ञापकै: सूत्रवाक्यत: ॥ 8 ॥

नियमात् न्यायतो लोकात् उपसंख्यानतोऽपि च ।
न्यूनतापूर्त्तिवाक्यैश्च कृतमत्र महर्षिणा ॥ 9 ॥

व्याख्यानभूतं सूत्राणां शास्त्रमेतत् पुरातनम् ।
शब्दसाधुत्वसिद्ध्यर्थं कृतं कात्यायनेन तु ॥ 10 ॥

नप्रद्वेषाम्नवामर्षात् सूत्रकारस्य पाणिनेः ।
प्रवृत्तं वार्त्तिकं शास्त्रं तदर्थप्रतिपत्तये ॥ ॥ ॥

उपसंख्येयवाच्यान्तं वक्तव्यान्तञ्च वार्त्तिकम् ।
प्रवृत्तिं व्याख्येयमित्येव तदर्थमपरे विदुः ॥ 12 ॥

व्याख्यानञ्च तदर्थस्य सूत्रागत पदैः परम् ।
वैयाकरणाः प्रकुर्वन्ति विभाषाबाहुलादिभिः ॥ 13 ॥

प्रकृते शोधप्रबन्धेऽस्मिन् यथायोगं विशेषतः ।
भाष्यप्रदीपग्रन्थादेः सम्यगालोचनात् मतात् ॥ 14 ॥

ब्रह्मानन्दगुरोः शिष्यः सर्वलोकानुकम्पिनः ।
धर्मज्ञस्य कृतज्ञस्य ब्रह्मज्ञस्य कृतात्मनः ॥ 15 ॥

राठस्थिताश्रमे पुण्ये हमीरपुरमण्डले ।
निवसन् सुजनैः सार्धं विद्वभिः ब्रह्मवित्तमैः ॥ 16 ॥

गुरूणां कृपया लब्धप्रज्ञः कृतपरिश्रमः ।
ब्रह्मप्रकाशनामाऽहं कृतवान् तत् समीक्षणम् ॥ 17 ॥

सम्भाव्या बहवो दोषा मम स्वल्पधियः कृतौ ।
क्षन्तव्यास्ते समाधेयाः सुधीभिः गुणग्राहिभिः ॥ 18 ॥

गुणास्तु प्रीतये तेषां भवेयुर्यदि सन्तीह ।
सतां व्याकृतिशास्त्राम्भो निधिपारं गतात्मनाम् ॥ 19 ॥

सैषा वार्त्तिकवाक्यानां समीक्षात्मकृतिर्मया ।
अर्पिता प्रीतये भूयात् भवानी विश्वनाथयोः ॥ 20 ॥

॥ इति शम् ॥

समाप्तोऽयं शोधनिबन्धः

## --पुस्तकानां सूची--

| | | प्रकाशनस्थानम् |
|---|---|---|
| 1- | काशिकावृत्तिन्यास पदमन्जरीसहिता | प्राच्य-भारती-प्रकाशनम् |
| 2- | अष्टाध्यायी | |
| 3- | महाभाष्यम् प्रदीपोद्द्योतसहितम् | चौखम्बा, वाराणसी |
| 4- | महाभाष्यम् प्रदीपोद्योतसहितम् | मोतीलाल बनारसीदास, दिल्ली |
| 5- | सिद्धान्तकौमुदी बालमनोरमा तत्त्वबोधिनी सहिता | मोतीलाल बनारसीदास, दिल्ली |
| 6- | लघुशब्देन्दुशेखर: | भार्गव पुस्तकालय, गायघाट, वाराणसी |
| 7- | वैयाकरणभूषणसार: | |
| 8- | लघुमन्जूषा | चौखम्भा, वाराणसी |
| 9- | परमलघुमन्जूषा | ,, |
| 10- | मनोरमा शब्दरत्नसहिता | ,, |
| 11- | न्यायसिद्धान्तमुक्तावली दिनकरी सहिता | ,, |
| 12- | शास्त्रदीपिका | |
| 13- | परिभाषेन्दुशेखर: भूतिसहित: | चौखम्भा, वाराणसी |

xxxxx

